| विषयः | पृष्ठसंख्या | श्लोकसंख्या |
|---|---|---|
| तत्र पृथ्वीराजस्य चन्देन समागमः तत्साहाय्येन शहाबुद्दीनवधश्च ... ... | १०८–११३ | १३३–१६४ |
| स्वदेशमागत्य पृथ्वीराजस्य स्वर्गमनम् ... ... ... ... | ११३ | १६५–१६६ |

## एकादशः सर्गः

| | | |
|---|---|---|
| तत्सुतप्रह्लादवर्णनम् ... ... ... ... ... ... | ११४ | १–२ |
| तत्सुतगोविन्दराजवर्णनम् ... ... ... ... ... ... | ११४ | ३ |
| तत्सुतवीरनारायणवर्णनम् ... ... ... .. ... ... | ११४ | ४ |
| तत्सुतवाग्भटवर्णनम् ... ... ... ... ... ... | ११४ | ५ |
| तत्सुतजैत्रसिंहवर्णनम् ... ... ... ... ... ... | ११४ | ६ |
| जैत्रसिंहात् हम्मीरदेवस्योत्पत्तिः ... ... ... ... ... | ११४ | ७ |
| हम्मीरदेवयशोवर्णनम् ... ... ... ... ... ... | ११५–११७ | ८–२१ |
| हम्मीरदेवस्य पट्टनपुरं प्रति प्रस्थानम् ... ... ... ... ... ... | ११७ | २२–२५ |
| तिलद्रोणिनदीवर्णनम् ... ... ... ... ... ... | ११७–११८ | २६–२७ |
| पारियात्रगिरिवर्णनम् तत्र राज्ञा कृताया बिल्वेश्वरपूजाया वर्णनञ्च ... | ११८–११९ | २८–३७ |
| षट्पुरवर्णनम् ... ... ... ... ... ... | ११९ | ३८ |
| हम्मीरस्य पट्टनपुरप्रवेशश्चर्मण्वतीस्नानं मृत्युञ्जयार्चनञ्च ... ... | १२० | ३९–४१ |
| हम्मीरस्य सूर्यग्रहणे तुलादानवर्णनम् ... ... ... ... ... | १२०–१२२ | ४२–५६ |
| हम्मीरकृतयज्ञस्य वर्णनम् ... ... ... ... ... ... | १२२–१२३ | ५७–६३ |
| अलाउद्दीनभ्रातुरुलूगखानस्य रणस्तम्भपुराक्रमणं हम्मीरदेवसेनापतिना रणमल्लेन पराजितस्य तस्य पलायनञ्च ... ... ... ... | १२४ | ६४–७० |
| अलाउद्दीनस्य रणस्तम्भपुराक्रमणम् ... ... ... ... ... | १२४–१२५ | ७०–७३ |
| तच्छ्रुत्वा हम्मीरस्य रणस्तम्भपुरं प्रति प्रस्थानम् ... ... ... | १२५ | ७४ |

## द्वादशः सर्गः

| | | |
|---|---|---|
| हम्मीरस्य रणस्तम्भपुरप्रवेशः ... ... ... ... ... | १२६ | १–२ |
| अलाउद्दीनेन प्रेषितस्य दूतस्य हम्मीरसविधे आगमनं स्वस्वामिसन्देशवर्णनं तत्सन्देशमस्वीकृत्य हम्मीरेण दूतविसर्जनञ्च ... ... ... ... | १२६–१३२ | ३–४३ |
| स्वपक्षविद्रोहिणा रणमल्लेन सहितस्य अलाउद्दीनस्य विशालसेनाया वर्णनम् ... | १३२–१३३ | ४४–४७ |
| हम्मीरकृतं समयनृशंसतावर्णनं कृतज्ञमहिमाशाहादिभिर्यवनवीरैः सह हम्मीरदेवस्य दुर्गाद्युद्धभूमावतारश्च ... ... ... ... ... | १३३–१३४ | ४८–५४ |
| हम्मीरमहिषीनां 'जौहर' वर्णनम् ... ... ... ... ... | १३४ | ५५ |
| हम्मीरस्याऽलाउद्दीनेन सह युद्धवर्णनं हम्मीरदेवस्य वीरगतिप्राप्तिश्च ... | १३४–१३७ | ५७–७७ |

## त्रयोदशः सर्गः

| | | |
|---|---|---|
| हम्मीरदेवस्य सप्तमपूर्वजस्य पृथ्वीराजस्य भ्रातुर्माणिक्यराजस्य तद्वंश्यानां चण्डराज-भीमराज-विजयराज-रयण-कोल्हणगङ्गदेवानाञ्च वर्णनम् ... | १३८–१३९ | १–१२ |
| गङ्गदेवसुतदेवसिंहवर्णनम् ... ... ... ... ... ... | १३९ | १३ |
| तत्सुतसमरसिंहवर्णनम् ... ... ... ... ... ... | १३९ | १४ |

| विषयः | पृष्ठसंख्या | श्लोकसंख्या |
|---|---|---|
| तत्सुतनरपालवर्णनम् ... ... ... ... ... ... | १३९ | १५ |
| तत्सुतहम्मीरवर्णनम् ... ... ... ... ... ... | १४० | १६ |
| तत्सुतवरसिंहवर्णनम् ... ... ... ... ... ... | १४० | १७ |
| तत्सुतभारमल्लवर्णनम् ... ... ... ... ... ... | १४० | १८ |
| तत्सुतनर्मदवर्णनम् ... ... ... ... ... ... ... | १४० | १९ |
| तत्सुतस्याऽर्जुनस्य वर्णनम् ... ... ... ... ... ... | १४०–१४१ | २०–२८ |
| अर्जुनेन जयन्त्याः पाणिग्रहणम् तस्याः सौन्दर्यवर्णनञ्च ... ... ... | १४१–१४२ | २९–३३ |
| पुत्रप्राप्त्यर्थं राज्ञोऽर्जुनस्य तपोवर्णनं भगवतो विष्णोः प्रसादात् जयन्त्यां सुर्जनस्योत्पत्तिश्च ... ... ... ... ... ... | १४२–१४३ | ३४–४५ |
| सुर्जनस्य शैशवयौवनयोः राज्याभिषेकस्य च वर्णनम् ... ... ... | १४४–१४६ | ४६–६७ |
| सुर्जनमहाराजस्य प्रतापवर्णनम् ... ... ... ... ... | १४७–१५० | ६८–८० |


## चतुर्दशः सर्गः


| | | |
|---|---|---|
| सुर्जनस्य जगमालसुतां कनकावतीं परिणेतुं जगमालपुरं प्रति प्रस्थानम् तत्र प्रवेशश्च ... ... ... ... ... ... ... | १५१ | १–५ |
| विवाहावसरे गीतनृत्यादिवर्णनम् वध्वास्तैलमर्दनस्नानादिवर्णनञ्च ... | १५१–१५२ | ६–१३ |
| कनकावतीशृङ्गारवर्णनं तस्याः विवाहमण्डपं प्रति प्रस्थानञ्च ... ... | १५३–१५५ | १४–२८ |
| सन्ध्यावर्णनं रात्रिवर्णनं चन्द्रोदयवर्णनञ्च ... ... ... ... | १५५–१६१ | ३१–६४ |
| कनकावतीपरिणयः सुर्जनकनकावतीदेव्योर्मिथः स्नेहवर्णनञ्च ... ... | १६१–१६५ | ६५–९३ |


## पञ्चदशः सर्गः


| | | |
|---|---|---|
| सूर्योदयवर्णनम् ... ... ... ... ... ... ... | १६६–१६८ | १–१४ |
| यानोन्मुखीं कनकावतीं प्रति तन्मातुरुपदेशः ... ... ... ... | १६८–१७० | १६–३३ |
| सुर्जनस्य भार्यया सह स्वराजधानीपरावर्तनम् ... ... ... | १७१ | ३५–३६ |
| ग्रीष्मवर्णनम् ... ... ... ... ... ... ... | १७१–१७४ | ३८–५५ |
| सुर्जनस्य वारिविहारवर्णनम् ... ... ... ... ... | १७४–१७८ | ५६–८० |


## षोडशः सर्गः


| | | |
|---|---|---|
| सुर्जनकनकावत्योः पुत्रस्य भोजस्य पराक्रमवर्णनम् ... ... ... | १७९ | १–४ |
| अकबरसेनायाः रणस्तम्भपुराक्रमणं तत्पराजयश्च ... ... ... | १७९–१८० | ५–११ |
| ततः प्रभूतसेनान्वितस्याऽकबरस्य रणस्तम्भपुराक्रमणम् तच्छ्रुत्वा सुर्जनस्य सेनया सह पट्टनपुरात् रणस्तम्भपुरं प्रति प्रस्थानम् ... ... ... | १८०–१८५ | ११–४२ |
| सुर्जनसेनया नद्युत्तरणम् रणस्तम्भपुरप्रवेशश्च ... ... ... ... | १८५–१८७ | ४३–५५ |


## सप्तदशः सर्गः


| | | |
|---|---|---|
| अकबरसेनाया वर्णनम् ... ... ... ... ... ... | १८८–१८९ | १–१० |
| सुर्जनाऽकबरसेनयोस्तुमुलयुद्धवर्णनम् ... ... ... ... ... | १८९–१९१ | ११–२६ |
| युद्धभूमौ सुर्जनपराक्रमवर्णनम् ... ... ... ... ... | १९१–१९६ | २७–५६ |

| विषयः | पृष्ठसंख्या | श्लोक संख्या |
|---|---|---|
| **अष्टादशः सर्गः** | | |
| अकबरसचिवस्य सुर्जनसविधे आगमनं सन्धिप्रस्ताववर्णनञ्च ... ... | १९७–२०० | १–२१ |
| तत्स्वीकृत्य सुर्जनेन अकबरात् नर्मदा-मथुरा-काशीनां भूभागानुपादाय तस्मै रणस्तम्भपुरदुर्गसमर्पणम् ... ... ... ... ... ... | २०० | २२–२३ |
| सुर्जनस्य नर्मदागमनम् ... ... ... ... ... ... | २०० | २४ |
| ततो मथुरागमनम् ... ... ... ... ... ... | २०० | २५ |
| यमुनावर्णनम् ... ... ... ... ... ... ... | २००–२०१ | २६–२९ |
| मथुरावर्णनम् ... ... ... ... ... ... ... | २०१–२०३ | ३०–४० |
| अश्मन्ततीर्थवर्णनम् ... ... ... ... ... ... | २०३ | ४१ |
| वृन्दावनवर्णनम् ... ... ... ... ... ... ... | २०३–२०५ | ४२–५५ |
| गोवर्धनवर्णनम् ... ... ... ... ... ... ... | २०५–२०६ | ५६–५८ |
| वर्षर्तुवर्णनम् ... ... ... ... ... ... ... | २०६–२०९ | ५९–७९ |
| **एकोनविंशतितमः सर्गः** | | |
| सुर्जनस्य प्रयागगमनम् ... ... ... ... ... ... | २१० | १ |
| गङ्गायमुनयोः सङ्गमवर्णनम् ... ... ... ... ... | २१०–२११ | २–६ |
| सुर्जनस्य काशीगमनम् ... ... ... ... ... ... | २११ | ७–८ |
| काशीवर्णनम् ... ... ... ... ... ... ... | २११–२१४ | १०–२४ |
| गङ्गावर्णनम् ... ... ... ... ... ... ... | २१४–२१५ | २५–२९ |
| सुर्जनस्य दानयशोवर्णनम् ... ... ... ... ... ... | २१५–२१७ | ३१–४२ |
| सुर्जनस्य काश्यां देहत्यागो ब्रह्मसायुज्यप्राप्तिश्च ... ... ... ... | २१७–२१९ | ४३–५० |
| **विंशतितमः सर्गः** | | |
| सभासदां शोकवर्णनम् ... ... ... ... ... ... | २२० | १–७ |
| भोजस्य राज्याभिषेकवर्णनम् ... ... ... ... ... | २२१–२२५ | ८–३५ |
| भोजस्य प्रतापवर्णनम् ... ... ... ... ... ... | २२५–२३१ | ३६–६३ |
| कविपरिचयः ... ... ... ... ... ... ... | २३१ | ६४ |

श्री:

## गौडीयमहाकविश्रीचन्द्रशेखरविरचितम्

# सुर्जनचरितमहाकाव्यम्

## प्रथमः सर्गः

**कार्यं प्रकाशयति कारणमन्तरेण स्वेच्छानुरूपविभवः प्रभुरव्ययो यः।**
**सामोपगीतशिवकीर्तननामधेयः श्यामः समग्रयतु सर्वसमीहितं नः ॥ १ ॥**

जो स्वयम्भू अपनी माया-शक्ति के द्वारा स्वयं को अधिष्ठान बनाकर इस सम्पूर्ण कार्य-प्रपञ्च को, जिसका मिथ्या होने के कारण वास्तव में कोई कारण नहीं है, अभिव्यक्त करते हैं, जिनकी इच्छा-मात्र से यह विश्व-प्रपञ्च अभिव्यक्त होता है अथवा जो अपनी इच्छा-मात्र से वामन और विराट् बन सकते हैं, जो सम्पूर्ण जगत् के स्वामी हैं, जो कूटस्थ नित्य और अविनाशी हैं, जिनके कीर्तन और नाम-स्मरण को महामङ्गलकारी बतलाते हुए सामवेद जिनकी महिमा का गान करते हैं, वे भगवान् विष्णु हमारे सम्पूर्ण मनोरथों को पूर्ण करें ॥ १ ॥

**यस्याः कृपालवसुधापरिशीलनेन निर्मात्यशेषमगुणोऽपि पुमान् पुराणः।**
**तां मन्महे निगमसारगिरामुपास्यामाशापुरां पुरुषकारखनिं पुरारेः ॥ २ ॥**

जिनकी कृपा के अणुमात्र अमृत को पाकर आदिपुरुष भगवान् विष्णु स्वयं निर्गुण होते हुए भी इस सारे संसार का निर्माण करने में समर्थ होते हैं तथा वेदों और शास्त्रों की सार-भूत वाणी जिनकी उपासना करती है उन (चौहाणवंशान्तर्गत हाड़ाकुल की कुलदेवता) भगवती आशापुरा देवी को हम भगवान् सदाशिव के पौरुष की खान मानते हैं (क्योंकि बिना शक्ति के 'शिव' 'शव' ही बने रहते हैं) ॥ २ ॥

---

(१) वस्तुतः अविद्यमानस्य कार्यप्रपञ्चस्य कारणरहितत्वात् कारणं विनापि कार्यविभासः संभवति यथोक्तं वेदान्तसम्प्रदायविद्भिः गौडपादाचार्यैः "संभूतेरपवादाच्च संभवः प्रतिषिध्यते। कोन्वेनं जनयेदिति कारणं प्रतिषिध्यते।" इति, अपि च "अतो वक्ष्याम्यकार्पण्यमजातिसमतां गतम्। यथा न जायते किंचिज्जायमानं समन्ततः॥" इति, "मायामात्रमिदं द्वैतमद्वैतं परमार्थतः।" इति च। स्वस्या इच्छाया अनुरूपो विभवः सर्गः यस्य सः। यद्वा स्वेच्छानुरूपो विभवः शरीरं यस्य सः, अणोरणीयसः महतो महीयसः परमेश्वरस्य वामन-विराड्रूपधारणसामर्थ्यात्। सामभिः उपगीतं शिवं मंगलं कीर्तनं नामधेयं च यस्य सः। कालिदासैरप्युक्तं रघुवंशे (१०, २१) "सप्तसामोपगीतं त्वां" इत्यादि।

(२) अगुणः निराकारनिर्गुणरूपः गुणरहितश्च। आशापुरा नाम चौहाणवंशान्तर्गतहाडाकुलदेवी यस्याः द्वे मन्दिरे बूँदीनगरे कोटानगरे च विराजेते। पुरारेः शिवस्य पुरुषकारस्य पौरुषस्य खनिं उद्गमरूपां, पौरुषस्य शक्तिरूपत्वात् शक्ति विना शिवे स्पन्दाऽभावात् च।

**शुम्भादिदम्भदलनेन विजृम्भमाणशम्भुप्रमोदभरपल्लवितप्रभावाम् ।**
**सम्भावितां नुतिभिरम्बुजसम्भवाद्यैः शाकम्भरीं भगवतीमनिशं भजामः ॥ ३ ॥**

शुम्भ आदि दैत्यों को मारकर उनके अभिमान को चूर कर देने के कारण उत्पन्न होने वाले भगवान् शिव के हर्षातिरेक से विकसित प्रभाव वाली तथा ब्रह्मा, विष्णु और अन्य देवताओं द्वारा प्रणामों से पूजित (साँभर नगर में स्थित चौहाणवंश की कुलदेवता) भगवती शाकम्भरी देवी का हम रात दिन भजन करते हैं ॥ ३ ॥

**पीयूषसारसरसान् भणितिप्रवाहान् मूकेऽपि वत्सलतया प्रतिपादयन्ती ।**
**देवी गिरां मयि चिराय विरामशून्यमाविष्करोतु करुणोपचितं प्रसादम् ॥ ४ ॥**

जो वात्सल्य के कारण गूंगे को भी अमृत के सार के समान सरस और मधुर शब्दों की धारा बहा देने में समर्थ बना देती हैं वे वाणी की देवी सरस्वती दया करके मुझे भी कभी न रुकनेवाला वरदान दें ॥ ४ ॥

**औचित्यमात्रमवलम्ब्य नमामि साधूनेतेषु मे किमपि नैव निवेद्यमस्ति ।**
**ये निर्निमित्तमुपकारपराः परेषामारोपितानपि गुणान् शतशाखयन्ति ॥ ५ ॥**

केवल परम्परागत औचित्य का निर्वाह करने के कारण ही मैं सज्जनों को प्रणाम करता हूँ। वास्तव में उनकी सेवा में निवेदन करने के लिये मेरे पास कुछ नहीं है। बिना किसी स्वार्थ के सदा दूसरों का उपकार करना ही सज्जनों का स्वभाव है। जैसे धरती में रोपे गये पौधे की सैकड़ों शाखायें फूट निकलती हैं वैसे ही सज्जन दूसरों के गुणों को सौगुना बढ़ा चढ़ा कर मानते हैं। अथवा सज्जन इससे भी अधिक हैं क्योंकि शाखायें तो सचमुच के पौधे से ही निकल सकती हैं, किन्तु सज्जन लोग दूसरों के 'आरोपित' अर्थात् कल्पित (वस्तुतः अविद्यमान) गुणों को भी सौगुना बढ़ाकर मानते हैं ॥ ५ ॥

**राज्ञामपारगुणसारधुरन्धराणां वंशानहं कृशमतिप्रसरो विवक्षुः ।**
**पद्भ्यामुदग्रगिरिशेखरमारुरुक्षोः पङ्गोर्विवेकविकलः पदवीं प्रपन्नः ॥ ६ ॥**

मैं दुर्बल-बुद्धि और अविवेकी होते हुए भी अपार गुणों में अग्रगण्य चौहाण-वंश के राजाओं का वर्णन करने की इच्छा कर रहा हूँ। मेरी यह इच्छा वैसी ही है जैसी कि किसी पंगु की उन्नत गिरिशिखर पर पैदल चढ़ने की इच्छा ॥ ६ ॥

**आज्ञाबलात् तदपि शूरजनस्य राज्ञः स्वान्तःस्थितेन हरिणा स्वयमीरितस्य ।**
**सोऽहं विहाय परिहासभयं सभायां लौल्येन साहसरसं सहसा प्रपन्नः ॥ ७ ॥**

अपने अन्तःकरण में स्थित भगवान् की प्रेरणा के कारण शूर-वीरों में अग्रगण्य राव सुर्जन ने मुझे यह महाकाव्य लिखने की आज्ञा दी है। अतएव उनकी आज्ञा को शिरोधार्य करके मैं, सभा में मेरा परिहास होगा इस भय को छोड़कर, चपलतावश सहसा यह महाकाव्य लिखने का साहस कर रहा हूँ ॥ ७ ॥

---

(३) शुम्भादिदैत्यदलनेन प्रकटितो यः शंभुप्रमोदभरः शिवस्य हर्षातिरेकः तेन पल्लवितो विकसितः प्रभावो यस्यास्ताम्। शाकम्भरी नाम चौहाणवंशकुलदेवी यस्याः मन्दिरं शाकम्भरी (साँभर) प्रदेशे विराजते।

(५) आरोपितान् वस्तुतः अविद्यमानान् भूमौ आरोपितांश्च।

**जिह्वाविलोलनविलासवशा द्विजिह्वा मूर्ध्ना धृता अपि नहि प्रकृतिं त्यजन्ति।**
**तेभ्यो न भीतिरिह भूपतिसुर्जनस्य जागर्ति जाङ्गलिकवत् करुणाविशेषः॥ ८॥**

इधर उधर जीभ चलाना ही जिनका विलास बन गया है और जो इस स्वभाव के वशीभूत होकर ज़बान पर कोई लगाम नहीं लगा सकते उन दुर्जन चुगलखोर रूपी सर्पों को यदि कोई अपने मस्तक पर भी बैठाये तो भी वे अपना दुष्ट स्वभाव नहीं छोड़ते। मुझे ऐसे दुर्जनों रूपी सर्पों से कोई भय नहीं है क्योंकि मन्त्रों एवं ओषधियों द्वारा सर्प के विष को नष्ट कर देनेवाला राव सुर्जन का अपूर्व कृपा-रूपी वैद्य मेरी रक्षा के लिये सदैव सजग है॥ ८॥

**चौहाणवंशभवभूमिपुरन्दराणामाद्यो यथा तनुभृतां पुरुषः पुराणः।**
**ख्यातः क्षितावजनि दीक्षितवासुदेवनामा स्वधर्मसुमनीकृतवासुदेवः॥ ९॥**

जिस प्रकार शरीरधारी प्राणियों में सबसे आदि पुरुष भगवान् विष्णु हैं उसी प्रकार चौहाण वंश के नृपेन्द्रों में यज्ञ में दीक्षित तथा अपनी धर्मनिष्ठा से भगवान् वासुदेव को प्रसन्न रखने वाले आदि पुरुष संसार में **'वासुदेव'** नाम से विख्यात हुए॥ ९॥

**सत्ये युधिष्ठिर उदग्रबले च भीमश्चापेऽर्जुनः स नकुलस्तुरगाधिरोहे।**
**शास्त्राभियोगसमये सहदेव एवमेकोऽवतार इव पाण्डवपञ्चकस्य॥१०॥**

वे सत्य में युधिष्ठिर के समान, उत्कट बल में भीम के समान, धनुर्विद्या में अर्जुन के समान, अश्वविद्या में नकुल के समान और शास्त्र-व्यसन में सहदेव के समान निपुण थे। अतः पाँचों पाण्डवों के मानों वे एक ही अवतार थे॥ १०॥

**यः कामपाल इव धामनिधिर्बलेन जग्राह काम इव वामदृशां मनांसि।**
**कामारिवत् करुणयाऽधिककोमलात्मा कामानपूरि परितः शरणागतानाम्॥११॥**

वे बलदेव के समान तेजस्वी थे। कामदेव के समान सुन्दर होने के कारण कामिनियों के मन को हठात् वश में कर लेते थे। भगवान् शिव के समान परम कारुणिक एवं आशुतोष होने के कारण शरणागतों के सम्पूर्ण मनोरथों को पूर्ण करते थे॥ ११॥

**उद्दामधाम्नि सवितुः सविधेऽपि काष्ठासङ्गेन धूमविकृतैरकृतान्तराये।**
**यस्य प्रतापदहने गहने निपेतुर्दृप्यत्सपत्नपृतनापतयः पतङ्गाः॥१२॥**

जिनकी सूर्य के सामने भी उत्कट तेज से प्रज्वलित, काष्ठाओं (दिशाओं) में व्याप्त, बिना ईंधन ही जलनेवाली और इसलिये धूम-विकृति से रहित प्रतापरूपी भीषण अग्नि में अनेक अभिमानी शत्रु-सेनापति-रूपी पतंगे गिर गिर कर भस्म हो जाते थे॥ १२॥

---

(८) द्विजिह्वाः सर्पाः पिशुनाश्च। जाङ्गलिको विषवैद्यः।
(९) स्वधर्मेण सुमनीकृतः प्रसन्नीकृतो वासुदेवो येन सः।
(१२) सूर्यसामीप्येऽपि उत्कटतेजसा प्रज्वलनात्, इन्धनं विनापि प्रज्वलनात्, सदैव धूमेन अविकृतत्वात् च अस्य राज्ञः प्रतापवह्नेः साधारणवह्नेः विशेषः। काष्ठानां दिशां संगेन, काष्ठस्य इन्धनस्य असंगेन च।

**नक्तं दिनं सममदीपि सुमेरुशृङ्गमारोहति स्म महसा जितसैंहिकेयः ।**
**अस्तं जगाम न कदापि जगत्प्रकाशस्तस्य प्रतापतपनः पुनरन्य एव ॥१३॥**

सूर्य केवल दिन में चमकता है, सुमेरु पर्वत पर चक्कर लगाया करता है, ग्रहण के समय राहु द्वारा ग्रस्त कर लिया जाता है, रात में अस्त हो जाता है और एक समय विश्व के केवल आधे भाग को ही प्रकाशित कर सकता है। वासुदेव राजा का प्रतापरूपी सूर्य विलक्षण है। वह रात-दिन समान रूप से चमकता है, सुमेरु पर्वत के शिखर पर चढ़ा हुआ है, अपने तेज से राहु को जीत लेता है, कभी अस्त नहीं होता तथा एक साथ सम्पूर्ण विश्व को प्रकाशित करता है ॥१३॥

**क्षीराम्बुधिः सुरगणैरपनीतसारः पूर्णो विधुर्विवश एव विधुन्तुदस्य ।**
**रुद्राचलोऽपि तुलितो रजनीचरेण को नाम साम्यमयतामदसीयकीर्तेः ॥१४॥**

इन राजा की शुभ्र कीर्ति की हम किससे तुलना करें? क्षीर-समुद्र को तो देवताओं ने अमृतरूपी सार निकालकर निःसार बना रक्खा है। पूर्ण चन्द्रमा (कलंकित होने के अतिरिक्त) राहु के सामने विवश हो जाता है और श्वेत कैलास पर्वत को तो रजनीचर रावण ने हँसी में ही हाथ पर उठा लिया था ॥ १४ ॥

**दुष्कीर्तिपङ्कगतवैरियशोमृणाललेशानशेषयितुमाशु गवेषयन्ती ।**
**यस्योल्लसद्विशदवारिदगर्भशुभ्रा बभ्राम विश्वमखिलं किल कीर्तिहंसी ॥१५॥**

इनकी शरद् ऋतु के प्रसन्न बादल के समान शुभ्र कीर्ति रूपी हंसी अपकीर्ति रूपी कीचड़ में उगनेवाले शत्रुओं के बचे-खुचे यशरूपी कमल-तन्तुओं को खा जाने के लिये इधर उधर शीघ्र ढूँढ़ती हुई सम्पूर्ण विश्व में घूम रही है ॥ १५ ॥

**संग्रामसीम्नि शमनं भ्रकुटीसमानं यस्मिन् विधुन्वति धनुर्धरणीवतंसे ।**
**दर्पोद्भटप्रतिभटप्रमदाजनानां सीमन्तसान्द्रखचिता मणयो निपेतुः ॥१६॥**

विश्व-भूषण वासुदेव राजा के युद्ध-स्थल में (शत्रुओं को परास्त करके) शान्ति स्थापित करनेवाले अथवा यमराज (शमन) के समान लगनेवाले तथा भौंह के समान टेढ़े धनुष को टंकारते ही उत्कट अभिमान में चूर शत्रुओं की स्त्रियों के माँग में बँधे हुए मोती (वैधव्य की सूचना देते हुए) अपने आप नीचे गिर जाते हैं ॥ १६ ॥

**निध्वानतो बधिरितैः शतदुन्दुभीनामन्धीकृतैश्च पृतनारजसां भरेण ।**
**मार्गेषु वारणमदैरतिपिच्छिलेषु नो वेद्मि विद्रुतममुष्य कथं द्विषद्भिः ॥१७॥**

वासुदेव की रणभूमि में बजनेवाली सैकड़ों दुन्दुभियों के घोर स्वर से शत्रुओं के कान बहरे हो जाते हैं और इनकी विशाल सेना के चलने से उड़नेवाली धूल से शत्रुओं की आँखें अन्धी हो जाती हैं। युद्ध के हाथियों के गण्डस्थल से बहनेवाली मद-जल की धारा से मार्ग की धूल कीचड़

---

(१३) रात्रावपि दीपनात्, सुमेरुशृंगारोहणात्, राहोः बिजयात्, अस्तंगमनाऽभावात्, एकदैव सम्पूर्णविश्वगोलकप्रकाशनात् च राज्ञः प्रतापसूर्यस्य सूर्यात् विशेषः ।

(१४) रावणस्य स्वहस्ते कैलासधारणं प्रसिद्धमेव ।

(१५) हंसपक्षिणः मृणाललेशान् भुञ्जते इति प्रसिद्धिः ।

बन जाती है और चारों ओर फिसलन छा जाती है। समझ में नहीं आता कि मार्ग में चारों ओर भयंकर कीचड़ और फिसलन होने पर भी बहरे और अन्धे बने हुए शत्रु-गण इन राजा के सम्मुख आते ही युद्ध-स्थल से बड़ी तेज़ी से किस प्रकार भाग जाते हैं ? ॥ १७ ॥

**एतस्य दानसलिलव्ययितप्रवाहा चर्मण्वती ध्रुवमधास्यत पङ्कभावम् ।**
**नाऽपूरयिष्यत यदि प्रसभोपरुद्धविद्वेषिवामनयनानयनाम्बुपूरैः ॥१८॥**

युद्धवीर राजा वासुदेव ने बलात् घेरे गये शत्रुओं की स्त्रियों की (वियोग के कारण उत्पन्न) आँसुओं की धारा से यदि चम्बल नदी को वापस न भर दिया होता तो इन राजा के दानवीर होने के कारण चम्बल नदी का सारा पानी दान संकल्पों के जल में खर्च हो जाता और निःसन्देह चम्बल में कीचड़ ही कीचड़ रह जाता ॥ १८ ॥

**वृन्दारकाधिपदृशामपि लोभनीयां वृन्दानि यः सुमनसां सुमना दधानाम् ।**
**वृन्दाटवीमभिमतामिव नन्दसूनुर्बृन्दावतीपुरमनाकुलमध्युवास ॥१९॥**

जिस प्रकार (भक्तों के प्राण) नन्दनन्दन वृन्दावन में रहते थे उसी प्रकार (प्रजा के प्राण) सुन्दर मन वाले राजा वासुदेव भयरहित और समृद्ध बूँदी नगरी में रहते थे। विविध देवताओं और पुष्पों से शोभित तथा इन्द्र के लिये भी दर्शनीय वृन्दावन के समान वह नगरी नाना प्रकार के विद्वानों एवं पुष्पों से सुशोभित थी और (उसकी समृद्धि) देवताओं के राजा इन्द्र के (हज़ार) नेत्रों के लिये भी दर्शनीय थी ॥ १९ ॥

**तस्मादजायत सुतो नरदेवनाम्ना धाम्ना परानधरयन् नरदेवमुख्यान् ।**
**रूपेण यन्निरुपमेण निरूप्यमाणं नार्यो नराकृतिममन्वत देवमेव ॥२०॥**

उन वासुदेव के **नरदेव** नामक पुत्र उत्पन्न हुए जो अपने तेज से अन्य प्रमुख नरदेवों (राजाओं) को कान्तिहीन कर देते थे और जिनको, अनुपम रूप के कारण, स्त्रियाँ नरदेहधारी देव ही मानती थीं ॥ २० ॥

**तेनाजनिष्ट यशसाऽर्दितपूर्णचन्द्रः श्रीचन्द्र इत्यभिहितस्तनयो नयज्ञः ।**
**यस्याऽऽसमुद्रमपनिद्रभुजप्रतापैरेकातपत्रमवनीवलयं बभूव ॥२१॥**

उन नरदेव के **श्रीचन्द्र** नामक नीतिकुशल पुत्र पैदा हुए जिन्होंने अपने शुभ्र यश से पूर्ण चन्द्र को भी फीका बना दिया था और समुद्र तक फैला हुआ पृथ्वीमंडल जिनकी सजग भुजाओं के प्रताप से शुभ्र और देदीप्यमान बनकर एकमात्र छत्र-सा प्रतीत होता था ॥ २१ ॥

**तस्मिन्नलङ्कृतवति त्रिदिवं वयोऽन्ते पुत्रः स्वपैतृकपदं प्रतिपद्यते स्म ।**
**यः पालयन्नपि जयं निजपौरुषेण प्राप्तः क्षितावजयपाल इति प्रसिद्धिम् ॥२२॥**

श्रीचन्द्र के वृद्धावस्था में स्वर्गवासी हो जाने पर उनके पुत्र पैतृक सिंहासन पर आरूढ़ हुए। यद्यपि वे अपने पराक्रम से सदा जय प्राप्त करके और उसकी रक्षा करके 'जयपाल' बने रहे तथापि उनके नाम की प्रसिद्धि संसार मे '**अजयपाल**' के रूप में हुई ॥ २२ ॥

---

(१९) इन्द्रस्य सहस्रनेत्राणामपि लोभनीयाम्। सुमनसां देवानां विदुषां पुष्पाणां च।
(२२) जयपालोऽपि अजयपालः इति विरोधाभासः। अजयपालः इति राज्ञो नामेति तत्परिहारः।

**उच्चैस्तया ध्रुवमलङ्घ्यतया परेषां तेनाजयेन निरमायि परोऽपि मेरुः।**
**तस्मादभूदजयमेरुरिति प्रसिद्धं दुर्गं तदद्भुतफलं किल योगसिद्धेः ॥२३॥**

उन अजयपाल ने अत्यन्त उच्च और शत्रुओं द्वारा अलंध्य तथा अजेय (सुमेरु से भिन्न) एक दूसरा ही मेरु वनाया। योगसिद्धि के अद्‌भुत फल के समान सुन्दर उस प्रसिद्ध दुर्ग का नाम 'अजयमेरु' (अजमेर) हुआ ॥ २३ ॥

**तेनापि सूनुरनुरूपगुणोज्ज्वलेन राजन् जयेन जनितो जयराजनामा।**
**दोर्दण्डचण्डिमचमत्कृतिचारुदृप्यत्कोदण्डताण्डवितदण्डितवैरिवर्गः ॥२४॥**

उन अजयपाल के पुत्र **जयराज** हुए जो सदा जय से सुशोभित रहे और जो अपनी उद्दाम तथा प्रचण्ड भुजाओं में चमचमाते हुए अभिमानी धनुप के नृत्य से शत्रु-वर्ग को दण्ड देते रहे ॥ २४ ॥

**सामन्तसिंह इति तस्य सुतः प्रतीतः सिंहासनं निजकुलोचितमारुरुक्षुः।**
**सामन्तवीरतरुणान् तरसा रिपूणां व्यद्रावयद् द्विपगणानिव दृप्तसिंहः ॥२५॥**

जयराज के पुत्र **सामन्तसिंह** हुये जिन्होंने अपने पैतृक सिंहासन पर आरूढ़ होकर शत्रुओं के सामन्तवीरों के युवकों को उसी प्रकार वेग से परास्त कर भगा दिया जिस प्रकार अभिमानी सिंह हाथियों के झुंडों को परास्त कर भगा देता है ॥ २५ ॥

**तस्यात्मजो गुरुयशाः किल गुर्वकाख्यः स्फूर्जत्प्रतापभरभर्जितवैरिबीजः।**
**यस्मिन् वितन्वति निरन्तररत्नवर्षं रत्नाकरा वव्रृतिरेऽर्थिन एव सर्वे ॥२६॥**

सामन्तसिंह के पुत्र महान् यशस्वी **गुर्वक** हुए जिन्होंने अपने प्रताप के ताप से वैरिरूपी बीजों को जला दिया और जिनके निरन्तर रत्नों की वर्पा करते रहने के कारण सब याचक 'रत्नाकर' वन गये ॥ २६ ॥

**तन्नन्दनो नरपतिर्भुवि चन्दनोऽभूद् यश्चन्दनद्रव इवाखिलनन्दनोऽपि।**
**लग्नो हृदि प्रियविमुक्तरिपुप्रियाणां भूमानमानयदनारतमुग्रतापम् ॥२७॥**

गुर्वक के पुत्र **चन्दन** हुए जो चन्दन के लेप के समान सम्पूर्ण प्राणियों के लिये आनन्ददायक होने पर भी प्रियतमों से वियुक्त शत्रुओं की रमणियों के हृदयों पर लगकर उन्हें निरन्तर अत्यन्त सन्ताप देते थे ॥ २७ ॥

**बिभ्रत्सदा सुरभितां विशदस्वभावः शीतो भजत्सु परिरक्षितदक्षिणाशः।**
**स क्ष्मापतिर्जगति चन्दन एव साक्षात् किन्तु द्विजिह्वपरिषन्मिलनं न सेहे ॥२८॥**

सुरभि (कामधेनु) के समान याचकों के मनोरथ पूर्ण करनेवाले वे चन्दन राजा सदा सुगन्धित द्रव्यों से सुरभित रहते थे। उनका स्वभाव सरल और स्वच्छ था। शुभचिन्तकों के लिये वे शीतल और आनन्ददायक थे। अनुकूल लोगों की आशायें पूर्ण करते थे। दक्षिण दिशा की रक्षा करते थे। चन्दन के सब गुण—सुगन्धि, स्वच्छता, शीतलता, आनन्ददायकता और

---

(२४) दोर्दण्डयोः भुजयोः चंडिम्नः प्रचण्डतायाः चमत्कृत्या चमत्कारेण चारोः सुन्दरस्य दृप्यतः विलसतः कोदण्डस्य धनुषः ताण्डवितेन नृत्येन दण्डितः वैरिवर्गः येन सः।

दक्षिण दिशा से सम्बन्ध—उनमें विद्यमान होने के कारण वे इस संसार में वास्तव में साक्षात् चन्दन ही थे। चन्दन की केवल एक बात उनमें नहीं थी। वह यह कि चन्दन में द्विजिह्व (सर्प) लिपटे रहते हैं किन्तु उनको द्विजिह्वों (चुगलखोरों) का मेल बिलकुल नहीं सुहाता था ॥२८॥

**प्रौढाहितावनिभृदुद्धतपक्षवज्रं वज्रायुधप्रतिममायतविक्रमेण।**
**राजन्यवीरनिकुरम्बकिरीटवज्रं वज्राभिधं स तनयं जनयाञ्चकार ॥२९॥**

उन चन्दन राजा ने, दुर्धर्ष शत्रु राजाओं के उद्धत पक्ष को भेदने के लिये वज्र के समान (इन्द्र ने वज्र से पर्वतों के पक्षों को काट गिराया था) एवं उत्कट पराक्रम के कारण इन्द्र के समान और वीर राजाओं के समूह रूपी मुकुट में हीरे के समान शोभित होनेवाले **वज्र** नामक पुत्र को जन्म दिया ॥ २९ ॥

**वज्रादजायत वशीकृतविश्वराज्यः प्राज्यैर्गुणैर्जगति विश्वपतिः प्रतीतः।**
**यो विश्वनाथवनिताचरणावलम्बी विश्वम्भराखिलधुरां बिभराम्बभूव ॥३०॥**

वज्र के पुत्र **विश्वपति** हुए जो अखिल विश्व के राज्य को वश में करने वाले, उत्तम गुणों के कारण् साक्षात् विश्वपति, भगवान् विश्वनाथ की अर्द्धाङ्गिनी भगवती पार्वती के चरणों की शरण लेने वाले तथा (अपने कंधों पर) पृथ्वी का सारा भार उठाने वाले थे ॥ ३० ॥

**कामं बभूवुरपरेऽपि पुरा नरेशा धन्या परन्तु धरणीयमनेन भर्त्रा।**
**आलम्बते न कमला कतमं समृद्धं नारायणोरसि परं लभते प्रतिष्ठाम् ॥३१॥**

भले ही पहले इस पृथ्वी का उपभोग करनेवाले अनेक राजा हुए, किन्तु यह पृथ्वी विश्वपति को पति पाकर ही धन्य हुई। भले ही लक्ष्मी सभी धनिकों के पास रहे, किन्तु जो प्रतिष्ठा उसे भगवान् विष्णु के वक्षःस्थल पर मिलती है वह अन्यत्र नहीं ॥ ३१ ॥

**कीर्त्याऽस्य चन्द्रकरकोमलयाऽतिशुभ्रं शोणं नवार्ककिरणप्रतिमैः प्रतापैः।**
**श्यामद्युति द्विषदकीर्तितमोभिरित्थं चित्रं तदाम्बरमराजत दिग्वधूनाम् ॥३२॥**

उन विश्वपति के कारण, दिशारूपी स्त्रियों का आकाशरूपी वस्त्र (प्रकृति-वधू के सत्वरजस्तमोमय वस्त्र के समान) रंग-विरंगी 'श्वेत श्याम रतनार' शोभा पा रहा था—वह विश्वपति की चन्द्रमा की किरणों के समान कोमल कीर्ति के कारण श्वेत था, उनके नवोदित सूर्य की किरणों के समान प्रताप के कारण लाल था और उनके शत्रुओं के दुष्कीर्तिरूपी अन्धकार के कारण काला था ॥ ३२ ॥

---

(२८) सुरभितां कामधेनुतां सुगन्धित्वं च। परिरक्षिता दक्षिणा आशा दिक् येन सः, अपि च परिरक्षिताः पूरिताः दक्षिणानां अनुकूलजनानां आशाः मनीषितानि येन सः। द्विजिह्वाः सर्पाः पिशुनाश्च। चन्दनवत् चन्दनभूपतिरपि सुरभितः विशदः शीतः दक्षिणदिक्सम्बन्धयुतश्च, किन्तु द्विजिह्वानां अमिलनात् तस्य चन्दनात् विशेषः।

(२९) प्रौढाः उद्भटाः ये अहिताः अवनिभृतः शत्रवो राजानः तेषां ये उद्धताः पक्षाः तेषां कर्तने यः वज्रं इन्द्रायुधमिव आचरतीति तम्। पुरा इन्द्रः वज्रेण पर्वतानां पक्षान् कृत्तवान्। राजन्यवीराणां यानि निकुरम्बाणि वृन्दानि तान्येव किरीटानि तेषु वज्रमिव हीरकमिव आचरतीति तम्।

(३१) कालिदासैरप्युक्तं—"कामं नृपाः सन्तु सहस्रशोऽन्ये राजन्वतीमाहुरनेन भूमिम्। नक्षत्रताराग्रहसंकुलापि ज्योतिष्मती चन्द्रमसैव रात्रिः ॥" इति।

(३२) अम्बरं आकाशः वस्त्रं च। दिग्वध्वोऽपि प्रकृतिनटीवत् सत्वरजस्तमोमयं शुक्ललोहितकृष्णं विचित्रं आकाशाम्बरं धृतवत्यः।

**भूभृद्विशालकटकं समकालमेव तस्मिन् रणोद्यमिनि दुर्दिनयाम्बभूव।**
**दानद्रवैर्द्विपकदम्बककुम्भजातैर्बाष्पैश्च वैरिवनितानयनाब्जमुक्तैः ॥३३॥**

विश्वपति के युद्ध के लिये उद्यत होते ही राजाओं की विशाल सेना में दुर्दिन (वह दिन जब आकाश में बादलों के कारण अन्धकार सा छा जाता है और घनघोर वृष्टि होती है) छा जाता था क्योंकि हाथियों के गण्डस्थलों से मदजल की झड़ी लगी रहती थी और शत्रुओं की स्त्रियों के नयनारविन्दों से आँसुओं की धारायें बरसती रहती थीं (तथा उनकी आहों के बादल छाये रहते थे) ॥ ३३ ॥

**आह्लादितद्विजगणाऽविरतप्रवाहां पद्मावतारसुरभिं परिभूततृष्णाम्।**
**एतस्य दानजलनिर्झरिणीं विगाह्य को नाम नाऽजनि जनोऽत्र विमुक्ततापः॥३४॥**

जिस प्रकार नदी के प्रवाह में प्रसन्न हंस आदि पक्षी क्रीड़ा किया करते हैं, खिले हुए कमलों से वह सुगन्धित रहती है, लोगों की प्यास बुझाती है और स्नान कर लेने पर उनकी गर्मी शान्त करती है उसी प्रकार विश्वपति के दान-संकल्पों के जल की जो नदी बह चली थी उसमें प्रसन्न ब्राह्मणों के समूह निरन्तर स्नान करते थे तथा वह लक्ष्मी के अवतार के कारण कामधेनु के समान थी एवं याचकों की तृष्णा को शान्त करनेवाली थी। विश्वपति की इस दान-नदी में स्नान करके किस मनुष्य ने अपना सन्ताप दूर नहीं किया ? ॥ ३४ ॥

**आकारतो न परमस्य भुजद्वयस्य स्वर्वासिवृक्षविटपैः प्रतिपक्षताऽऽसीत्।**
**अप्रार्थितं धनमनेन वनीयकेभ्यो विश्राण्य सन्ततमहारि यशोऽपि तेषाम्॥३५॥**

विश्वपति के सुन्दर और कोमल हाथों ने स्वर्ग के कल्पवृक्षों की शाखाओं की केवल आकृति ही ग्रहण नहीं की, किन्तु याचकों को बिना माँगे ही निरन्तर धन दे-देकर उनका (कल्पवृक्षों की शाखाओं का) यश भी छीन लिया। (कल्पवृक्ष तो माँगने पर ही धन देता है, किन्तु विश्वपति के हाथों ने बिना माँगे ही धन दिया) ॥ ३५ ॥

**वाञ्छाधिकद्रविणवर्षिणि याचकानां यस्योज्ज्वले जगति जाग्रति पञ्चशाखे।**
**वीतप्रयोजनतया सुरपादपानां पञ्चत्वमेव बत युक्ततरं प्रतीमः॥३६॥**

याचकों को उनकी इच्छा से अधिक धन देने वाले विश्वपति के उज्ज्वल हाथ के विद्यमान रहने पर स्वर्ग के कल्पवृक्षों का कोई प्रयोजन नहीं रहा। अतः कल्पवृक्षों का 'पञ्चत्व' (पाँच की संख्या; मृत्यु) प्राप्त करना युक्त ही है ॥ ३६ ॥

---

(३४) पद्मानां कमलानां अवतारः पद्मायाः लक्ष्म्याश्च अवतारः।

(३५) अस्य राज्ञः भुजयुगलेन पारिजातादिस्वर्गतरुविटपानां न केवलं आकार एव अहारि, किन्तु याचकेभ्यः अप्रार्थितं धनं प्रदाय तेषां यशोऽपि अहारि। स्वर्गकल्पवृक्षास्तु प्रार्थितमेव धनं ददति, अयं राजा च अप्रार्थितमपि ददातीति अस्य तेभ्यो विशेषः।

(३६) पारिजातमन्दारादिस्वर्गकल्पद्रुमाः पञ्चसंख्याकाः सन्ति। ते हि वाञ्छितमेव धनं ददति। अस्य राज्ञः पंचशाखः करः वाञ्छितादपि अधिकं धनं ददाति। अतः अस्य राज्ञः करे जाग्रति सति कल्पद्रुमाणां पञ्चत्वमेव पञ्चसंख्यात्वं मरणं च युक्ततरमेव।

**न स्म प्रमाद्यति मदेन स मेदिनीशो नापि प्रमाद्यति रिपौ प्रजिघाय शस्त्रम् ।**
**नायं क्वचिद् विमुखतां समितौ जगाम प्रत्यर्थिनं न विमुखं पुनरन्वियेष ॥३७॥**

वे नरेश कभी दर्प और प्रमाद नहीं करते थे। न वे शत्रु पर प्रहार करके कभी आलस करते थे। उन्होंने युद्ध में कभी पीठ नहीं दिखाई और न कभी उन्होंने पीठ दिखाने वाले शत्रु का पीछा किया ॥ ३७ ॥

**कामं क्रमेण नितरां दुरतिक्रमेण दोर्विक्रमेण वसुधां वशयाम्बभूव ।**
**भूपालरीतिरिति नीतिपथोपनेतॄन् नेता स मन्त्रसचिवान् सममभ्यनन्दत् ॥३८॥**

जननायक विश्वपति ने अपने अत्यन्त दुर्धर्ष वाहु-बल द्वारा क्रमशः पृथ्वी के राज्यों को अच्छी तरह वश में कर लिया। ऐसा उन्होंने लोभ या स्वार्थवश नहीं किया, किन्तु इसलिये किया कि यह उत्कृष्ट राजाओं की रीति है। और साथ ही साथ उन्होंने नीति के पथप्रदर्शक मन्त्रिमुख्यों का समुचित आदर-सत्कार किया ॥ ३८ ॥

**यस्मिन् जयाऽऽहितमतौ समराजिरेषु जातं रजः प्रतिभटेषु तमस्तदेव ।**
**सत्वं सपक्षपृतनासु विपक्षजायावक्षोजहारलतिकास्वपि निर्गुणत्वम् ॥३९॥**

युद्धक्षेत्र में शत्रुओं को जीतने की इच्छा रखने वाले विश्वपति की सेनाओं से जो धूल ऊपर उठी वह शत्रुओं के लिये अन्धकार बन गई, अपनी सेनाओं के लिये वल और साहस बन गई तथा शत्रुओं की ललनाओं के वक्षःस्थल के हारों के लिये सूत्र तोड़ देने वाली वन गई। युद्धक्षेत्र में शत्रुओं पर विजय प्राप्त करने के लिये विश्वपति में रजोगुण (शत्रुओं को मारने के वीरकर्म में प्रवृत्ति) उत्पन्न हुआ। आश्चर्य है कि वह रजोगुण शत्रुओं के लिये तमोगुण बन गया (अर्थात् शत्रु निश्चेष्ट हो गये और उनकी आँखों के आगे अंधेरा छा गया) तथा विश्वपति की सेनाओं के लिये सत्वगुण वन गया (अर्थात् उनकी सेनाओं में बल और साहस आ गया) और शत्रु-ललनाओं के वक्षःस्थल के हारों के लिये निर्गुण वन गया (अर्थात् वैधव्य की सूचना देते हुए शत्रुललनाओं के हारों का 'गुण' अर्थात् सूत्र टूट गया और हारों के मोती नीचे बिखर गये) ॥ ३९ ॥

**पारीन्द्रमेव मृगयन् मृगयां गतोऽसौ नान्यान् जघान घनया घृणया परीतः ।**
**नष्टं तदैव परिपन्थिनितम्बिनीनां वक्षोजपत्रमकरीभिरिदं विचित्रम् ॥४०॥**

शिकार खेलते समय विश्वपति केवल सिंह को ही खोजते थे। अन्य प्राणियों को मारने में उन्हें बड़ी घृणा होती थी। फिर भी आश्चर्य है कि उनके शिकार के लिये प्रस्थान करते ही वैरि-वनिताओं के वक्षःस्थल के मकराकृति आभूषण निर्जीव से नीचे गिर पड़ते थे। (विश्वपति

---

(३८) अयं राजा नितरां दुरतिक्रमेण दोर्विक्रमेण क्रमेण वसुधां कामं वशयाम्बभूव। इयं भूपालरीतिरिति कारणेन न तु लोभेन।

(३९) अस्य राज्ञः सेनायाः गमनेन युद्धस्थले यत् रजः धूलिः रजोगुणजन्यशत्रुमारणप्रवृत्तिश्च उत्थितं तदेव प्रतिभटेषु तमः अन्धकारः तमोगुणजन्यकिंकर्तव्यविमूढ़ता च संजातं तद्रूपेण रज एव परिणतमित्यर्थः. स्वसैनिकेषु च सत्वं बलं सत्वगुणजन्योत्साहश्च संजातं, शत्रुललनास्तनहारेषु च निर्गुणत्वं गुणराहित्यं भाविवैधव्यसूचिका हारसूत्रत्रुटिश्च संजातम्। रजः एव तमः सत्वं निर्गुणत्वं च संजातमिति महदाश्चर्यम्।

शिकार के लिये जाते थे किन्तु उनके शत्रु सोचते थे कि उनसे युद्ध करने जा रहे हैं और इस भय से शत्रु-ललनाओं के मकराकृति स्तनाभूषण गिर पड़ते थे मानों उनके भावी वैधव्य की सूचना दे रहे हों।) ॥ ४० ॥

**नाश्चर्यमेतदमुमेकमपि द्विषन्तो दोषाहता यदि रणेषु बहूनपश्यन् ।**
**एकोऽप्यनेक इव कैरवबान्धवोऽसावाभासते तिमिरताडितलोचनानाम् ॥४१॥**

विश्वपति एक होते हुए भी युद्धक्षेत्र में शत्रुओं को अनेक से दिखाई देते थे। तैमिरिक पुरुषों को जिनकी आँखों की ज्योति मन्द पड़ गई है, अन्धकार में एक चन्द्रमा भी अनेक दिखाई देता है ॥ ४१ ॥

**सम्पद्युतोऽपि तरुणोऽपि नराधिपोऽपि नाङ्गीचकार स कदाचन पानलीलाम् ।**
**बाणाः पुनः परपुरं सपदि प्रविश्य रक्तासवं निभृतमेव निपीतवन्तः ॥४२॥**

विश्वपति यद्यपि सम्पन्न और समृद्ध थे, युवा थे, राजा थे, फिर भी उन्होंने कभी मदिरा नहीं पी। केवल उनके तीक्ष्ण वाण शत्रुओं के शरीरों में घुस कर चुपचाप पर्याप्त मात्रा में रक्त-मदिरा पीते थे ॥ ४२ ॥

**स्तब्धत्वहेतुमपनीतविशेषदृष्टिं गुर्वङ्कुशानपि हठादवसादयन्तम् ।**
**यो वैरिणाञ्च करिणाञ्च तदाश्रितानामत्याजयन् मदमुदञ्चितमञ्चितौजाः।४३**

ओजस्वी विश्वपति ने वैरि-राजाओं के प्रबल मद को, जिसके कारण वे अभिमान में चूर हो हो रहे थे, उनकी भले और बुरे का विचार करने की विवेक-दृष्टि लुप्त हो गई थी और गुरुजनों के उपदेशों का तिरस्कार करते थे, दूर कर दिया और साथ ही साथ वैरियों के हाथियों के प्रबल मद (दान जल) को भी छुड़ा दिया जिस मद के कारण हाथी उन्मत्त हो रहे थे, उनकी दृष्टि आवृत हो रही थी और वे महावतों के अंकुशों के भारी आघातों की भी अवहेलना कर रहे थे ॥ ४३ ॥

**समुल्लङ्घ्य क्षीराम्बुधिमधरितः शीतकिरणः**
**समाक्रान्तं शश्वद् गिरिशगिरिगौरीगुरुपदम् ।**
**कृतश्चान्तेवासी भुजगपतिरित्थं विभुतया**
**वितेने यः कीर्त्या भुवनजययात्राविलसितम् ॥४४॥**

विश्वपति ने तीनों लोकों में अपनी शुभ्र कीर्ति के द्वारा मानों विजय यात्रा की। क्षीरसागर को पार करके (शुभ्रता में परास्त करके) उनकी कीर्ति आकाश में छा गई और शुभ्रता में चन्द्रमा को फीका कर दिया। मर्त्यलोक में कैलास और हिमालय के गौरीशंकर शिखर पर (धवलता में उनको पराजित करती हुई) फैल गई। पाताल में शेषनाग के पास तक फैल गई मानों शुक्लता में शेषनाग को भी अपना शिष्य बना लिया हो ॥ ४४ ॥

इति सुर्जनचरितमहाकाव्ये प्रथमः सर्गः।

---

(४०) मृगयां गतोऽसौ राजा सिंहमेव हन्ति नान्यान् प्राणिनः। तथापि शत्रुललनास्तनपत्रमकरीभिः नष्टमिति विरोधाभासः। मृगयां गतमपि एनं शत्रुस्त्रियः युद्धार्थिनं मत्वा राज्ञः भयात् त्रस्यन्ति, तासां भयजन्यप्रबलकम्पात् मकराकृतीनि स्तनाभूषणानि भाविवैधव्यभयादिव प्रपतन्ति इत्यर्थः।

(४२) परपुरं शत्रुशरीरम्।, रक्तासवं रुधिररूपरक्तमदिराम्।

# द्वितीयः सर्गः

**अथ विश्वपतिः क्रमागतं प्रतिपद्यापि स पैतृकं पदम् ।**
**अविशिष्टतयाऽन्यभूभृतां न मनस्वी भजते स्म निर्वृतिम् ॥ १ ॥**

स्वाभिमानी राजा विश्वपति पैतृक राज्य को पाकर भी, अन्य राजाओं की अपेक्षा स्वयं में कोई असाधारण विशेषता न पाकर, शान्ति न पा सके ॥ १ ॥

**सदसि स्पृहणीयसौहृदैः सवयोभिः समशीलचेष्टितैः ।**
**न बबन्ध धृतिं स बन्धुभिर्नवहर्म्येषु हिरण्मयेष्वपि ॥ २ ॥**

सभा में प्रशंसनीय मैत्रीभाव वाले एवं अवस्था, शील और चेष्टा में समान, बन्धु-वर्ग को पाकर, सुवर्णमय नवीन प्रासादों में भी वे धैर्य धारण न कर सके ॥ २ ॥

**करिणः परिणद्धकन्धरा नवशृङ्गारितचारुविग्रहाः ।**
**नवनिर्झरमेदुरानना न मुदे तस्य बभूवुरीशितुः ॥ ३ ॥**

विशाल गण्डस्थल वाले, नवीन शृङ्गारों से सुसज्जित शरीरवाले, मदजल से गाढ़े चिकने मुखवाले मदोत्कट हाथी भी उन्हें आनन्दित न कर सके ॥ ३ ॥

**दिवमुत्पतितुं कृतोद्यमा विनिरुद्धा विनियम्य सादिभिः ।**
**अभवञ्जवना वनायुजाः प्रमदायाऽस्य न मेदिनीभुजः ॥ ४ ॥**

टापें फटकार कर मानों आकाश में उड़ने की इच्छा रखनेवाले, साईसों द्वारा कठिनाई से रोके जाने वाले, अत्यन्त वेगवाले उत्तम अरबी घोड़े भी उन्हें आनन्द न दे सके ॥ ४ ॥

**दयिताधरचारुपल्लवाः कुसुमोद्भेदविजृम्भितस्मिताः ।**
**अलिगुञ्जितमञ्जुगीतयो रुरुधुस्तस्य मनो न वीरुधः ॥ ५ ॥**

जिनके सुकुमार लाल पत्ते कामिनियों के अधरों के समान सुन्दर थे, जिनके विकसित पुष्प रमणियों की मुस्कान के समान शुभ्र थे, भ्रमरों की गूँज के बहाने जो मानों सुन्दर गीत गा रहीं थीं, ऐसी लतायें भी उनके मन को न बाँध सकीं ॥ ५ ॥

**सरसीरुहसौरभोज्ज्वला कलहंसीकलनादकोमला ।**
**सरसी विमलाशयाप्यलं सरसीकर्तुमभून्न भूभृतम् ॥ ६ ॥**

कमलों की सुगन्ध से सुरभित, हंसियों के सुन्दर नाद से मुखरित, स्वच्छ हृदय के समान निर्मल जल से युक्त, मनोहर सरोवरा भी उनके हृदय को सरस न कर सकी ॥ ६ ॥

**समये समुदीरितोच्चकैर्जयशब्दैरवदानशंसिभिः ।**
**स ननन्द न वन्दिचारणैर्विरुदालीपदबन्धकोविदैः ॥ ७ ॥**

समय पर उच्च स्वर से जयशब्द का उच्चारण करने वाले, प्रशस्त कर्मों का वर्णन करनेवाले, प्रशंसा की पंक्तियों को सुन्दर रूप से पद्य-बद्ध करने में निपुण भाट और चारण उन्हें आनन्दित न कर सके ॥ ७ ॥

---

(४) वनायुजाः पारसीका अश्वाः ।

**शिथिलेतरबन्धबन्धुरा सुकुमाराऽपि विदग्धभूपतेः ।**
**रसभावनिरन्तराप्यहो ! कविवाणी न विनोदभूरभूत् ॥ ८ ॥**

दृढ़ बन्धों से सुन्दर, सुकुमार, रसों और भावों में सनी हुई, कवियों की 'कोमल कान्त पदावली' भी, आश्चर्य है कि, उन सहृदय और विदग्ध नरेश को आनन्दित न कर सकी ॥ ८ ॥

**मधुमत्तविदग्धकामिनीभणितादप्यधिकं मनोरमान् ।**
**अभिनन्दति न स्म भूपतिः स विपञ्चीकलनिक्वणानपि ॥ ९ ॥**

मदिरा से मत्त और कामकला में चतुर कामिनी के सरस शब्दों से भी अधिक मनोहर, वीणा के सुन्दर स्वर भी उन्हें प्रमुदित न कर सके ॥ ९ ॥

**मदनेष्युपदेष्टुमिच्छवः कुटिलभ्रूदलवल्गुचालनैः ।**
**नयनान्तनिरस्तरङ्गितैस्तृणयन्त्यस्तरुणीर्नभःसदाम् ॥१०॥**
**सविलासपदाम्बुजार्पणैरनुगृह्णन्त्य इवावनीतलम् ।**
**प्रमदा न मदालसा मनागपि निन्युर्वशतां विशां पतिम् ॥११॥**

टेढ़ी भौंहों को नचाकर कटाक्षों द्वारा मानों पुष्पधन्वा कामदेव को तीर चलाने की विद्या में उपदेश देने की इच्छा रखनेवाली, अपाङ्गों के विलासों से स्वर्ग की तरुणियों को भी तृणवत् तुच्छ बना देनेवाली, मन्द सविलास चाल के बहाने मानों अपने पदारविन्दों से धरातल को अनुगृहीत करनेवाली, मद में अलस प्रमदायें भी उन राजा को जरा भी वश में न कर सकीं ॥ १०–११ ॥

**इति दुर्मनसं मनीषिणं विषये सत्यपि वीतवासनम् ।**
**अधिराजतया दुरासदं तमलं बोधयितुं न कश्चन ॥१२॥**

विषयों की उपस्थिति में भी वासना-रहित, कठिनता से मिलने योग्य, उन बुद्धिमान् विश्वपति को खिन्न देखकर भी, उनके राजा होने के कारण, उन्हें कोई समझा न सका ॥ १२ ॥

**तनयोऽस्य गुरोरथैकदा सुनयो नामतयोपबृंहितः ।**
**समशीलवयो विचेष्टितैरधिरूढः किल बालमित्रताम् ॥१३॥**

विश्वपति के गुरु के पुत्र, जिनका नाम सुनय था, अवस्था और शील में इनके समान थे और बचपन के मित्र थे ॥ १३ ॥

**वपुषा ललितेन चेष्टितैरभिरामैर्भणितैश्च सूनृतैः ।**
**विशदं परितो विकाशयन्ननिशं विश्वजनीनमाशयम् ॥१४॥**

सुन्दर शरीर से, कुलीन चेष्टाओं से, सत्य और मधुर वचनों से सुनय सदा सब लोगों के हृदयों को अच्छी तरह प्रफुल्लित करते थे ॥ १४ ॥

**द्विगुणं खलु बिम्बमात्मनः सहसाऽऽदर्शसमीपगं दधत् ।**
**कलयन्नधिकोज्ज्वलाः कला रुचिमासाद्य च कृत्स्नपक्षगाम् ॥१५॥**

---

(१५) दर्शे अमायां चन्द्रबिम्बस्याभावः, आदर्शे पुरोधसः बिम्बस्य प्रतिबिम्बात् द्विगुणत्वम् । कृत्स्नपक्षगां रुचिं सम्पूर्णपक्षगां जनानां रुचिं, कृष्णपक्षे शुक्लपक्षे सर्वत्र समानकान्तिं च । कलाः वेदिनिर्माणलेखाद्याः विद्याः चन्द्रकलाश्च ।

**न च वक्रतया विकारितो न कलङ्केन कदाचिदङ्कितः।**
**श्रितवान् नहि जातु वारुणीं न च दोषाकरतामुपागतः ॥१६॥**
**तमसा न तिरस्कृतः क्वचित् प्रतिपक्षो वपुषा मनोभुवः।**
**अपरो ननु कोऽपि निर्मितो द्विजराजः कुतुकेन वेधसा ॥१७॥**

ब्रह्मा ने कौतुकवश सुनय का एक अद्वितीय 'द्विजराज' (श्रेष्ठ ब्राह्मण; चन्द्रमा) के रूप में निर्माण किया था। जब कभी वे दर्पण (आदर्श) के समीप जाते थे तो उनके शरीर-बिम्ब की शोभा (प्रतिबिम्ब के कारण) द्विगुणित हो उठती थी (चन्द्र-बिम्ब तो 'दर्श' अर्थात् अमावस्या के समीप जाने पर लुप्त हो जाता है)। सुनय सब वर्गों के (कृत्स्न पक्ष के) लोगों की प्रीति (रुचि) प्राप्त करके अपनी सारी कलाओं से सदा ही अत्यधिक उज्वल और उन्नत बने रहते थे (चन्द्रमा शुक्लपक्ष की रुचि अर्थात् कान्ति पाकर क्रमशः एक एक कला से बढ़ता है)। सुनय सरल स्वभाव के होने के कारण कभी कुटिलता से दूषित नहीं हुए (चन्द्रमा वक्र अर्थात् टेढ़ा भी रहता है)। सुनय कभी किसी कलंक से लाञ्छित नहीं हुये (चन्द्रमा में कलंक है ही)। सुनय ने कभी वारुणी (मदिरा) का आश्रय नहीं लिया (चन्द्रमा वारुणी अर्थात् पश्चिम दिशा का आश्रय लेता ही है)। सुनय 'दोषाकर' अर्थात् दोषों की खान नहीं थे (चन्द्रमा 'दोषाकर' अर्थात् रात में चमकने वाला है ही)। सुनय 'तमस्' अर्थात् तमोगुण से अभिभूत नहीं थे (चन्द्रमा कभी कभी 'तमस्' अर्थात् अन्धकार से तिरस्कृत हो जाता है)। सुनय शरीर सौन्दर्य में कामदेव के प्रतिद्वन्द्वी थे (चन्द्रमा कामदेव का मित्र है)। इन कारणों से ब्राह्मण-श्रेष्ठ सुनय एक अद्वितीय 'द्विजराज' थे ॥ १५–१७ ॥

**श्रुतिघोषपवित्रितश्रुतिः स्मृतिसम्भेदसमेधितस्मृतिः।**
**प्रथितः पथि तर्ककर्कशे विजयी जैमिनिशास्त्रविस्तरे ॥१८॥**
**सुविवेकविशेषितात्मनामपि वेदान्तविदां विशारदः।**
**इतिहासपुराणपारगः सतताभ्यस्तसमस्तभारतः ॥१९॥**
**पुरुहूतपुरोहितोपमः किल कामन्दकनीतिनिर्णये।**
**विनयेन विनीतचापलः सहजां बिभ्रदपि प्रगल्भताम् ॥२०॥**

सुनय के कान वेद-ध्वनि के श्रवण से पवित्र हो गये थे और उनकी स्मरण-शक्ति विविध स्मृतियों के अनुशीलन से तीव्र हो गई थी। तर्कशास्त्र के कर्कश पथ के वे पारगामी थे। पूर्व-मीमांसा के शास्त्रार्थों में वे विजयी थे। वेदान्त सम्प्रदाय के विवेकशील विद्वानों में वे विशारद थे। इतिहास और पुराण में निष्णात थे। सदा समस्त महाभारत का अध्ययन करने वाले थे। कामंदक राजनीति में वे इन्द्र के पुरोहित बृहस्पति के समान थे। विनयशीलता से वे चपलता को दूर कर चुके थे और स्वभाव से ही गंभीर थे ॥ १८–२० ॥

---

(१६) वारुणी वरुणस्य पश्चिमा दिक् मदिरा च। दोषाणां आकरः समूहः दोषां रात्रिं करोतीति दोषाकरश्चन्द्रश्च।

(१७) चन्द्रस्तु कामस्य मित्रम्, अयं पुरोधाश्च रूपेण कामस्य प्रतिपक्षः। द्विजेषु श्रेष्ठः पुरोधा, द्विजराजश्चन्द्रश्च।

**रहसि स्थितमाहितस्थितिः समयज्ञः समये समेत्य तम् ।**
**इदमानतकन्धरः शनैरधिगम्यानुमतिं न्यवेदयत् ॥२१॥**

विशाल कंधों वाले, परिस्थिति को समझने वाले, समय को जानने वाले वे सुनय एक दिन अनुकूल समय देख कर एकान्त में स्थित राजा विश्वपति के पास गये और उनसे आज्ञा लेकर इस प्रकार निवेदन किया ॥ २१ ॥

**उपदिष्टमुपायदर्शिभि र्न विना प्रश्नमुदीरयेत् क्वचित् ।**
**इति सर्वत एव सज्जते किमुताऽधृष्यतमेषु राजसु ॥२२॥**

नीति-कुशल विद्वानों का उपदेश है कि बिना प्रश्न किये गये उत्तर नहीं देना चाहिये। यह सामान्य नियम सब जगह लागू है, फिर स्वतन्त्र नरेशों की तो बात ही क्या ॥ २२ ॥

**अतिविस्मयिनीं तथापि ते नृप निर्वेदनिवेदिनीं स्थितिम् ।**
**अवलोक्य वितर्कविक्लवं हृदयं मे दिशति प्रगल्भताम् ॥२३॥**

फिर भी खिन्नमनस्कता और निर्वेद को प्रकट करने वाली तथा अत्यन्त आश्चर्य में डाल देने वाली आपकी इस दशा को देखकर तर्क-वितर्क से पीड़ित मेरा हृदय आपकी सेवा में कुछ निवेदन करने के लिये, हे राजन्! मुझे प्रेरित कर रहा है॥ २३ ॥

**इयमायतिमञ्जुला मही महनीयोज्ज्वलविक्रमेण ते ।**
**चिरमुद्धृतवैरिकण्टका सुतरां पाणितलावलम्बिनी ॥२४॥**

यह विशाल और सुन्दर पृथ्वी, जिसके शत्रुरूपी काँटों को आप, अपने श्लाघ्य और उज्वल पराक्रम से, पहले ही उखाड़ कर फेंक चुके हैं, आपके अधिकार में हैं ॥ २४ ॥

**प्रणयैः सुहृदः सभाजिता महसा विद्विषतां सभा जिता ।**
**चरितैर्जगदुत्तरैस्त्वया जगदेतन् नृपतेऽनुरञ्जितम् ॥२५॥**

आपने मित्रों का सस्नेह सत्कार किया है और अपने तेज से शत्रुओं की सभा को जीत लिया है। राजन्! आपने अपने अलौकिक कृत्यों से इस जगत् को प्रसन्न और अनुरक्त बना रक्खा है। ॥ २५ ॥

**नितरां निरुपप्लवाः प्रजा वसुपूर्णा वशगा वसुन्धरा ।**
**परितः परितर्पितो मखैः समये वर्षति वारि वासवः ॥२६॥**

प्रजा को किसी प्रकार के संकट का भय नहीं है। वसुन्धरा (पृथ्वी) अपने नाम को सार्थक करती हुई वसु (धन धान्य) से पूर्ण है और आपके वश में है। चारों ओर यज्ञ होते रहते हैं जिनसे तृप्त होकर इन्द्र समय पर वर्षा करता रहता है॥ २६ ॥

**तव जाग्रति दोर्युगे भुवो धुरि धुर्ये प्रतिलब्धविभ्रमाः ।**
**करियूथपकैतवादमी धृतसेवाः सविधे कुलाद्रयः ॥२७॥**

आपके पृथ्वी का भार उठाने में समर्थ भुजयुगल के इस कार्य में प्रवृत्त होने पर कुलाचल पर्वत ही मानों अवकाश पाकर बड़े बड़े हाथियों के बहाने आपकी सेवा में संलग्न हैं॥ २७ ॥

**अमितैः परितो विसृत्वरैर्वसुविश्राणननीरनिर्झरैः ।**
**अपि जाङ्गलभूमयस्त्वया विहितास्तावददेवमातृकाः ॥२८॥**

आपके दानसंकल्प के अपार जल की जो नदियाँ चारों ओर बह निकली हैं उनके कारण जंगली देश भी 'अदेवमातृक' अर्थात् 'नदीमातृक' (वह भूमि जहाँ नदी या नहरों से सिंचाई होती है) बन गये हैं ॥ २८ ॥

**अभिरामतरं निरामयं भवतो वीक्ष्य वपुर्वधूजनः ।**
**नरदेव निरादरोऽभवद् भिषजोर्नाकनिवासिनोरपि ॥२९॥**

हे नरदेव ! आपके अत्यन्त सुन्दर और स्वस्थ शरीर को देखकर रानियों के मन में स्वर्ग के वैद्य अश्विनीकुमारों के सौन्दर्य और वैद्य विद्या के प्रति कोई आदर नहीं रहा है ॥ २९ ॥

**इति ते कृतकृत्यता मया कृतिनां नायक निश्चिता धिया ।**
**सुविचारयताऽपि दृश्यते न च निर्वेदनिदानमण्वपि ॥३०॥**

कर्मठ पुरुषों में श्रेष्ठ ! मेरी मति के अनुसार तो आपको जो कार्य करने चाहिये थे वे सब आप कर चुके हैं। खूब विचार करने पर भी मुझे आपके खेद का ज़रा भी कारण नहीं दिखाई देता ॥३०॥

**रिपवो वनगोचरा अपि स्फुटमुत्साहविपर्ययं तव ।**
**निशमय्य विधातुमिच्छवः पुनराशाङ्कुरमात्मनो हृदि ॥३१॥**

आपके शत्रु जो इस समय आपके भय से वन में छिप रहे हैं आपकी उदासीनता और निर्वेद की खबर सुनकर फिर अपने मन में आशा का अंकुर उपजाना चाहते हैं ॥ ३१ ॥

**विधुरं ध्रुवमप्रसादतः सदसि प्रेक्ष्य सदीशितुर्मुखम् ।**
**न च नोद्विजतेऽनुजीविनां हृदयं भूरिवितर्कसङ्कुलम् ॥३२॥**

सभा में आपका अप्रसन्न और उदासीन मुख देखकर आपके शुभचिन्तकों के हृदय नाना प्रकार के संकल्प-विकल्पों से पीड़ित होकर व्याकुल हो जाते हैं ॥ ३२ ॥

**सरितां पतिरप्यधीरतां भजते कारणगौरवात् क्वचित् ।**
**न कदापि मनो महीयसां प्रलयेऽपि प्रतियाति वैकृतम् ॥३३॥**

समुद्र भी ज्वार के समय (चन्द्रमा के प्रेम के) गुरुकारणवश अधीर हो उठता है, किन्तु महान् पुरुषों का मन प्रलय में भी विकृत नहीं होता ॥ ३३ ॥

**विषयेष्वधिका विरागिता विजनेषु स्पृहयालुता तथा ।**
**शमिनां समवैति शर्मणे महसाक्रान्तभुवां न भूभुजाम् ॥३४॥**

विषयों में अधिकाधिक वैराग्य और अधिकाधिक एकान्तप्रेम निवृत्तिमार्ग के लोगों के लिये कल्याणकारक होते हैं, अपने तेज से पृथ्वी को वश में रखने वाले राजाओं के लिये नहीं ॥ ३४ ॥

---

(२८) अदेवमातृकाः नदीमातृकाः नद्यः मातरः धान्यादिसंवर्धनेन पालिकाः येषां ते ।

(२९) राज्ञः वपुषा स्ववैंद्यौ अश्विनौ सौन्दर्ये अधःकृतौ, निरामयत्वात् च उपेक्षितौ तद् दृष्ट्वा वधूजनस्तयोः निरादरोऽभूत् ।

**तनया महतां महीभृतां परिणीता हरिणीदृशस्त्वया ।**
**नयनान्तनिदेशपात्रतामपि यासामभिनन्दति स्मरः ॥३५॥**

बड़े बड़े राजाओं की मृगनयनी कुमारियों का आपने पाणिग्रहण किया है जिनकी आँखों के इशारे पर नाचने में कामदेव अपना गौरव समझता है ॥ ३५ ॥

**जनिता न धुरन्धराः सुताः प्रमदाः प्रेमभरेण नादृताः ।**
**नहि सौम्य शमः समञ्जसस्तरुणस्त्रीप्रथमातिथौ तव ॥ ३६ ॥**

न तो आपने अभी राज्य-भार सँभालने योग्य राजकुमार ही उत्पन्न किये हैं और न आपने अभी रानियों का प्रेम-सत्कार किया है। स्त्रियों के तारुण्य की प्रथम तिथि में ही आपको इस प्रकार का वैराग्य शोभा नहीं देता ॥ ३६ ॥

**क्व तनुर्नवयौवनाश्रया क्व विरागस्तव देव दारुणः ।**
**न निदाघकठोरमातपं सुकुमारा सहते हि माधवी ॥३७॥**

देव ! कहाँ तो आपका नवयौवन से सुशोभित यह शरीर और कहाँ यह भीषण वैराग्य ! सुकुमार माधवी लता ग्रीष्म की घोर गर्मी सहन नहीं कर सकती ॥ ३७ ॥

**असमीक्ष्य कुलक्रमागतं करणीयं निजविक्रमोचितम् ।**
**जननाथ विरज्यतस्तव प्रविलुप्येत पुरार्जितं यशः ॥३८॥**

जननाथ ! अपने पराक्रम के अनुरूप और अपनी कुल-परम्परा के अनुकूल कर्तव्य को न करके अभी से असमय में वैराग्य लेने से जो यश आपने अभी तक संचित किया है वह भी लुप्त हो जायगा ॥ ३८ ॥

**अथवा वितथं प्रजल्पितं मम सन्देहतरङ्गितात्मनः ।**
**महतां मकरालयस्य वा कथमन्तःस्थितवस्तुसंस्तवः ॥३९॥**

अथवा मिथ्या सन्देह से मेरा मन विचलित हो जाने के कारण मैंने यह सब झूठ ही कहा। वास्तव में गंभीर महापुरुषों के और समुद्र के अन्तस्तल में निहित वस्तु का पता लगाना कठिन है ॥ ३९ ॥

**तदहं नरदेव वेदितुं स्फुटमिच्छामि चिकीर्षितं तव ।**
**महसो हि विना प्रकाशनान् न पदार्थस्य निरूपणं भवेत् ॥४०॥**

अत एव, हे नरदेव ! आपकी इच्छा को मैं स्पष्ट जानना चाहता हूँ क्योंकि उज्वल प्रकाश के बिना पदार्थ का ठीक ठीक निरूपण नहीं हो सकता ॥ ४० ॥

**यततां सुमना मनीषितं यदि सिध्येद् विहितैरुपक्रमैः ।**
**नहि ते कृतिसाध्यमेव चेत् किमु खिद्येत खपुष्पमार्गणैः ॥४१॥**

हे सुन्दर मन वाले नरेश ! यदि आपका मनोरथ विहित उपायों द्वारा साध्य है तो उसे सफल करने का शीघ्र यत्न कीजिये, और यदि वह असाध्य है तो व्यर्थ में आकाशपुष्प की खोज में क्यों कष्ट पा रहे हैं ? ॥ ४१ ॥

---

(३६) तरुणस्त्रीणां प्रथमातिथौ प्रतिपदि यौवनारम्भे इत्यर्थः ।

**इतिवादिनमादिवर्णजं सुनयं सूनृतभाषितेन सः।**
**अवदद् वदतां वरो नृपः स्वरशिष्यायितनूतनाम्बुदः ॥४२॥**

ब्राह्मण-श्रेष्ठ सुनय के ये वचन सुन कर गंभीर घोष से नवीन मेघ को अपना शिष्य बनाने वाले, बोलने में कुशल, राजा विश्वपति ने इस प्रकार सत्य बात कही ॥ ४२ ॥

**अनुकूलतरेण यत् त्वया वचनं सम्प्रति सोपपत्तिकम्।**
**प्रणयात् प्रणिधाय भाषितं हृदयं प्रह्वयतीव तन् मम ॥४३॥**

आपने जो स्नेहवश सावधान मन से युक्तियुक्त और अत्यन्त अनुकूल बातें कहीं उनको सुन कर मेरा मन बहुत विनीत हुआ है ॥ ४३ ॥

**तदपि स्वमहं विभावयन् बत साधारणमन्यपार्थिवैः।**
**न मनो विनियन्तुमुत्सहे वशगायामपि सर्वसम्पदि ॥४४॥**

तथापि मैं अपने आपको अन्य राजाओं के समान साधारण समझ रहा हूँ और इसीलिये सब प्रकार की सम्पत्ति होते हुये भी, मैं अपने मन को शान्ति देने में समर्थ नहीं हो पा रहा हूँ॥४४॥

**हरभूधरतोऽपि शाश्वती यदि जागर्ति न कीर्तिरुज्वला।**
**तरुणीनयनान्तचञ्चलैः किमु साम्राज्यसमुद्भवैः सुखैः ॥४५॥**

यदि कैलास पर्वत से भी अधिक शुभ्र और अधिक चिरस्थायी कीर्ति इस विश्व में व्याप्त न रहे, तो तरुणी स्त्रियों के कटाक्ष के समान चञ्चल और क्षणिक साम्राज्य से उत्पन्न होने वाले सुखों से क्या लाभ ? ॥४५ ॥

**अधिगम्य निरूढमाशयं किल रत्नाकरमेखलापतेः।**
**द्रुतमस्य विगाहनक्षमां प्रतिपेदे सुनयः सरस्वतीम् ॥४६॥**

समुद्र-रशना पृथ्वी के पति विश्वपति के हृदय में रूढ़ इस आशय को समझ कर सुनय ने शीघ्र इस आशय की प्राप्ति के उपाय बताने में समर्थ ये वचन कहे ॥ ४६ ॥

**प्रतिपालनमत्र वस्तुनः सुधियस्तद्वदलब्धसाधनम्।**
**द्वयमाहुरिहेष्टसाधनं तदुपायाः परमुद्यमाः परे ॥४७॥**

विद्वान् लोग इष्ट साधन के लिये दो बातें (योग और क्षेम) बताते हैं—प्राप्त वस्तु की रक्षा (क्षेम) और अप्राप्त वस्तु की प्राप्ति (योग)। अन्य सब उद्योग इन्हीं के उपाय हैं ॥ ४७ ॥

**अनयोः प्रथमे प्रवर्तते नियतं सर्वजनः प्रयत्नतः।**
**विरमत्यपि नाऽऽफलोदयं तदसिद्धौ महदेव दुर्यशः ॥४८॥**

इनमें से पहली बात के लिये—प्राप्त वस्तु की रक्षा के लिये—सभी लोग सदा प्रयत्नशील रहते हैं और सफलता मिलने तक प्रयत्न नहीं छोड़ते क्योंकि प्राप्त वस्तु की रक्षा न करने में तो बड़ी भारी अपकीर्ति है ॥ ४८ ॥

**अपरं तु निरन्तरं गुणैर्नयविक्रान्तिमुखैः प्रसाधयन् ।**
**लभतेऽद्भुतकीर्तिसत्कृतिं यदि न स्यान् मदतो विकत्थनम् ॥४९॥**

किन्तु नीति के अनुरूप गुणों से निरन्तर प्रयत्नशील धीमान् पुरुष अप्राप्त को प्राप्त करके अद्भुत यश से सत्कृत होते हैं, यदि वे प्रमादवश डींग मारकर गुप्त उपायों को प्रकट न कर दें॥४९॥

**कति न क्षितिरक्षिणः क्षिताविह जाताः परिभोगलालसाः ।**
**गणयन्ति जनास्तमेव तु त्रिजगद् यस्य यशोभिरुज्वलम् ॥५०॥**

इस पृथ्वी पर अनेक राजा हो गये हैं जो केवल भोग-विलास ही में लिप्त रहे। उन्हें आज कोई जानता भी नहीं। लोग उन्हीं को याद रखते हैं जो अपने सुयश से तीनों लोकों को उज्वल बना जाते हैं ॥ ५० ॥

**अवनीमवनीशवंशजा वशयन्तः कुलजेन तेजसा ।**
**सुकृतैरुपभुञ्जते परं न हि तत्राधिकविक्रमः क्रमः ॥५१॥**

प्रायः राजाओं के वंशज अपने कुल परम्परागत ऐश्वर्य के कारण पृथ्वी को अपने वश में रख कर अपने पुण्यों से राज्य-सुख का उपभोग कर लेते हैं। इसमें उनका अपना कोई अधिक पराक्रम नहीं ॥ ५१ ॥

**यदि कश्चन जायते पुमानिह विश्वोद्यमबुद्धिपौरुषः ।**
**स समुज्वलयन् निजान्वयं ध्वनयत्युद्भटकीर्तिडिण्डिमम् ॥५२॥**

किन्तु जो राजा अपनी सर्वतोमुखी प्रतिभा और अप्रतिहत पौरुष से विश्व को अपने वश में करता है वही अपने कुल को उज्वल बनाता है और उत्कृष्ट कीर्ति का ढिंढोरा पीट जाता है ॥५२॥

**महसां निधयो महोदधेर्मणिवर्गाः कति वा न जज्ञिरे ।**
**हरिकण्ठतटाधिरोहणात् परमेकः प्रथितोऽस्ति कौस्तुभः ॥५३॥**

समुद्र में से (मन्थन के समय) नाना प्रकार के अत्यन्त उज्वल और प्रकाशमान मणियों के समूह निकले, किन्तु भगवान् विष्णु के वक्षःस्थल पर स्थान प्राप्त कर लेने के कारण एक कौस्तुभ मणि ही आज तक विख्यात है ॥ ५३ ॥

**मनुवंशभवो भगीरथस्त्रिजगद्गीतयशा विशालधीः ।**
**रघुपङ्क्तिरथादयः परे प्रथितास्ते पृथगद्भुतैर्गुणैः ॥५४॥**

मनुवंश में जन्म लेने वाले महात्मा भगीरथ का यश आज भी तीनों लोकों में गाया जाता है। रघु और दशरथ आदि भी अपने अद्भुत गुणों के कारण विख्यात हैं ॥ ५४ ॥

**अपरस्तव पूर्वजेषु कः प्रथितो दीक्षितवासुदेवतः ।**
**स्वयमर्जितमूर्जितौजसा नवराज्यं नृवरः शशास यः ॥५५॥**

आपके पूर्वजों में भी दीक्षित वासुदेव के समान और कौन प्रतापी हुआ ? वासुदेव ही थे जिन नर-रत्न ने अपने भुजबल के तेज से नवीन राज्य स्थापित कर शासन किया ॥ ५५ ॥

**इतरोऽपि तदन्वयोद्भवोऽजयपालः स कथं न गण्यताम् ।**
**उपपुष्करमन्यदुष्करं निरमाद् योऽजयमेरुदुर्गकम् ।।५६।।**

हाँ, उनके वंश में जो अजयपाल हुए उनकी गिनती भी क्यों न की जाय ? क्योंकि उन्होंने पुष्कर तीर्थ के समीप अन्य लोगों के लिये दुष्कर अजयमेरु (अजमेर) दुर्ग का निर्माण किया ।।५६।।

**श्रमविक्रमनीतिरीतिभिस्त्वमसाधारणमर्जयन् यशः ।**
**भवितासि भुवि प्रतिष्ठितो ध्रुवमाकल्पमनल्पपौरुषः ।।५७।।**

महापौरुषवान् आप पराक्रम और राजनीति की रीतियों से असाधारण यश प्राप्त करके प्रलय-काल तक इस संसार में निश्चित ही प्रतिष्ठित हो जायेंगे ।। ५७ ।।

**मतिमानतिमानुषं यशः पदवीं वा प्रतिपित्सुरुच्छ्रिताम् ।**
**तपसा जपसाधनेन वा वरिवस्येद् विधिनेष्टदेवताम् ।।५८।।**

जो बुद्धिमान् अतिमानुष यश अथवा अलौकिक पद प्राप्त करना चाहता है उसे चाहिए कि विधिपूर्वक तप और जप के साधन से इष्ट देवता को प्रसन्न करे ।। ५८ ।।

**अखण्डब्रह्माण्डं सहचरितगाण्डीववलयः**
**स्वदोर्दण्डेनैव प्रसभमपहर्तुं प्रभुरपि ।**
**समाराध्य श्रद्धासमुचिततपोभिः पशुपतिं**
**प्रपेदे रौद्रास्त्रं स किल नरनामा नरहरिः ।।५९।।**

मनुष्यों में श्रेष्ठ अर्जुन, जिनका दूसरा नाम 'नर' भी था, सदा साथ रहनेवाला गाण्डीव धनुष ही जिनका वलय था, और जो अपने भुज-दण्ड के पराक्रम से सारे ब्रह्माण्ड को हठात् वश में करने में समर्थ थे, उन्होंने भी पूर्ण श्रद्धा के साथ उचित तपस्या करके भगवान् शंकर को प्रसन्न किया और उनसे रौद्रास्त्र प्राप्त किया ।। ५९ ।।

**त्वमप्येवं देवं कमपि सुखसेवं परतरं**
**भजन्नद्धा श्रद्धाधिकतरविशुद्धाशयतया ।**
**अरण्ये पुण्ये वा क्वचन पशुशून्येऽपि विषये**
**ध्रुवां सिद्धिं विद्धि प्रगुणितसमृद्धिं करगताम् ।।६०।।**

आप भी अब किसी पवित्र वन में या किसी प्राणि-शून्य निर्जन स्थान में पूर्ण श्रद्धा से अपने हृदय को विशुद्ध करके किसी परात्पर, सुख से सेवा किये जाने योग्य, आशुतोष देवता का भजन करें और निश्चय ही प्रगुणित समृद्धि से युक्त सिद्धि को अपनी मुट्ठी में आई हुई समझें ।। ६० ।।

**शुम्भाऽसुरप्रशमनी सकलार्थदात्री शाकम्भरी जनपदे भवति प्रतीता ।**
**आराधयन्नभिमतां परदेवतां तां वीतान्तरायमवधारय सिद्धमर्थम् ।।६१।।**

शुम्भ दैत्य को मारने वाली, सम्पूर्ण सिद्धियों को देनेवाली, भगवती इस देश में (साँभर में) शाकंभरी के नाम से प्रसिद्ध है। इन परमपूज्य परदेवता भगवती की आराधना करके आप विघ्नों को नष्ट और अर्थ को सिद्ध समझें ।। ६१ ।।

**भूरीणि भूयिष्ठफलानि दानान्यदाद् वदान्यप्रवरः सदापि ।**
**उपस्थितायामथ कामनायामन्यैव धन्याऽजनि दानधारा ॥२०॥**

दानी-शिरोमणि सिंहराज सदा ही उत्कृष्ट फल वाले विपुल दान दिया करते थे। अब पुत्र की कामना के कारण तो उनकी एक विलक्षण तथा स्तुत्य दान-परंपरा प्रारंभ हुई ॥२०॥

**स भारतादिश्रवणे द्विजेन्द्रान् सभारतान् सन्ततमाश्रितोऽपि ।**
**सन्तानकादप्यधिकं दुरापं सन्तानकामो मनुते स्म कामम् ॥२१॥**

सदा महाभारत आदि पुण्य ग्रन्थों के श्रवण के समय सभारत ब्राह्मण-श्रेष्ठों का आश्रय लेने पर भी, पुत्र की कामना वाले सिंहराज ने अपनी इच्छा को कल्पवृक्ष से भी अधिक दुष्प्राप्य माना ॥२१॥

**बोधिद्रुमं बुद्धिमती कथञ्चित् परीत्य पारिप्लवलोचना सा ।**
**रूक्षत्वचं वक्षसि योजयन्ती कदर्थनं स्वार्थवशाद् विषेहे ॥२२॥**

बुद्धिमती मनोरमा ने, डबडबाई आँखों से पीपल के पेड़ की परिक्रमा करके, पुत्र की कामना के कारण किसी प्रकार उसकी रूखी छाल को वक्षःस्थल पर धारण करने का कष्ट सहा ॥२२॥

**वैद्यैः सुविद्यैर्यशसानवद्यैः सिद्धौ प्रसिद्धैरपि शुद्धवृत्तैः ।**
**प्रसाधितां सन्ततिमौषधानां सा सन्ततं सन्ततये सिषेवे ॥२३॥**

शुद्ध आचरण वाले, अनवद्य यश वाले, सिद्धि में प्रसिद्ध, विद्वान् वैद्यों द्वारा तैयार की गईं नाना प्रकार की ओषधियों का मनोरमा ने सन्तानार्थ निरन्तर सेवन किया ॥२३॥

**एवंविधैस्तैर्विविधैरुपायैः प्रयासभाजोप्यवनीभुजोऽस्य ।**
**मनोरथे नाऽभवदङ्कुरोऽपि चिरन्तने बीज इवोषरोप्ते ॥२४॥**

उपर्युक्त प्रकार के और इनसे भी विविध प्रकार के उपायों द्वारा पुत्रप्राप्ति की इच्छा को पूर्ण करने का प्रयास करने वाले सिंहराज के मनोरथ में, ऊसर भमि में बोये गये पुराने बीज के समान, ज़रा भी अंकुर नहीं उगा ॥२४॥

**सोऽचिन्तयत् सञ्चितपुण्यकर्मा मर्माविधं वीक्ष्य विधेर्विधित्साम् ।**
**मनीषिते स्वे नितरान्निराशः प्रियाकरिष्यन् निजपूर्वजानाम् ॥२५॥**

संचित पुण्य वाले और पूर्वजों को प्रसन्न करने की इच्छा रखने वाले सिंहराज ने विधि के विधान को मर्मस्पर्शी और विपरीत जानकर अपनी इच्छा की पूर्ति में बिलकुल निराश होकर इस प्रकार विचार किया—॥२५॥

**श्रद्धानुबद्धान्यपि वैदिकानि केनापि नाङ्गेन वियोजितानि ।**
**कर्माणि हन्त स्वफले पराञ्चि को वेद भावं भवितव्यतायाः ॥२६॥**

अत्यन्त श्रद्धा के साथ सांगोपाङ्गतया विधिपूर्वक किये गये वैदिक यज्ञादिक कर्म भी जब अपना फल देने में विमुख हो रहे हैं तो भवितव्यता को कौन जान सकता है ? ॥ २६॥

---

(२१) सन्तानकात् कल्पद्रुमात् ।
(२५) प्रियाकरिष्यन् प्रियं विधित्सुरित्यर्थः ।

**वेदानुशिष्टे पथि शिष्टजुष्टे नास्त्येव सन्देहलवावतारः ।**
**फलानुमेयस्य महान् ममायमधर्मराशेरशिवो विवर्तः ॥२७॥**

शिष्ट पुरुषों द्वारा आश्रित वेद-प्रतिपादित मार्ग में अणुमात्र भी सन्देह नहीं हो सकता। जो कुछ हो रहा है उससे यही अनुमान होता है कि यह सब मेरे संचित पापों के महान् समूह का अमंगलकारी परिणाम है ॥२७॥

**नूनं ममान्ते रिपवो दुरन्ता निःशङ्कमस्वामिकमस्मदीयम् ।**
**राष्ट्रं ग्रहीष्यन्ति गिरिप्रदेशं विपन्नपारीन्द्रमिव द्विपेन्द्राः ॥२८॥**

हमारे वाद निश्चय ही हमारे उग्र शत्रु निःशंक होकर हमारे स्वामी-हीन इस गिरिप्रदेश राज्य को छीन लेंगे, जिस प्रकार सिंह के मर जाने पर गिरिप्रदेश पर हाथी ही राज्य करने लगते हैं ॥२८॥

**वृन्दावतीयं कुलराजधानी पाणौ परेषां पतितैव तावत् ।**
**अतो निवृत्ता भुवि चाहुवाणवंशस्य वार्तापि यशोविलोपात् ॥२९॥**

यह हमारी कुल राजधानी वृन्दावती (बूंदी) निश्चय ही शत्रुओं के हाथ में पड़ जायगी। यश के लुप्त हो जाने से संसार में अव चौहान वंश की वार्ता भी समाप्त हो जायगी ॥२९॥

**स्नेहेन पुत्रप्रतिमं ममापि यवीयसः पुत्रमतो युवानम् ।**
**राज्येऽभिषेक्ष्यामि समक्षमेव भीमं रिपूणामिह भीमदेवम् ॥३०॥**

अतः मैं अब अपने छोटे भाई के पुत्र, शत्रुओं के लिये भयंकर भीमदेव का, जिस पर मेरा भी पुत्रवत् प्रेम है, अपने सामने ही राज्याभिषेक कर देता हूँ ॥३०॥

**निश्चित्य चित्तेन विधेयमेवं बुधोपमः प्रेमवशात् प्रियां ताम् ।**
**आभाष्य विद्याविशदान् तथान्यानामन्त्र्य मन्त्रिप्रवरांश्च राजा ॥३१॥**
**दिदेश भीमस्य महाभिषेकसम्भारमाहर्तुमथ स्वभृत्यान् ।**
**तेऽप्येतदाज्ञानुपदं तदैव सम्पादयामासुरदीर्घसूत्राः ॥३२॥**

इस प्रकार मन में निश्चय कर देवताओं के समान (प्रतापी) सिंहराज ने, अपनी महिषी मनोरमा की प्रेमवश अनुमति प्राप्त कर और अन्य विद्वान् मुख्य मंत्रियों से परामर्श कर, अनुचरों को भीम के राज्याभिषेक की तैयारी करने की आज्ञा दी। कार्य को अविलम्ब पूर्ण करने में कुशल अनुचरों ने भी शीघ्र ही इस आज्ञा का पालन किया ॥३१–३२॥

**ततः समाहूय समाहितात्मा हिताय वंशस्य पुरोहितांश्च ।**
**समर्पयामास समः स पित्रा भीमाय धीमान् निजमाधिपत्यम् ॥३३॥**

तत्पश्चात् जितेन्द्रिय, बुद्धिमान् और भीम के पिता के समान सिंहराज ने वंश के राजपुरोहितों को बुला कर अपना राज्य, वंश के हित के लिये, भीमदेव को सौंप दिया ॥३३॥

**तत्रातिभूमिङ्गतमस्य दृष्ट्वा निर्वेदमुद्वेगविदीर्णचेताः ।**
**वाष्पाम्बुपूरं गुरुवत्सलत्वान् नापारयद् वारयितुं कुमारः ॥३४॥**

उस समय सिंहराज के वैराग्य को चरम सीमा पर देख कर कुमार का हृदय शोक-सन्तप्त हो गया। भारी वात्सल्य के कारण सिंहराज की अश्रुधारा को रोकने में कुमार भीम भी समर्थ न हो सके ॥३४॥

**तस्याभिषेकप्रभवप्रवाहैरुवाह शैत्यं सुतरां धरित्री ।**
**विवेश तस्माद्दवथुः प्रथीयानन्तः परानीकपृथुस्तनीनाम् ॥३५॥**

भीम के राज्याभिषेक के जल के प्रवाह से पृथ्वी को शीतलता का अनुभव हुआ; किन्तु उसी से शत्रुओं की विशाल स्तनों वाली कामिनियों के हृदय में विपुल सन्ताप होने लगा॥३५॥

**निवेशितैकाङ्गुलिरेकमस्य गुरुर्ललाटे तिलकञ्चकार ।**
**स्वबान्धवैरञ्जलिभिः परेषां व्यतीतसंस्थास्तिलका विकीर्णाः ॥३६॥**

इधर पितातुल्य सिंहराज ने अपनी एक उँगली से भीम के ललाट में राज्यतिलक किया और उधर शत्रुओं के लिये उनके बन्धु-बान्धवों ने पूरी अञ्जलि द्वारा असंख्य तिलक (तिल) बिखेर दिये (मृतात्मा को सम्बन्धी लोग तिलाञ्जलि देते हैं) ॥३६॥

**तमभ्यषिञ्चत् सकृदेव राज्ये गुरुः पयोभिः किल पुष्करोत्थैः ।**
**सदाभ्यषिञ्चन् निजगर्भरूपं रिपुस्त्रियोलोचनपुष्करोत्थैः ॥३७॥**

पितातुल्य सिंहराज ने भीम का पुष्करतीर्थ के पुनीत जल से एक ही वार अभिषेक किया, किन्तु शत्रुओं की स्त्रियों ने अपने बालकों का, नेत्र रूपी पुष्कर (कमल) से निकले जल से (आँसुओं से) सदा अभिषेक किया ॥३७॥

**महाभिषेकेण महीयमानं नवोच्छ्रितं सोममिवाम्बुराशेः ।**
**मुदा प्रवाष्पः प्रवया युवानमालिङ्ग्य राजानमिदञ्जगाद ॥३८॥**

राज्याभिषेक के कारण बढ़ी हुई महिमा वाले एवं समुद्र से सद्य-स्नात नवोदित उत्तरोत्तर उत्कृष्ट होने वाले द्वितीया के चन्द्र के समान शोभित युवा भीम को प्रौढ़ तथा आनन्दाश्रुयुत सिंहराज ने आलिंगन कर यह शिक्षा दी ॥३८॥

**निशम्य मामप्रजमुज्झितास्त्रं कुतर्कचक्राहितवक्रचित्ताः ।**
**उद्भावयन्तः किमपि प्रतीपा विप्लावयिष्यन्ति बलेन देशान् ॥३९॥**

मुझे निःसन्तान और अस्त्रशस्त्र को त्याग कर वानप्रस्थ आश्रम को अपनाने वाला सुनकर, कुतर्क जाल के कारण अहित और कुटिल मन वाले शत्रु कोई न कोई बहाना खड़ा करके देश में विप्लव मचायेंगे ॥३९॥

**अतः करस्थामपि राजलक्ष्मीं विजित्य भूयोऽपि भुवोधिपांस्तान् ।**
**गुरोर्गृहीतामिव वत्स ! विद्यां पारायणेन प्रवणीकुरुष्व ॥४०॥**

अतः उन राजाओं को फिर से जीत कर, हाथ में आई हुई राजलक्ष्मी को भी, गुरु से गृहीत विद्या के समान, निरन्तर अभ्यास द्वारा सुदृढ़ करो ॥४०॥

**तथेति तथ्यां गिरमाशिषञ्च गुरोर्गृहीत्वाऽवनतेन मूर्ध्ना ।**
**पताकिनीभिर्नृपतिः परीतः प्रातः प्रतस्थे प्रथितप्रतापः ॥४१॥**

नतमस्तक भीम ने 'जो आज्ञा' कह कर सिंहराज के सत्य वचनों को उनके आशीर्वाद के साथ ग्रहण किया। दूसरे दिन ही राजा भीम ने अपने प्रताप को फैलाते हुये सेनाओं को साथ ले विजय-यात्रा के लिये प्रस्थान किया ॥४१॥

---

(३६) व्यतीतसंस्थाः असंख्येयाः । तिलकाः तिलाः ।
(३७) गर्भरूपं बालकम् ।

**प्रोत्साहयन् साहसिकप्रवीरानुत्कर्तयन् कातरलोकचेतः ।**
**दिग्जैत्रयात्रोचितदुन्दुभीनां प्रास्थानिकः प्रादुरभूत् प्रणादः ॥४२॥**

दिग्विजय की यात्रा के प्रस्थान के समय साहसी वीरों का उत्साह बढ़ाने वाला और कायर लोगों के चित्त को भयभीत बनाने वाला दुन्दुभियों का प्रबल घोष हुआ ॥४२॥

**युगान्तजीमूतनिनादघोरान् तत्तूर्यघोषाननलं विषोढुम् ।**
**आकारयामासुरिवात्मपालानाशाः प्रतिश्रुन्मिषतस्तदानीम् ॥४३॥**

उस समय प्रलय काल के बादलों की गर्जना के समान भयंकर उस नगाड़ों के घोष को सहने में असमर्थ दिशायें, प्रतिध्वनि के बहाने, मानों अपने स्वामी दिक्पालों को (अपनी रक्षार्थ) बुला रहीं थीं ॥४३॥

**चमूचराणां चरणोद्धतैः खं रुन्धद्भिरन्धङ्करणैः खरांशोः ।**
**दिक्पालदन्तावलदाननद्यो जम्बालभावं दधिरे रजोभिः ॥४४॥**

सैनिकों के पैरों से उड़ी हुई धूल के कारण, जो आकाश को व्याप्त कर रही थी और सूर्य को धुँधला बना रही थी, दिशाओं के हाथियों के मदजल की नदियाँ कीचड़मय बन गईं ॥४४॥

**उपायनैः सम्यगुपायविज्ञो विज्ञातसारो मगधाधिनाथः ।**
**तमागतं मार्गत एव दूरात् प्रत्युद्गमात् प्रीततरञ्चकार ॥४५॥**

मगध देश के राजा,जो भीमदेव के पराक्रम को जानते थे और जो रक्षा के उपाय में कुशल थे, भीमदेव को आया जान कर, दूर मार्ग तक उनके स्वागत के लिये गये और नम्रतापूर्वक विविध बहुमूल्य उपहार देकर उन्हें अत्यन्त प्रसन्न किया ॥४५॥

**सङ्ग्रामसीम्नि क्षणदत्तरङ्गानङ्गान् निरङ्गान् नयविद् विधाय ।**
**जगाम गङ्गातटवर्त्मनैव गौडोपकण्ठं गरुडोपमानः ॥४६॥**

नीतिकुशल भीमदेव ने युद्धक्षेत्र में थोड़ी देर तक सामना करने वाले अंग देशवासियों के अंगों को छिन्न-भिन्न कर दिया और फिर गंगा के तट के मार्ग से गरुड़ के समान बलवान् और वेगगामी भीम गौड़ देश के समीप पहुँचे ॥४६॥

**सिन्धोरगाधेऽम्भसि शीर्णरश्मौ निमग्नमूर्तौ तरणौ रणेषु ।**
**तमोनुदं सोममिवाथ बङ्गास्तमेव राजानमयुः शरण्यम् ॥४७॥**

युद्धक्षेत्र में सूर्य के नष्ट-किरण होकर समुद्र के अगाध जल में डूब जाने पर वङ्गदेशवासी अन्धकार को नष्ट करने वाले चन्द्र के समान इस राजा भीम की ही शरण में आये (अर्थात् दिन भर युद्ध करक सायंकाल राजा भीम के शरणागत बन गये) ॥४७॥

**कलिङ्गसैन्यं स्वबलान् निरस्य यथा बलं कौरवमुग्रवीर्यम् ।**
**जिष्णुर्यशोभिः सह शात्रवाणां जहार बृन्दानि विषाणिनां सः ॥४८॥**

प्रबल पराक्रम वाली कलिग देश के राजा की सेना को अपने बल से परास्त कर विजयी राजा भीम ने शत्रुओं के यश के साथ-साथ उनके उत्तम हाथियों के समूह भी छीन लिये, जिस प्रकार कि

---

(४६) क्षणं दत्तः रङ्गः युद्धः यैस्तान् ।
(४८) जिष्णुः विजयशीलः, अर्जुनश्च । विषाणिनां गजानां गवाञ्च ।

विजयी अर्जुन, प्रवल कौरव सेना को अपने पराक्रम से परास्त कर, शत्रुओं के यश के साथ-साथ कौरवों द्वारा चुरा कर ले जाई जाने वाली राजा विराट् की गायें भी छीन लाये थे ।।४८।।

**मौर्वीसनाथं करमात्मनोऽसौ कर्णावतंसं समितौ विधास्यन् ।**
**चकार कर्णाटकुटुम्बिनीनां कर्णावतंसे विफलं प्रयासम् ।।४९।।**

युद्धक्षेत्र में अपने धनुष की ज्या से शोभित हाथ को अपना कर्णाभूषण वनाने वाले राजा भीम ने कर्णाट दश की स्त्रियों के कर्णाभूषण पहनने के प्रयत्न को व्यर्थ कर दिया (वैधव्य में आभूषण नहीं पहने जाते) ।।४९।।

**तं कुन्तलाः कुन्तलतासहायं कुन्तीतनूजप्रतिमप्रतापम् ।**
**विलोक्य पर्याकुलकुन्तलान्ता विदुद्रुवुर्दूरविमुक्तकान्ताः ।।५०।।**

कुन्तल देश के लोग कुन्त (भाला) रूपी लता से युक्त और अर्जुन के समान प्रतापी भीम को देखकर घबराहट तथा भय के कारण अस्तव्यस्त बाल वाले वन कर एवं अपनी स्त्रियों को भी दूर असहाय छोड़ कर भाग गये ।।५०।।

**आतङ्कतः प्रच्युतमुच्चलन्त्यस्ताटङ्कचक्रं किल लाटनार्याः ।**
**रणाङ्गणं रिङ्गति भीमदेवे निजं न भूयः पदमारुरोह ।।५१।।**

लाट देश की भय के कारण जल्दी चलने वाली स्त्री का कर्ण आभूषण गिरकर, युद्धभूमि में भीमदेव के चलने के कारण, फिर अपने स्थान पर नहीं पहुँच सका ।।५१।।

**सम्पाद्य पम्पाकमलेषु मैत्रीं गोदां प्रमोदादवगाह्य गाढम् ।**
**आपीय तापीपयसां पृषन्ति तं पार्थिवं पावयति स्म वातः ।।५२।।**

पम्पासरोवर के कमलों से मित्रता करके (सुगन्धित) तथा गोदावरी में प्रसन्नता से अच्छी तरह स्नान करके (शीतल) और तापी नदी के जलकणों को पीकर (मन्द) वायु उन राजा भीम को पवित्र कर रहा था ।।५२।।

**रसातिरेकेण मिथः समेताज्जग्राह युग्माद् युगपद् द्वयं सः ।**
**मुक्ताकलापानपि ताम्रपर्ण्याः सुजातरत्नान्यपि तोयराशेः ।।५३।।**

प्रगाढ़ प्रेम के कारण परस्पर मिले हुये दोनों पति-पत्नी से भीमदेव ने एक साथ दो उपहार ग्रहण किये—ताम्रपर्णी नदी से मोतियों के समूह और समुद्र से सुन्दर रत्न ।।५३।।

**यशःपताकाङ्कितशेखराणि निवेश्य तस्मिन् जयकेतनानि ।**
**सांयात्रिकेभ्यः प्रथमोपनीतं बलिं समादत्त बली यथार्थम् ।।५४।।**

यशरूपी पताका से चिह्नित सिर वाले विजय के झंडे वहाँ गाड़ कर बलवान् भीम ने जहाजी व्यापारियों द्वारा सर्वप्रथम लाई गई भेंट को स्वीकार किया ।।५४।।

**ततः पथा तेन रथाङ्गपाणेः प्रियामयं द्वारवतीमुपेत्य ।**
**पुण्यश्रिया पूर्णतया बभासे मृजाभिरादर्श इवोज्ज्वलश्रीः ।।५५।।**

फिर उस मार्ग से वे भगवान् कृष्ण की प्रिय नगरी द्वारका पहुँच कर पूर्ण पुण्य-लक्ष्मी के कारण, साफ़ किये हुये शीशे के समान, उज्ज्वल शोभा से सुशोभित हुये ।।५५।।

---

(५४) सांयात्रिकाः पोतबणिजः ।

**प्राचेतसीं प्राप्य दिशं प्रचेताः पाश्चात्ययोधैर्जववत्तुरङ्गैः ।**
**आयोधनं सज्यधनुःसहायः प्रसारयामास पुरःशरौघैः ।।५६।।**

पश्चिम दिशा में पहुँच कर प्रकृष्ट चित्त वाले तथा मौर्वीयुत धनुष वाले राजा भीम ने अपने आगे बाणसमूह रखने वाले और वेगगामी घोड़ों वाले पाश्चात्य योधाओं से युद्ध छेड़ा ।।५६।।

**खसानसाधूनसुभिर्वियोज्य स्वबन्धुभिः सिन्धुतटाधिवासान् ।**
**काम्बोजकाम्भोजवने तुषारैःशकान् स काण्डैः शकलीचकार ।।५७।।**

दुष्ट खसों को प्राणों से वियुक्त करके तथा सिन्धु तट के वासियों को अपने बन्धुओं से वियुक्त करके, काम्बोज देशवासियों रूपी कमलवन के लिये तुषार रूप बाणों से उन्होंने शकों के टुकड़े टुकड़े उड़ा दिये ।।५७।।

**इत्थं पराजित्य पराभिमर्दी नराधिनाथः प्रबलानरातीन् ।**
**तुरङ्गरत्नानि पुरङ्गतोऽसौ महार्हतेजांसि जहार तेषाम् ।।५८।।**

शत्रु का दमन करने वाले श्रेष्ठ राजा भीमदेव ने इस प्रकार प्रवल शत्रुओं को परास्त करके उनके बड़े तेजस्वी वहुमूल्य तुरंगरूपी रत्नों को हर लिया ।।५८।।

**आशामथासाद्य कुबेरगुप्तां स दुःसहं प्रज्वलयन् प्रतापम् ।**
**सारं कराक्रान्तिभरेण भास्वान् हिमाद्रिभूमे र्भृशमाचकर्ष ।।५९।।**

तत्पश्चात् कुबेर द्वारा रक्षित उत्तर दिशा में जाकर भीमदेव ने हिमालय की भूमि का सार, अपने दुःसह प्रताप को प्रकट करते हुये, सूर्य के समान, करों (कर; किरणों) द्वारा लादे गये भार से, अच्छी तरह खींच लिया ।।५९।।

**न कामरूपाक्रमणे तदानीं तेजःप्रकर्षोऽभिनवो नृपस्य ।**
**अयं हि देहप्रभया पुरैव विनापि यत्नं जितकामरूपः ।।६०।।**

फिर भीमदेव ने कामरूप (आसाम) देश पर चढ़ाई की। अपने उत्कृष्ट तेज से कामरूप पर आक्रमण करना भीमदेव के लिये नई बात नहीं थी क्योंकि अपने शरीर की कान्ति से वे पहले ही, बिना यत्न किये ही, कामरूप (कामदेव के रूप) को जीत चुके थे ।।६०।।

**इत्थं विधाय जगतीजययोग्ययात्रामुत्सादितप्रतिभटक्षितिपालवर्गः ।**
**वृन्दावतीं रुचिरमङ्गलतोरणाङ्कां स प्राविशद् विशदकीर्तिपवित्रिताशः ।।६१।।**

इस प्रकार जगद्विजय की यात्रा पूर्ण करके और शत्रु-राजाओं के समूह को नष्ट करके, भीमदेव अपने उज्वल यश से दिशाओं को पवित्र करते हुये, स्वागतार्थ सुन्दर और मांगलिक दरवाज़ों से सजाई हुई वृन्दावती (बूँदी) नगरी में लौट आये ।।६१।।

।। इति सुर्जनचरितमहाकाव्ये पञ्चमः सर्गः ।।

---

# षष्ठः सर्गः

**तस्य विग्रहदेवोऽभूत् तनयश्चारुविग्रहः ।**
**निग्रहे वैरिवृन्दानां बहुशो दत्तनिग्रहः ॥ १ ॥**

उन भीमदेव के पुत्र सुन्दर शरीरवाले **विग्रहदेव** हुये जिन्होंने शत्रुओं को युद्ध में कई वार पराजित किया ॥ १ ॥

**पदं पैतामहं तस्मिन्नारोप्य नृपनायकः ।**
**प्रपेदे पूर्ववंश्यानां पदवीं वार्द्धकोचिताम् ॥ २ ॥**

भीमदेव ने उनको पूर्वजों का राज्य सौंप कर पूर्वजों द्वारा वृद्धावस्था में स्वीकृत वानप्रस्थ आश्रम ग्रहण किया ॥ २ ॥

**स्वबलेन विनिर्जित्य गुर्जरान् भृशदुर्जयान् ।**
**राज्यं तेषां गुणप्राज्यमथ जग्राह विग्रहः ॥ ३ ॥**

विग्रहदेव ने अपने पराक्रम और सेना से अत्यन्त दुर्जय गुर्जरों को जीत कर उनके गुणसमृद्ध राज्य को ले लिया ॥ ३ ॥

**यत् पुरं परितो रत्नैः पूरयित्वा प्रजापतिः ।**
**यानि शिष्टानि तान्येव नीरधौ निदधे ध्रुवम् ॥ ४ ॥**

जिन गुर्जरों के नगर को ब्रह्मा जी ने चारों ओर रत्नों से भर कर निश्चय ही बचे-खुचे रत्नों को समुद्र में फेंका था ॥ ४ ॥

**आरात् पारायणे पत्युः शृण्वत्यः श्रुतिसंहिताः ।**
**यत्र ताः शिक्षयन्ति स्म बहून् पटुगिरः स्त्रियः ॥ ५ ॥**

जहाँ वेदपाठी पतियों के समीप वेदों की संहिताओं को सुन कर चतुरवाणी वाली स्त्रियाँ वहुतों को वेद पढ़ाती थीं ॥ ५ ॥

**दधत्यो नखरत्नानि रदनच्छदविद्रुमान् ।**
**दन्तमुक्ताकलापं च कण्ठकम्बुभिरन्विताः ॥ ६ ॥**
**पञ्चबाणवणिक्पण्यवीथयो वामलोचनाः ।**
**यौवनद्रविणैः पुंभिर्यत्रासेव्यन्त सन्ततम् ॥ ७ ॥**

जहाँ नख रूपी रत्नों से, अधर रूपी प्रवालों (मूँगों) से, दाँतरूपी मोतियों के समूहों से और कण्ठ रूपी शंखों से सुसज्जित तिरछे नयनों वाली रमणियाँ कामदेव रूपी जौहरी के बाजार के समान लगती थीं और यौवन रूपी धन वाले पुरुषों से सदा सेवित थीं ॥ ६–७ ॥

---

(१) दत्तनिग्रहः कृतपराजयो दत्तदण्डो वा ।

**सावर्ण्यादविनिर्णेयपीतकौशेयकञ्चुकाः ।**
**अविगूढस्वभावत्वादौन्नत्यपरिणाहयोः ॥ ८ ॥**
**चम्पकप्रतिमाङ्गीनां गाढगुप्ता अपि स्तनाः ।**
**निरावरणवद् यत्र लक्ष्यन्ते स्म विदूरतः ॥ ९ ॥**

चम्पे के फूल के समान हलके पीले रंग वाली कामिनियों के चोली के अन्दर अच्छी तरह छिपाये गये स्तन भी, जिनकी पीली रेशमी चोली का रंग शरीर के रंग से मिल रहा था और जिन स्तनों का उभार और विशाल आकार चोली के अन्दर भी नहीं छिप रहा था, दूर से, खुले हुये से दिखाई देते थे ॥ ८–९ ॥

**भुजान्दोलरणत्कारिकङ्कणाकारितस्मरा ।**
**सविलासपदन्यासतारनूपुरकूजिता ॥१०॥**
**प्रगल्भं सञ्चरन्तीनां यत्र लोलदृशां मुहुः ।**
**स्वभावगतिरप्यासीन् नृत्यवच्चित्तहारिणी ॥११॥**

जहाँ हाथ हिलाते समय वजने वाले कंकणों की ध्वनि द्वारा मानों कामदेव को बुलाने वालीं, सविलास चाल से चलने के कारण जोर से वजनेवाले नूपुरों की ध्वनि से शोभित, एवं चंचल नेत्र वालीं स्त्रियों की स्वाभाविक चाल भी नृत्य के समान मनोहर लगती थी ॥१०–११॥

**यत्र गुर्जरगौराङ्गीदीर्घदृष्टिनिषेवणात् ।**
**जगतां विजये कामः सन्दधे दीर्घदर्शिताम् ॥१२॥**

जगद् विजय करने के लिये गुर्जर देश की गौरवर्ण वाली रमणियों के विशाल नेत्रों का आश्रय लेकर कामदेव ने दूरदर्शिता से काम लिया ॥१२॥

**मृष्टं मुखं मृगाक्षीणां शोणस्थासकरञ्जितम् ।**
**बन्धुजीवार्चितस्येन्दोः सन्दधे यत्र बन्धुताम् ॥१३॥**

मृगनयनी तरुणियों का स्वच्छ और लाल विन्दी से सुशोभित मुख लाल बन्धुजीव (गुल-दुपहरिया) पुष्प से पूजित चन्द्रमा के समान लगता था ॥१३॥

**तत् पुरं स्ववशे कृत्वा प्रविश्य नगरं निजम् ।**
**अनयन् नयवित् कालं निर्वृतो निर्जिताहितः ॥१४॥**

उस नगर को अपने आधीन करके विग्रहदेव अपनी राजधानी में लौट आये। नीतिकुशल राजा शत्रुओं को जीत कर आनन्द से समय बिताने लगे ॥१४॥

**अजायत जयी तस्मात् तनुजो मनुजाधिपात् ।**
**कीर्तिनिन्दितकुन्देन्दुर्गुन्ददेव इति श्रुतः ॥१५॥**

राजा विग्रहदेव के, यश से पूर्ण चन्द्र का तिरस्कार करने वाले, विजयी पुत्र **गुन्ददेव** नाम से विख्यात हुये ॥१५॥

---

(१३) स्थासकं तिलकम्। बन्धुजीवः रक्तवर्णपुष्पविशेषः।

**सुतं वल्लभनामानं लभते स्म स भूपतिः ।**
**अगणेया गुणा यस्य स्वर्गिणामपि वल्लभाः ॥१६॥**

इन गुन्ददेव के **वल्लभ** नामक पुत्र हुये जिनके असंख्य गुण देवताओं को भी प्रिय थे ॥१६॥

**रागिणापि प्रतापेन सङ्गताया निरन्तरम् ।**
**भ्रान्तिभाजोपि यत्कीर्तेः शुद्धिर्वाधिष्णुतामगात् ॥१७॥**

रक्त (अनुरक्त; लाल) प्रताप के साथ सहवास करने वाली और इसीलिये (सहवास से दूषित होने की) भ्रान्ति वाली जिन वल्लभ राजा की कीर्ति की शुद्धि (शुद्धता; शुभ्रता) निरन्तर बढ़ती ही गई ॥१७॥

**विकत्थमानं विक्रान्त्या भोजं भुजभृतां वरः ।**
**तेजसा जितदिक्पालश्चेदिपालमुपाद्रवत् ॥१८॥**

अपने तेज से दिक्पालों को जीतने वाले राज-श्रेष्ठ वल्लभ ने पराक्रम की डींग हाँकने वाले चेदि-नरेश भोज पर चढ़ाई की ॥१८॥

**स वाहिनीभिः सर्वाभिरबाधितविधित्सितः ।**
**अक्रमेण समाक्रामन्नग्रसत् कं धराभृताम् ॥१९॥**

अपनी सब सेनाओं से अपनी इच्छा को अबाध रूप से पूर्ण करने में समर्थ वल्लभ ने क्रम का ध्यान न रख कर सब से पहले शत्रु-राजाओं के सिरमौर भोज पर ही आक्रमण किया ॥१९॥

**अरुणत् सोऽरुणप्रख्यो वेगाद् वैरिवरूथिनीम् ।**
**युगान्ते मुक्तमर्यादो महीमिव महार्णवः ॥२०॥**

(सूर्यसारथी) अरुण के समान तेजस्वी वल्लभ ने शत्रु-सेना को रौंद दिया, जिस प्रकार प्रलय के समय सीमा का ध्यान न रखने वाला समुद्र पृथ्वी को रौंद देता है ॥२०॥

**स क्षणादकरोद् दक्षः प्रतिपक्षस्य पक्षगान् ।**
**सैनिकान् शरवर्षेण सम्पराये पराङ्मुखान् ॥२१॥**

युद्ध-कुशल वल्लभ ने युद्ध में शत्रुपक्ष के सैनिकों को अपने बाणों की वर्षा से भगा दिया ॥२१॥

**तरस्वी तुरगारूढं गरुत्मानिव पन्नगम् ।**
**जीवग्राहं स जग्राह सङ्ग्रामे भोजभूपतिम् ॥२२॥**

वेगशील और अश्वारूढ वल्लभ ने युद्ध में राजा भोज को जीवित ही पकड़ लिया जैसे गरुड़ जीवित सर्प को वेग से पकड़ लेता है ॥२२॥

---

(१७) राज्ञः कीर्तिवनिता प्रेमयुक्तेन परपुंसा सङ्गच्छमानाऽपि तेन सह भ्राम्यन्ती अपि शुद्धेति विरोधः, रक्तवर्णेन प्रतापेन संगताऽपि कीर्तिः रक्ता नाभूत् किन्तु शुभ्रैवेत्यपरो विरोधः, परिहारस्तु प्रजासु प्रेम्णा सर्वत्र प्रभावेण च साहित्यात् विश्वं परिभ्राम्यन्त्या यदीयायाः कीर्तेर्निर्मलता प्रवर्धमानाऽभूदिति ।

(१९) धराभृतां राज्ञां कं मूर्धन्यम् ।

**निःसत्वो वीतशौटीर्यः परपाणिस्थजीवनः ।**
**सोऽभूत् क्षणादगस्त्येन गृहीत इव सागरः ॥२३॥**

उस समय भोज बलहीन, अभिमानहीन और दूसरे के हाथ में स्थित निज जीवन वाला बन कर अगस्त्य मुनि द्वारा आक्रान्त समुद्र के समान लगा जिसके जलचर शान्त हो गये थे, जिसका वेग समाप्त हो गया था और जिसका सारा पानी अगस्त्य की चुल्लू में था ॥२३॥

**शीर्णदंष्ट्रो यथा सिंहः प्रलीनास्त्रपरिच्छदः ।**
**परवान् पञ्जरावासं सेहे भोजः कथञ्चन ॥२४॥**

जिसके अस्त्रशस्त्र रूपी आभूषण छीन लिये गये थे ऐसे भोज ने विवश होकर किसी प्रकार कारावास भोगा जैसे सिंह, जिसकी दाढ़ें तोड़ दी गई हों, विवश होकर किसी प्रकार पिंजरे में रहता है ॥२४॥

**तं नियन्त्रितमारोप्य नियन्ता निजदन्तिनि ।**
**ययौ विजयनिर्घोषैः साकं शाकम्भरीपुरम् ॥२५॥**

नियंत्रित भोज को अपने हाथी पर बैठा कर राजा वल्लभ विजय ध्वनि के साथ शाकंभरी नगरी की ओर रवाना हुये ॥२५॥

**कृतप्रायोपवेशं तमन्वकम्पत वल्लभः ।**
**कृपैव कृपणे शत्रौ शोभते जयशोभिनाम् ॥२६॥**

अनशन लेकर बैठे हुये भोज पर वल्लभ ने दया की। शत्रु के नम्र होने पर जयशील राजाओं को कृपा ही शोभा देती है ॥२६॥

**विमोच्य वैरिणं बन्धादथाऽवन्ध्यपराक्रमः ।**
**सत्कारैः सान्त्वयामास सौम्यः सापत्रपं नृपः ॥२७॥**

जिनका पराक्रम कभी व्यर्थ नहीं गया ऐसे सौम्यमूर्ति वल्लभ ने शत्रु राजा भोज को बन्धन से छुड़ा कर और उसका सत्कार कर लज्जित भोज को सान्त्वना दी ॥२७॥

**किरीटेन शिरः शत्रोः स राजा समयोजयत् ।**
**उच्चैःशिरस्त्वमेतस्य बभूवाधिकमद्भुतम् ॥२८॥**

राजा वल्लभ ने शत्रु के सिर पर किरीट रक्खा, किन्तु इससे उन्हीं का सिर ऊँचा हुआ ॥२८॥

**परं संभावयामास सुवर्णाभरणैः प्रभुः ।**
**अभूवन्नस्य यशसा सुवर्णाभरणा दिशः ॥२९॥**

वल्लभ ने शत्रु को सोने के आभूषणों से सज्जित किया, किन्तु इससे दिशाओं ने उन्हीं के यशरूपी आभूषण धारण किये ॥२९॥

**कृत्वा महार्हसंभारैर्महेन्द्रोचितमर्हणम् ।**
**तं प्रीतिविशदैर्वाक्यैर्विससर्ज विशां पतिः ॥३०॥**

राजा वल्लभ ने बहुमूल्य उपहारों से भोज का इन्द्रोचित सत्कार किया और प्रेम से सुन्दर वचनों से आश्वासन देकर उन्हें अपनी राजधानी भेज दिया ॥३०॥

**व्रजतः पथि भोजस्य यः श्रुतो दुन्दुभिध्वनिः ।**
**स एव वल्लभस्यासीज्जगत्यां जयघोषणा ॥३१॥**

जाने वाल भोज के मार्ग में जो उनके नगाड़ों की ध्वनि सुनाई देती थी वही संसार में वल्लभ के विजय की घोषणा थी ॥३१॥

**नीत्या नितान्तमित्येवं कृतकृत्यत्वमीयिवान् ।**
**अनामयमनाः सम्यक् शशास वसुधां सुधीः ॥३२॥**

नीतिवान्, बुद्धिमान् और स्वस्थचित्त वल्लभ ने कृतकृत्य होकर पृथ्वी पर सुन्दर शासन किया ॥३२॥

**ततस्तस्मिन् यशःशेषे शेषोपमयशोभरे ।**
**अभवत् पृथिवीनाथो रामनाथस्तदात्मजः ॥३३॥**

शेष के समान शुभ्र यश वाले वल्लभ के यशःशेष (स्वर्गवासी) हो जाने पर उनके पुत्र **रामनाथ** राजा हुये ॥३३॥

**रामोऽस्य नाथ इत्येतच्चरितैरन्वमीयत ।**
**भजन्ते स्वामिशीलं हि भृत्यास्तदनुवर्तिनः ॥३४॥**

अनुचर भृत्य स्वामी के शील का अनुकरण करते हैं अतः राजा रामनाथ के गुण और शील के कारण यह अनुमान हुआ कि राम ही इनके नाथ हैं ॥३४॥

**सुतोऽभूत् तस्य चामुण्डश्चण्डदोर्दण्डमण्डनः ।**
**खण्डितारिचमूमुण्डैश्चामुण्डागणतोषकृत् ॥३५॥**

रामनाथ के **चामुण्ड** नामक पुत्र हुये जो प्रवल भुजयुग से शोभित थे और जिन्होंने शत्रु-सैनिकों के मुण्ड काट काट कर देवी चामुण्डा के गणों को संतुष्ट किया ॥३५॥

**सितातपत्रं पुत्राय प्रतिपाद्य ततः पिता ।**
**आस्पदं मुनिभिर्मृग्यमारुरोह मरुत्वतः ॥३६॥**

पिता रामनाथ ने अपने पुत्र चामुण्ड को श्वेत छत्र सौंप कर, मुनियों द्वारा इच्छित इन्द्र-पद प्राप्त किया ॥३६॥

**चारुणा चरितेनाथ चामुण्डो मण्डयञ्जनान् ।**
**वृषाङ्कवरिवस्यायां वशी चित्तं न्यवेशयत् ॥३७॥**

अपने सुन्दर चरितों से प्रजा को प्रसन्न रखने वाले चामुण्ड ने जितेन्द्रिय होकर भगवान् शिव की सेवा में मन लगाया ॥३७॥

**आरोप्य मेदिनीभारं मन्त्रिवृद्धेष्वगृध्नुषु ।**
**वितताान त्रिनेत्रस्य प्रसादौपयिकीः क्रियाः ॥३८॥**

विश्वस्त और वृद्ध मंत्रियों को, जिनको लोभ छू भी नहीं गया था, राज्य-भार सौंप कर चामुण्ड ने शिव को प्रसन्न करने के लिये प्रयत्न प्रारंभ किया ॥३८॥

**त्रिसन्ध्यं त्रिविधाः पूजास्त्र्यम्बकस्य विशेषयन् ।**
**तप्यते स्म तपस्तीव्रं शैवव्रतपरायणः ॥३९॥**

शैवव्रत में परायण चामुण्ड, प्रातः, मध्याह्न और सायं तीनों समय शिव की तीनों प्रकार की विशिष्ट पूजा करके तीव्र तप करने लगे ॥३९॥

**तप्ताङ्गारकरालायां सरण्यां सञ्चचार सः ।**
**भक्तेरनन्यगामिन्या विशुद्धिमिव दर्शयन् ॥४०॥**

मानों अनन्य भक्ति की विशुद्धि दिखाते हुये वे जलते हुये अंगारों के भीषण मार्ग पर भी चले जाते थे ॥४०॥

**एवंविधैरथान्यैश्च तपोभिरतिदुष्करैः ।**
**प्रादात् प्रीतमनास्तस्मै प्रार्थितं प्रमथाधिपः ॥४१॥**

इस प्रकार के तथा अन्य अत्यन्त कठिन तपों से प्रसन्न होकर भगवान् शिव ने उन्हें प्रार्थित वरदान दिया ॥४१॥

**स जित्वा जित्वरः सङ्ख्ये यवनानीकनायकान् ।**
**शकानामधिपं शक्त्या कारातिथिमकारयत् ॥४२॥**

जिसके कारण विजयी चामुण्ड ने अपनी शक्ति से यवन सेना के नायकों को युद्ध में जीता और शकों के स्वामी को रण में जीत कर कैद कर लिया ॥४२॥

**सुतं दुर्लभराजाख्यं कृत्वा राजानमार्यधीः ।**
**चामुण्डश्चन्द्रचूडस्य लोकं लोकोत्तरं ययौ ॥४३॥**

श्रेष्ठबुद्धि वाले चामुण्ड, अपने **दुर्लभराज** नामक पुत्र को राजा बना कर, भगवान् शिव के लोक कैलास में चले गये ॥४३॥

**सुतो दुलसदेवोऽथ जातो दुर्लभराजतः ।**
**कुशलो वीरचर्यायां चिरं वसुमतीमशात् ॥४४॥**

इन दुर्लभराज के **दुलसदेव** नामक पुत्र हुये जो वीरों की चर्या में कुशल थे और जिन्होंने बहुत समय तक पृथ्वी पर शासन किया ॥४४॥

**तस्माद् विशालयशसो वीशलाख्यः सुतोऽजनि ।**
**विषयान् वशयामास विश्वोद्गीतगुणेन यः ॥४५॥**

उन विशाल यश वाले दुलसदेव के **बीसलदेव** नामक पुत्र हुये जिन्होंने विश्व में गाये जाने वाले गुणों द्वारा प्रजा को और विषयों को अपने वश में कर लिया ॥४५॥

**जगद्विजयिवीर्येण वज्रपाणिसमत्विषा ।**
**शक्तित्रयसनाथेन तेन षाड्गुण्यशोभिना ॥४६॥**
**आकर्णकृष्टचापेन सङ्गरे कर्णविक्रमम् ।**
**कर्णं संयम्य ककुभां कर्णपूरीकृतं यशः ॥४७॥**

बीसलदेव ने,जिनका पराक्रम जगत् को विजय करने वाला था, जिनका तेज इन्द्र के समान

था, जो तीनों शक्तियों (प्रभुशक्ति, मंत्रशक्ति और उत्साहशक्ति) से युक्त थे और छहों गुणों (सन्धि, विग्रह, यान आदि) से शोभित थे, युद्ध में कान तक धनुष खींच कर कर्ण के समान पराक्रमी अवन्तिनरेश कर्ण को विजय करके अपने शुभ्र यश को दिशाओं का कर्णफूल बना दिया ॥४६–४७॥

**निबध्याऽवन्ध्यनिर्बन्धः समरे कर्णभूपतिम् ।**
**आददेऽवन्तिनगरीं जयश्रियमिवापराम् ॥४८॥**

अमोघ पराक्रम वाले वीसलदेव ने युद्ध में कर्ण राजा को मार कर अवन्ति नगरी (उज्जैन) को दूसरी विजय-लक्ष्मी के समान ग्रहण किया ॥४८॥

**यस्यामुत्पन्नया नित्यं विशालवसुसम्पदा ।**
**यथार्थनामधेयत्वं लभते स्म वसुन्धरा ॥४९॥**

जिस अवन्ति नगरी में नित्य उत्पन्न होने वाली विशाल वसु (धन-धान्य आदि) सम्पत्ति के कारण पृथ्वी का 'वसुन्धरा' नाम सार्थक होता था ॥४९॥

**सौधोत्सङ्गपरिष्वङ्गनिर्वृते यत्र नीरदे ।**
**स्थिरसौदामिनीशोभामभजत् कामिनीजनः ॥५०॥**

जहाँ के ऊँचे महलों के शिखरों का आलिंगन करके आनन्द से बैठे हुये बादलों में, शिखरारूढ़ कामिनियाँ स्थिर बिजलियों की शोभा प्राप्त करती थीं ॥५०॥

**महाकालकिरीटस्था कला यत्र कलाभृतः ।**
**मालवीमुखपद्मानां द्युतिद्वैगुण्यमादधे ॥५१॥**

जहाँ भगवान् महाकालेश्वर के मस्तक पर स्थित चन्द्रमा की कला मालव देश की स्त्रियों के मुख-कमलों की कान्ति को द्विगुणित बना रही थी (वैसे चन्द्रोदय के समय कमल मुकुलित रहते हैं) ॥५१॥

**रिङ्गद्गङ्गोत्तमाङ्गोऽपि यत्राऽनङ्गविमर्दनः ।**
**शिप्रारसाभिषेकाय साभिलाषः सदाऽभवत् ॥५२॥**

जहाँ कामदेव को भस्म करने वाले भगवान् शिव, मस्तक पर गंगाजी के लहराते हुये भी, शिप्रा नदी के जलाभिषेक की सदा इच्छा रखते थे ॥५२॥

**मध्यं दिनेऽपि देवस्य चूडाचन्द्रांशुचुम्बितम् ।**
**धारायन्त्रायते यत्र चन्द्रकान्तकृतं गृहम् ॥५३॥**

जहाँ मध्याह्न में भी, चन्द्रकान्त मणियों से बना हुआ गृह भगवान् शिव के मस्तक पर स्थित चन्द्रमा की किरणों से चूमा जाकर धारायन्त्र (फौव्वारा) बन रहा था (चन्द्रकिरणों के स्पर्श से चन्द्रकान्त मणियों में से पानी निकलता है) ॥५३॥

**यत्रासन्नमहादेवदृष्टिपातभयादिव ।**
**मालवीलोचनोपान्ते विलीनो मीनकेतनः ॥५४॥**

जहाँ समीपस्थित भगवान् शिव के दृष्टिपात के भय से (भस्म हो जाने के भय से) मानों कामदेव मालव-रमणियों के नेत्रों के कोनों में छिप रहा था ॥५४॥

**वाणीपाणिलसद्वीणाक्वणितैर्मिलितस्वराः ।**
**यस्यां सोमं जगुः सोमशेखरं नगरस्त्रियः ॥५५॥**

जहाँ सरस्वती के हाथ में शोभित वीणा के स्वरों से स्वर मिला कर नगर की स्त्रियाँ पार्वती-सहित भगवान् चन्द्रचूड़ साम्बशिव की स्तुतियाँ गाती थीं ॥५५॥

**सदा हरशिरश्चन्द्रकरालम्बनलालिताः ।**
**शिप्राशीकरसम्भिन्नसमीरमृदुलीकृताः ॥५६॥**

**मानिनीसमुदायस्य यस्यां मानसवृत्तयः ।**
**आययुर्न कठोरत्वं वल्लीनामपि पल्लवाः ॥५७ ॥**

जहाँ सदा शिव के मस्तक पर स्थित चन्द्र की किरणों द्वारा लालित, और शिप्रा नदी के बिन्दुओं से शीतल वायु द्वारा सुकुमार और मृदुल, मान करने वालीं भामिनियों के समूह की चित्त-वृत्तियाँ, लताओं के पल्लवों के समान, कभी कठोर नहीं वन सकीं ॥५६–५७॥

**आपणैर्विलसन्मुक्ताहीरकर्पूरकम्बुभिः ।**
**क्षीरनीरधिफेनाभैर्वितानैर्विततीकृतैः ॥५८॥**

**दिवापि चन्द्रिकामोदमुदितैः कुमुदाकरैः ।**
**पुण्डरीकवनालीनमरालैः कमलाकरैः ॥५९॥**

**हर्म्यैर्हिमालयोच्छ्रायैः स्फुटस्फटिककुट्टिमैः ।**
**श्वेतद्वीपस्य या मूर्तिर्द्वितीयेव व्यभाव्यत ॥६०॥**

जो अवन्तिनगरी, उज्वल मोती, हीरे, कपूर और शंखों के बाजारों से, क्षीर सागर के फेनों के समान श्वेत फैले हुये वितानों से, दिन में भी (शिवशिरःस्थ चन्द्र की) चाँदनी के प्रकाश के कारण प्रफुल्लित कुमुदों के समूहों से, श्वेत कमलों के समूहों पर बैठे हुये हंसों से शोभित सरोवरों से, चमकते हुये संगमरमर के फर्शों वाले हिमालय के समान शुभ्र और उच्च महलों से, श्वेत द्वीप की दूसरी मूर्ति के समान सुशोभित हो रही थी ॥५८–६०॥

**यस्यां विपणिविस्तारिमणिस्तबकदीधितीः ।**
**करैः शश्वदनुष्णांशुरमुष्णत् प्रांशुभिर्निशि ॥६१॥**

जहाँ बाजारों में सजाये हुये मणि-समूहों की किरणों को मानों चन्द्रमा रात में सदा अपने लम्बे करों से चुराता रहता था ॥६१॥

**सारमाकृष्य कैलासात् किंवा ब्रह्माण्डभाण्डतः।**
**निर्मिता नु वृषाङ्केन निजावासाय या स्वयम् ॥६२॥**

क्या इस अवन्ति नगरी को स्वयं भगवान् शिव ने अपने रहने के लिये कैलास या ब्रह्माण्ड के सार से निर्मित किया था ? ॥६२॥

**शिप्रासरिति स स्नात्वा विप्राणां विहिताऽर्हणः।**
**अथ प्रमथनाथस्य प्रासादं प्राविशद् वशी ॥६३॥**

शिप्रा नदी में स्नान करके और ब्राह्मणों की पूजा करके जितेन्द्रिय नृपति वीसलदेव महाकाल के मन्दिर में गये ॥६३॥

**अर्चयित्वाऽवनीपालः पुष्पधूपादिसाधनैः।**
**प्रभुं प्रभूतया भक्त्या तुष्टावाऽष्टतनूभृतम् ॥६४॥**

राजा ने पुष्प धूप आदि साधनों से भगवान् शिव की पूजा करके अष्टमूर्ति महेश्वर को अपनी प्रगाढ भक्ति से प्रसन्न किया ॥६४॥

**जयकर्पूरगौराङ्ग गिरां साम्नामगोचर।**
**गरीयःकरुणागार गौरीरूढार्धविग्रह ॥६५॥**

हे कपूर के समान शुभ्र शरीर वाले, सामवेद की ऋचाओं द्वारा भी अगोचर, महान् करुणा के आगार, अर्द्धनारीश्वर भगवान् शंकर ! आपकी जय हो ॥६५॥

**बालचन्द्रलसद्भाल जय व्यालविभूषण।**
**जय देव महाकाल जहि कालमहाभयम् ॥६६॥**

हे बाल चन्द्र से शोभित मस्तक वाले, सर्प के आभूषण वाले, महाकाल ! आपकी जय हो। देव ! हमारे कालरूपी महाभय को नष्ट कीजिये ॥६६॥

**कृपापालितदिक्पाल कपालप्रोल्लसत्कर।**
**वेतालपृतनापाल कालकण्ठ नमोऽस्तु ते ॥६७॥**

हे अपनी कृपा से दिक्पालों का पालन करने वाले, हाथ में कपाल धारण करने वाले, वेतालों की सेना का पालन करने वाले, नीलकण्ठ भगवन् ! आपको नमस्कार है ॥६७॥

**त्रिलोकीशरण त्र्यक्ष त्र्यम्बक त्रिपुरापते।**
**निस्त्रैगुण्य त्रयीसार तारयास्माद् भवार्णवात् ॥६८॥**

हे तीनों लोकों के शरण, तीन अक्षमाला धारण करने वाले, त्रिनेत्र वाले, त्रिपुरा देवी के पति, निस्त्रैगुण्य, तीनों वेदों के सार ! इस भवसागर से हमें तार दीजिये ॥६८॥

**स्मृतिमात्रेण जन्तूनां शमयन्तं तमः प्रभो।**
**ये त्वां तमोमयं प्राहुस्त एव तमसा हताः ॥६९॥**

प्रभो ! आप स्मरणमात्र से प्राणियों के तम को नष्ट कर देते हैं। जो आपको तमोमय कहते हैं वे ही तम रूपी अज्ञान से मारे गये हैं ॥६९॥

**ज्वलनं जलवेणिञ्च विधुं विषधरं तथा।**
**अस्थिमालाञ्च बालाञ्च विभर्षि सममीश्वर॥७०॥**

महेश्वर ! आप तृतीय नेत्र की अग्नि को और गंगा को, विषधर सर्प को और अमृतमय चन्द्रमा को, अस्थिमाला को और भगवती पार्वती को समान रूप से धारण करते हैं ॥७०॥

**त्वमेव विश्वनिर्माणस्थितिसंहारहेतुकम्।**
**वितनोषि त्रिधात्मानं त्रिलोचन गुणैस्त्रिभिः॥७१॥**

त्रिलोचन ! आप सत्वरजस्तमोरूप तीनों गुणों से, विश्व की उत्पत्ति–स्थिति–संहार के लिये स्वयं को ब्रह्मा, विष्णु और महेश के रूप में अभिव्यक्त करते हैं ॥७१॥

**अष्टमूर्तिं त्रिमूर्तिं वा त्वां वदन्तु पुराविदः।**
**आनन्त्यात् तव मूर्तीनां वयमत्र निरुत्तराः॥७२॥**

विद्वान् लोग चाहे आपको अष्टमूर्ति कहें चाहे त्रिमूर्ति, वास्तव में आप अनन्तमूर्ति हैं अतः हम इस विषय में कुछ नहीं कह सकते ॥७२॥

**कोटिशो रसनाः कस्य कस्यानन्ता सरस्वती।**
**वक्तुं यः प्रतिजानीते महिमानं महेश ते॥७३॥**

किसके करोड़ों जीभें हैं ? किसकी वाणी अनन्त है ? महेश ! आपकी महिमा का वर्णन कौन कर सकता है ? ॥७३॥

**अध्वराखिलसंभारसंभृतस्यापि धूर्जटे।**
**पराचि त्वयि दक्षस्य दारुणाय तपःक्रियाः॥७४॥**

धूर्जटे ! प्रजापति दक्ष की, यज्ञ के समस्त साधनों से सम्पन्न होने पर भी, तप की क्रियायें, आपके विमुख होने के कारण, विनाश के लिये हुईं ॥७४॥

**नाराधितौ पुराराते पुरा ते चरणावतः।**
**जननेऽस्मिन्नहं षण्णां वैरिणां पतितो मुखे॥७५॥**

पुरारि ! मैंने पूर्वजन्म में आपके चरणों की आराधना नहीं की। इसीलिये इस जन्म में मैं कामक्रोधादिक छ शत्रुओं के मुख में पड़ रहा हूँ ॥७५॥

**दुर्वासना पिशाचीयं मोहयित्वा मतिं मम।**
**बलात् कवलयामास भवत्स्मृतिकथामपि॥७६॥**

यह दुर्वासना रूपी पिशाची, मेरी बुद्धि को मोह कर, आपकी स्मृतिकथा को भी वलपूर्वक खा गई (दुर्वासना में फँस कर मैं आपका स्मरण तक न कर सका) ॥७६॥

**एतेनागामि जन्मापि तादृगेव निरूपयन्।**
**किं वदाम्यपराद्धाऽहं त्वयि त्रिष्वपि जन्मसु॥७७॥**

अतः अगले जन्म में भी मेरा वही हाल होगा (क्योंकि इस जन्म में भी मैं आपकी आराधना नहीं कर रहा हूँ)। इस प्रकार तीनों जन्मों में मैं आपका अपराधी हूँ ॥७७॥

**निरुपाधिकृपापूरपरतन्त्रीकृतात्मनः ।**
**दीनोद्धरणमात्रं ते व्यसनं वृषभध्वज ।। ७८।।**

वृषध्वज ! आप अपनी सहज और असीम करुणा के वश में हैं और दीनों का उद्धार करना ही आपका एक मात्र व्यसन है ।।७८।।

**ममाप्यन्धधियश्छिन्धि बन्धमन्धकमर्दन ।**
**कृपायास्तव नायासलेशोऽप्यत्र भवेद् विभो ।।७९।।**

अन्धक दैत्य के नाशक ! मैं अन्ध बुद्धि वाला हूँ। मेरा बन्धन भी काट दीजिये। प्रभो ! इसमें आपकी कृपा को जरा सा भी परिश्रम नहीं होगा ।।७९।।

**इति स्तुतिभिरीशानं संभाव्य स भुवः प्रभुः ।।**
**प्रादक्षिण्यात् परिक्रम्य प्रणिपत्य विनिर्ययौ ।।८०।।**

पृथ्वीपति बीसलदेव इस प्रकार की स्तुति से भगवान् महाकाल की पूजा कर तथा प्रदक्षिणा परिक्रमा कर और भगवान् को प्रणाम कर चले आये ।।८०।।

**कृत्वा करप्रदांस्तत्र बलवानथ मालवान् ।**
**जितैरनुगतो भूपैः प्राविशत् पुरमात्मनः ।।८१।।**

बलवान् राजा, मालवों को कर देने वाले बना कर और विजित राजाओं को अपने पीछे लेकर, अपनी राजधानी लौट आये ।।८१।।

**तस्मात् पृथुगुणात् पुत्रो जातः पृथुसमप्रभः ।**
**पूरयन् यशसा पृथ्वीं पृथ्वीराज इति स्मृतः ।।८२।।**

उन महान् गुणों वाले बीसलदेव के पृथु राजा के समान पराक्रमी एवं अपने यश से पृथ्वी को पूर देने वाले **पृथ्वीराज** नामक पुत्र हुये ।।८२।।

**उत्पन्नस्तनुजस्तस्य प्रपन्नो दनुजद्विषम् ।**
**बिभ्राणो गुणबाहुल्यं वल्हणो वल्लभः सताम् ।।८३।।**

उन पृथ्वीराज के भगवान् विष्णु के भक्त, अनेक गुणों को धारण करने वाले और सज्जनों के प्रिय **वल्हण** नामक पुत्र हुये ।।८३।।

**लब्धलक्षा अपि स्वैरं नातृप्यन् पक्षसंश्रिताः ।**
**शतकोटितुलादानगृध्नवो यस्य मार्गणाः ।।८४।।**

जिनके बाण (और याचक), पंख से युक्त होकर (सत्पक्षाश्रित होकर) और इच्छित लक्ष (लक्ष्य; लाख) को भी प्राप्त करके शतकोटि (वज्र; सौ करोड़) की तुलना की प्राप्ति (तुलाऽऽदान; तुलादान) के लोभ से तृप्त नहीं हुये ।।८४।।

---

(८४) लब्धलक्षाः प्राप्तशरव्याः प्राप्तलक्षद्रव्याश्च । शतकोटेर्वज्रस्य तुलायास्तुलनाया आदानस्य ग्रहणस्य गृध्नवो लोभिनः शतकोटीनां द्रव्याणां तुलादानस्य लोभिनश्च । पक्षयुक्ताः सत्पक्षे स्थिताश्च । मार्गणा बाणा याचकाश्च ।

निर्वाप्य प्रतिभटपार्थिवप्रतापं
सिञ्चन्त्यः किसलयिनीं स्वकीर्तिवल्लीम्।
सञ्चेरुः सुचरितशालिनोऽस्य विष्वग्
विस्तीर्णा वितरणनीरनिर्झरिण्यः ॥८५॥

शत्रुराजाओं की प्रतापाग्नि को बुझा देने वालीं और अपने राजा की कोमल पत्तों वाली कीर्तिलता को सींचने वालीं चरित्रवान् राजा वल्हण की दानजल की विशाल नदियाँ चारों ओर बहने लगीं ॥८५॥

अथ गतवति नाकं वल्हणे बाहुलेय-
प्रतिनिधिरधिरूढस्तत्पदं तस्य पुत्रः।
अभवदनलदेवः शत्रुवंशाटवीना-
मनल इव समिद्धः सोमवद् बान्धवानाम् ॥८६॥

राजा वल्हण के स्वर्गवासी होने पर, स्वामी कार्तिकेय के समान बलवान् उनके पुत्र **अनलदेव** राजसिंहासन पर बैठे, जो शत्रुओं के वंश रूपी बाँस के जंगलों के लिये प्रचण्ड अग्नि के समान भीषण और बन्धु-वर्ग के लिये चन्द्रमा के समान शीतल थे ॥८६॥

॥ इति मुर्जनचरितमहाकाव्ये षष्ठः सर्गः ॥

---

(८६) बाहुलेयः कार्तिकेयः।

# सप्तमः सर्गः

ततः समासाद्य पितुः समृद्धिं श्रियं विवस्वानिव शारदीनाम् ।
प्रचीयमानाऽप्रतिमप्रतापः सुदुःसहोऽभून्महसा महीशः ॥ १ ॥

पृथ्वीपति अनलदेव, पिता की राज्यसमृद्धि को पाकर, शरदृतु की शोभा को पाने वाले सूर्य के समान, निरन्तर बढ़ने वाले अप्रतिम प्रताप से युक्त और तेज से अत्यन्त दुःसह बन गये ॥१॥

विशीर्णचापाश्चपला गरिम्णा त्यक्ता विपर्यस्तगभीरघोषाः ।
चिरादकिञ्चित्करतामवापुः पयोधरास्तस्य विरोधिनश्च ॥ २ ॥

उनके शत्रु और शरदृतु के बादल चिरकाल तक टूटे धनुष वाले (टूटे इन्द्रधनुषवाले), चपल और हलके बन कर तथा अपना गंभीर गर्जन छोड़ कर बेकार हो गये ॥ २ ॥

उदीयमानात् किल कुम्भयोनेर्जलाशयानामजनि प्रसादः ।
अस्योदये तु स्पृहणीयनीतेः शुद्धाशयाः साधु ययुः प्रसादम् ॥ ३ ॥

अगस्त्य तारे के उदय होने पर जलाशय (सरोवर; जडाशय = मूर्खहृदय) प्रसन्न और निर्मल हो गये; किन्तु श्लाघ्य नीति वाले अनलदेव के उदय होने पर शुद्ध हृदय वाले सत्पुरुष अत्यन्त प्रसन्न हुये ॥ ३ ॥

स्वभर्तृशत्रोरुदयादगस्तेर्नूनं रुदत्यः कुररीरुतेन ।
समुद्रपत्न्यस्तनिमानमापुर्यथास्य राज्ञः प्रतिपक्षकान्ताः ॥ ४ ॥

अपने पति समुद्र के शत्रु अगस्त्य के उदय होने पर मानों कुररी पक्षियों के शब्दों के बहाने रोती हुईं नदियाँ दुबली हो गईं जैसे अनलदेव के शत्रुओं की स्त्रियाँ अपने पतियों के शत्रु (अनलदेव) के उदय होने पर कुत्सित स्वर से रोती हुईं दुबली हो गईं ॥ ४ ॥

आह्लादयामासतुरुल्लसन्तौ लोकानुभौ शीतकरक्षितीशौ ।
करैर्यथार्थैः समयेरितैस्तानेको वितन्वन्नपरस्तु गृह्णन् ॥ ५ ॥

सुन्दर कान्ति वाले चन्द्रमा और राजा अनलदेव, इन दोनों ने ही लोगों को प्रसन्न किया—एक ने (चन्द्रमा ने) तो समयोचित, यथार्थ और शीतल कर (किरणों) देकर और दूसरे ने (अनलदेव ने) समयोचित, यथार्थ और अल्प कर लेकर ॥ ५ ॥

क्षीरेण सप्तच्छदपादपानां तस्य द्विपानां मदरेखया च ।
आकृष्यमाणाः समसौरभत्वाद् भ्रेमुर्द्विरेफाश्चिरमन्तराले ॥ ६ ॥

सप्तपर्ण वृक्षों के दूध से और राजा के हाथियों के मद की रेखा से आकृष्ट हुये भ्रमर, दोनों की सुगन्ध बराबर होने के कारण (यह निश्चय न कर सकने से कि किस पर बैठें), बहुत देर तक आकाश में ही उड़ते रहे ॥ ६ ॥

**अन्तःसरागापि रुचामधीशेनालभ्यमाना सहसा करेण।**
**नितान्तमौग्ध्यान्मुखपद्ममुद्रामुपालि नालं नलिनी विमोक्तुम् ॥७॥**

कमलिनी, अन्दर से लाल होने पर भी (हृदय से अनुरक्त होने पर भी), सूर्य की किरणों का (हाथ का) सहसा स्पर्श पाकर, अत्यन्त मुग्ध होने के कारण, अपने मुकुलित मुख-कमल को, भ्रमर के सामने (उपाऽलि; पर-पुरुष के सामने) विकसित नहीं कर सकी, जिस प्रकार कोई नवोढा नायिका, हृदय से अनुरक्त होने पर भी, अपने स्वामी के हाथ का (अधीशेन) सहसा स्पर्श पाकर, अत्यन्त मुग्धा होने के कारण, सखियों के सामने (उपाऽऽलि) लज्जावश अपने मुख-कमल के घूँघट को नहीं हटाती ॥ ७ ॥

**करेण रागाद् घनविप्रकीर्णं शनैः शनैरावरणं नियम्य।**
**मुखं नलिन्या इव पद्मकोषं प्रकाशतां चण्डरुचिर्निनाय ॥ ८ ॥**

बादलों के कारण छाये हुये अन्धकार को अपनी रक्त किरणों से धीरे धीरे हटाकर सूर्य ने कमलिनी के मुख-कमल को विकसित कर दिया, जिस प्रकार तीव्र अनुराग वाला (चण्डरुचिः) नायक लज्जावश गहरे खींचे गये घूँघट को अपने अनुरक्त हाथ से धीरे धीरे हटा कर घूँघट के अन्दर छिपे हुये नवोढा नायिका के मुख-कमल को प्रकाशित कर देता है ॥ ८ ॥

**विदूरभिन्नाधरपत्रमीषद्विकासि किञ्जल्करदं दधाना।**
**ससौरभोद्गारमुखारविन्दं विमुक्तनिद्रा नलिनी जजृम्भे ॥ ९ ॥**

(सोई हुई) कमलिनी (सूर्य के कर-स्पर्श से) जाग कर अपने पत्र रूपी होठों को दूर फैला कर तथा अपने शुभ्र केसर रूपी दाँतों को कुछ कुछ प्रकट कर, अपने कमल रूपी मुख से सुगन्ध रूपी साँस निकालती हुई जम्हाई ले रही है ॥ ९ ॥

**विजृम्भमाणोत्कलिका नलिन्यो दरन्नमत्कण्टकिकण्ठनालाः।**
**विस्फारितैः पङ्कजकोषनेत्रैर्निभालयामासुरिवात्मबन्धुम् ॥१०॥**

खुली हुई पखुड़ियाँ वालीं (बढ़ी हुई उत्कण्ठा वालीं) और कुछ झुकते हुये रोयों से शोभित नालों वालीं (कुछ कुछ खड़े हुये रोंगटों से शोभित कण्ठों वालीं) कमलिनियाँ (नायिकाओं के समान) अपने पूर्ण खुले हुये कमल-नेत्र से सूर्य को (अपने प्रियतम को) देख रहीं है ॥१०॥

**चिरप्रवासान्मिलितं मरालं पक्षानिलोद्धूततरङ्गलोला।**
**प्रत्युज्जगामेव समालपन्ती सरोजिनी षट्पदहुङ्कृतेन ॥११॥**

चिरप्रवास के बाद मिले हुये (वर्षा ऋतु भर बाहर रह कर अब शरद् में वापस आये हुये) हंस के स्वागत में कमलिनी मानों भ्रमरों की गूँज के बहाने स्वागत-वचन बोलती हुई और (हंस के) पंखों की वायु के कारण उठने वाली लहरों से हिलती हुई मानों उठ कर गई ॥११॥

---

(७) उपाऽलि, उपाऽऽलि च।

**कूजन् मुहुः शोणमुखः समन्ताद् व्यापारयन् पक्षमपेतधैर्यः ।**
**तारुण्यमत्तालिविलासलोलां सरोजिनीं हंसयुवा न सेहे ॥१२॥**

लाल चोंच वाला (क्रोध से लाल मुँह वाला), बार बार कूजता हुआ (क्रोध में दुर्वचन बोलता हुआ), चारों ओर पंख फड़फड़ाता हुआ (चारों ओर हाथ हिलाता हुआ) और अधीर हुआ हंस-युवक, यौवनमद से उन्मत्त भ्रमर के साथ भोगविलास में चञ्चल सरोजिनी को सहन नहीं कर सका ॥१२॥

**प्रसारयन् शीतकरः सुदूरात् करं परं खेदमिवाश्नुवानः ।**
**पतन् सरस्यां प्रतिमामिषेण कुमुद्वतीक्रोडमुपाससाद ॥१३॥**

(यह अस्त होने वाला) चन्द्रमा, अत्यन्त खिन्न हुआ, दूर से अपने कर (किरणों; हाथ) फैलाता हुआ, प्रतिबिम्ब के बहाने मानों सरोवर में गिर कर अपनी प्रेयसी कुमुदिनी की गोद में छिप रहा है ॥ १३॥

**संयम्य नूनं जलदागमेन घनान्धकारं हरितो निगूढाः ।**
**सद्यः प्रपद्याथ नवाधिकारं यथावकाशं शरदा विमुक्ताः ॥१४॥**

वर्षा ऋतु ने दिशाओं को कैद करके घनान्धकार में डाल रक्खा था। शरद् ऋतु ने नया अधिकार पाकर उनको यथावकाश घनान्धकार से छुड़ाया ॥१४॥

**प्रसेदुषा शीतकरेण तावत् ताराकुलं तारतरं चकाशे ।**
**यथास्य पूर्णप्रतिबिम्बसङ्गात् कुमुद्वतीकाननमस्तनिद्रम् ॥१५॥**

प्रसन्न चन्द्रमा के कारण तारागण भी खूब चमकने लगे, जैसे इसके पूर्ण प्रतिबिम्ब के संग से कुमुदिनीसमूह प्रफुल्लित हो उठा ॥१५॥

**अम्भोधराणां नियतं भरेण कुत्रापि गर्ते गहने निलीनाः ।**
**घनव्यपाये रविरश्मिजालैराकृष्य दूरोन्नमिता इवाशाः ॥१६॥**

वर्षाऋतु में दिशायें बादलों के भारी भार से किसी गहन गर्त में गिर गई थीं। अब शरद् ऋतु में सूर्य की किरणों ने मानों उन्हें खींच कर बाहर निकाला ॥१६॥

**नाऽत्रासयत् पार्श्वचरान् मरालान् नामोदयामास मयूरवृन्दम् ।**
**आडम्बरः शारदवारिदानामवर्धयत् स्वं लघिमानमेव ॥१७॥**

शरद्ऋतु के बादलों की गर्जना से न तो पास में उड़ने वाले हंसों को भय हुआ और न मयूर-समूह को आनन्द हुआ। शत्रुओं को भय और मित्रों को आनन्द देने में असमर्थ, शरद् ऋतु के मेघों की गर्जना ने केवल अपने हलकेपन (तुच्छता) को ही बढ़ाया ॥१७॥

**रसज्ञतायामपि संभवन्त्यां न धैर्यवृत्तिः क्वचिदित्वरीणाम् ।**
**सत्येव सम्पद्वति पद्मखण्डे सप्तच्छदं यद् भजते स्म भृङ्गी ॥१८॥**

रसज्ञता संभव होने पर भी कुलटा स्त्रियों को कभी धैर्य नहीं होता। प्रफुल्लित कमल-समूह के होने पर भी भ्रमरी सप्तपर्ण वृक्ष की ओर दौड़ रही है ॥१८॥

**स हंसलक्ष्म्यम्बरसङ्गिगौरपयोधरामुत्पलचारुनेत्राम् ।**
**प्रसन्नशीतांशुमुखीं सुतारनक्षत्रमालाभरणोपकण्ठाम् ॥१९॥**
**विनिद्रबन्धूकदलाधरोष्ठीं शरच्छ्रियं चारुशरं दधानाम् ।**
**प्रकाशिपङ्केरुहताम्रपाणौ पतिर्ग्रहाणां जगृहे करेण ॥२०॥**

सूर्य ने, उड़ते हुये हंसों की शोभा से युक्त शुभ्र आकाश में स्थित श्वेत मेघों से शोभित, कमल रूपी सुन्दर नेत्रों वाली, प्रसन्न चन्द्रमा रूपी मुख वाली, सुन्दर तारे और नक्षत्र-माला रूपी आभूषणों से सुशोभित, विकसित बन्धूक पुष्प रूपी अधर वाली, सुन्दर शर नामक पुष्प को धारण करने वाली शरद् ऋतु के प्रफुल्लित रक्तकमल रूपी पाणि (हाथ) का अपने कर (किरण; हाथ) से ग्रहण किया मानों किसी ब्राह्मण ने, हंसों के चित्रों से शोभित साड़ी का स्पर्श करने वाले गोरे स्तनों वाली, कमल के समान सुन्दर नेत्र वाली, प्रसन्न और पूर्ण चन्द्रमा के समान मुख वाली, सुन्दर तार में पिरोये गये नक्षत्र-माला (मोहन-माला) नामक आभूषण से सुशोभित कण्ठ वाली, विकसित लाल बन्धूक पुष्प जैसे अधर वाली और एक हाथ में सुन्दर बाण धारण करने वाली क्षत्रिया के प्रफुल्लित रक्तकमल के समान सुन्दर हाथ को अपने हाथ में लेकर पाणिग्रहण किया हो। (विवाह में वधू के लिये हंसों के चित्रों से शोभित साड़ी पहनना मांगलिक समझा जाता है। कालिदास ने भी कुमारसंभव में लिखा है—'वधूदुकूलं कलहंसलक्षणम्।' धर्मशास्त्र के अनुसार जब ब्राह्मण क्षत्रिया का पाणिग्रहण करता है तो क्षत्रिया के हाथ में बाण दिया जाता है—'शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।' यहाँ ग्रहराज सूर्य को ब्राह्मण और शरद् को क्षत्रिया माना गया है) ॥१९–२०॥

**पुष्पासवं पत्रपुटैः पिबन्त्यः प्रवृद्धनेत्राननकण्ठरागाः ।**
**विशृङ्खलं शृङ्खलिताध्वनीनं जगुः सुगीतं कलमस्य गोप्यः ॥२१॥**

पत्तों के दोनों में फूलों का आसव पीने से बढ़ी हुई नेत्र, मुख और कण्ठ की लाली वाली, कलम नामक धान्य के खेतों की रखवाली करने वाली स्त्रियाँ मनमाने सुन्दर गीत गा रही थीं, जिनको सुनकर राहगीर भी हठात् कुछ देर रुक जाते थे ॥२१॥

**शुष्यन्मुखः संमुखमापतन्तं विच्छेदखेदं गणयन्निवान्तः ।**
**आलम्बमानो नलिनीं नतेन मूर्ध्ना श्लथोऽभूत् कलमः क्रमेण ॥२२॥**

सूखे मुँह वाला कलम का वृक्ष मानों शीघ्र सामने आने वाले विरह के दुःख का मन में विचार करता हुआ, अपने झुके हुये सिर को कमलिनी के ऊपर रख कर धीरे धीरे शिथिल हो गया ॥२२॥

---

(१९) हंसानां लक्ष्म्या शोभया युतं यदम्बरमाकाशं तत्संगिनो गौराः शुभ्राः पयोधरा मेघा यस्यास्ताम्। अन्यत्र हंसमिथुनस्य या लक्ष्मी शोभा तया चित्रितं यदम्बरं दुकूलं तत्संगिनौ गौरौ पयोधरौ स्तनौ यस्यास्ताम्। तदुक्तं कालिदासैरपि—'वधूदुकूलं कलहंसलक्षणम्' इति। वक्ष्यति चाग्रे 'परिधाप्य धौतममलं दुकूलयोर्युगलं मरालमिथुनोपलक्षितम्' इति (१४, १४)।

(२०) चारु शरं शरनामकं शरत्कालीनं सुन्दरं पुष्पम्। शरं बाणञ्च। यदा ब्राह्मणः क्षत्रियामुद्वहति तदा क्षत्रियवध्वा करे शरो गृह्यते। तदुक्तं धर्मशास्त्रे—'शरः क्षत्रियया ग्राह्यः प्रतोदो वैश्यकन्यया।' इति।

**उपैतुकामा कलमान् विदूरान् मरालनिह्लादमथो निशम्य ।**
**शुकावलिः शङ्कितशालिगोपीमञ्जीरतारक्वणिता निवृत्ता ।।२३।।**

दूर के कलमों के खेतों में जाने की इच्छा रखने वाली तोतों की पंक्ति ने, हंसों के स्वरों को सुन कर, उन्हें कलमों के खेतों की रखवाली करने वाली स्त्रियों के मंजीरों के उच्च स्वर समझ कर, वहाँ जाने का विचार छोड़ दिया ।।२३।।

**घनोदितानां तमसामपायात् सुनिर्मलं वीतजडानुषङ्गम् ।**
**ज्योतिःप्रसादाद् विलसत्प्रसादं बभौ नभः संयमिनामिवान्तः ।।२४।।**

बादलों के कारण होने वाले घने अन्धकार के हट जाने से अत्यन्त निर्मल और कुहरे के संग से विमुक्त तथा प्रकाश के कारण प्रसन्न शरद् ऋतु का आकाश योगियों के, अज्ञानान्धकार और तमोगुण की निवृत्ति के कारण अत्यन्त निर्मल तथा जड़ पदार्थों की आसक्ति से रहित और आत्मा की ज्योति से प्रकाशित होने के कारण प्रसन्न, अन्तःकरण के समान सुशोभित हुआ ।।२४।।

**नवप्रबुद्धाम्बुरुहप्रताना वितायमानारुणरम्यरोचिः ।**
**निरस्तनिःशेषघनान्धकारा शरत् प्रभातस्य बभार शोभाम् ।।२५।।**

नये खिले हुये कमलों के वितान वाली, प्रवृद्ध अरुण और सुन्दर प्रकाश वाली और मेघों के कारण होने वाले अन्धकार से बिलकुल रहित शरद् ऋतु, प्रातःकाल की शोभा को धारण कर रही थी ।।२५।।

**तुरङ्गचारोचितराजमार्गां व्यपेतजीमूतघनान्धकाराम् ।**
**शरच्छ्रियं सौम्यसरित्प्रवाहां समीक्ष्य वीतप्रतिपक्षशङ्कः ।।२६।।**
**पुरोधसा धौम्यसमौजसाऽथ धर्मावतारोऽधिपतिर्धरित्र्याः ।**
**प्रातिष्ठत प्रात्यहिकं समाप्य कृत्यं कृती कार्तिकमासि तीर्थम् ।।२७।।**

सड़कें घोड़ों के चलने योग्य हो गईं थीं। बादलों का घना अन्धकार मिट चुका था। नदियाँ धीरे धीरे बह रही थीं। ऐसी शरद् ऋतु की शोभा देखकर, शत्रुओं की आशंका से रहित, युधिष्ठर के समान धर्मराज, कार्यकुशल राजा अनलदेव अपने धौम्य ऋषि (पांडवों के पुरोहित) के समान तेजस्वी पुरोहित के साथ, प्रातःकाल का (संध्यावन्दनादिक) कृत्य समाप्त करके, (शुभ मुहूर्त में) कार्तिक मास के तीर्थ पुष्कर को चले ।।२६–२७।।

**स पुष्करं पुष्करपत्रनेत्रः स्वनेत्रयोराभरणीचकार ।**
**निर्वाणरत्नस्य खनिं जगत्याः श्रेयः समापन्नमिव द्रवत्वम् ।।२८।।**

कमलपत्र के समान सुन्दर नेत्र वाले राजा ने पुष्कर तीर्थ को अपने नेत्रों का आभूषण बनाया (देखा)—उस पुष्कर को जो संसार में निर्वाण (मोक्ष) रूपी रत्न की खान है और जो मानों पिघला हुआ साक्षात् कल्याण है ।।२८।।

**तपस्विना कुम्भसमुद्भवेन निपीतमालोक्य पतिं नदीनाम् ।**
**कल्पान्ततल्पं प्रथमेन पुंसा मन्ये परं तोयशयेन सृष्टम् ।।२९।।**

क्षीर-सागर में सोने वाले विष्णु भगवान् ने, समुद्र को अगस्त्य मुनि द्वारा पिया हुआ जान कर, प्रलय काल में अपने सोने के लिये ही मानों इस पुष्कर को बनाया है ।।२९।।

**सप्तापि गाधान् सरितामधीशानल्पप्रमाणान् पुरतः परीक्ष्य ।**
**क्रोडाविमर्दक्षममादिमेन क्रोडेन किं निर्मितमष्टमं वा ।।३०।।**

अथवा क्या वराहावतार ने, सातों समुद्रों को परिमित और अल्प देख कर, अपनी गोद (शरीर) की टक्कर को सहने में समर्थ यह आठवाँ समुद्र बनाया है ? ।।३०।।

**तं तत्र विश्रान्तदृशं धरित्रीपुरन्दरं वीक्ष्य पुरः पुरोधाः ।**
**प्रस्तावंवित् प्रस्तुतवस्तुतत्त्वविवेचनीं वाचमिमां बभाषे ।।३१।।**

बुद्धिमान् पुरोहित ने पृथ्वी के इन्द्र अनलदेव को एकटक गड़ी हुई दृष्टि से पुष्कर को देखते हुये देख कर प्रस्तुत वस्तु (पुष्कर) का वर्णन करने वाली यह वाणी कही ।।३१।।

**त्रिधा विभक्तात्मतनोरमुष्य धृतावतारस्य जगद्धिताय ।**
**नामापि कामं समुदीर्यमाणं नारायणस्येव पुनाति विश्वम् ।।३२।।**

संसार के हित के लिये अवतार ग्रहण करने वाले और जगत् की उत्पत्ति, स्थिति और लय के लिये स्वयं को ब्रह्मा, विष्णु और महेश रूपी त्रिमूर्ति में प्रकट करने वाले भगवान् नारायण के समान, संसार के हित के लिये प्रकट होने वाले और स्वयं को ज्येष्ठ, मध्यम और कनिष्ठ पुष्कर इन तीन तालावों में विभक्त करने वाले, इस पुष्कर तीर्थ का नाम भी भक्तिपूर्वक लेने पर संसार को पवित्र वनाता है ।।३२।।

**वसुन्धरामुद्धृतवान् वराहः प्रादुर्भवन् पूर्वमिहैव नूनम् ।**
**सप्तापि पातालतलान्यतीतस्तस्य स्थितो निर्गममार्ग एषः ।।३३।।**

जलमग्न पृथ्वी को अपनी दाढ़ पर उठा कर ले आने वाले वराह भगवान् सातों पातालतलों से निकल कर सबसे पहले निश्चय ही यहीं आये और यह पुष्कर उनके निकलने का मार्ग है ।।३३।।

**जगत्रयीपावनसावधानास्तिस्रस्तनूरस्य विलोक्य नूनम् ।**
**उपेन्द्रपादाब्जभवाम्बुवेणी त्रिमार्गगा दिव्यधुनी बभूव ।।३४।।**

तीनों लोकों को पवित्र करने में निपुण इस पुष्कर के तीन भागों को (ज्येष्ठ, मध्यम और कनिष्ठ पुष्कर नामक तीन तालाबों को) देख कर ही (स्पर्धा से) भगवान् विष्णु के चरण-कमल से निकलने वाली भगवती भागीरथी भी अवश्य ही तीन स्रोत वाली बन गई (गंगा जी आकाश, मर्त्यलोक और पाताल तीनों स्थानों में बहती हैं )।।३४।।

**वृन्दानि वृन्दारकनायकानां सप्तर्षयो ब्रह्मविदश्च सिद्धाः ।**
**तप्त्वेह तीर्थप्रवरे तपांसि प्रपेदिरे स्वानि पदानि तावत् ।।३५।।**

श्रेष्ठ देवों के समूहों ने, सप्तर्षियों ने और ब्रह्म को जानने वाले सिद्धों ने इस तीर्थ-श्रेष्ठ पुष्कर में विविध तप करके अपने अपने पदों को प्राप्त किया ।।३५।।

---

(३२) पुष्करतीर्थे जेष्ठमध्यमकनिष्ठपुष्कराख्यानि त्रीणि सरांसि सन्ति ।

**दिवोवतीर्णैर्हरिचन्दनानां निर्माय पर्णैरिह पर्णशालाः ।**
**वल्कं वसानैरमरद्रुमाणां तपोऽत्र चीर्णञ्चिरमादितेयैः ।।३६।।**

स्वर्ग से लाये गये हरिचन्दन वृक्षों के पत्तों से यहाँ पर्णशालायें बना कर कल्पवृक्षों के चीवर पहनने वाले देवताओं ने यहाँ बहुत समय तक तप किया था ।।३६।।

**मन्दाकिनी यत्र ममौ विधातुः कमण्डलौ मण्डलितप्रवाहा ।**
**तं कोटिशः पूरयतोऽप्यमुष्य न पूर्णता स्तोकमपि व्यपैति ।।३७।।**

गंगा जी अपने प्राकट्य से पहले अपने उद्गम स्थान ब्रह्मा जी के कमण्डलु में समा कर उसी में चक्कर काटा करती थीं। ब्रह्मा जी के उस कमण्डलु को, जिसमें सारी गंगा जी एक बार में ही पूरी समा रही थीं, करोड़ों बार भर देने पर भी इस पुष्कर के जल में जरा भी कमी नहीं आई। (पुष्कर में ब्रह्मा जी का मन्दिर है और यह ब्रह्मा जी का ही तीर्थ माना जाता है । संध्यादि नियमों के लिये ब्रह्माजी अपने कमण्डलु को पुष्कर के जल से ही भरते हैं) ।।३७।।

**उद्गायतामत्र समं चतुर्णां शृण्वन् मुखेभ्यश्चतुरोऽपि वेदान् ।**
**चतुर्मुखीकण्ठनिनादशङ्की चमत्कृतिं याति जरन्मरालः ।।३८।।**

एक साथ चार ब्राह्मणों के चार मुखों से चारों वेदों की ध्वनि सुन कर वृद्ध हंस उसे अपने चार मुख वाले स्वामी ब्रह्माजी द्वारा कृत वेदपाठ समझ कर चौंक पड़ता है ।।३८।।

**अन्तेवसन्तः कलशिञ्जितानां वाणीपदाम्भोरुहनूपुराणाम् ।**
**हिन्दोलनाकौतुकमन्वभूवन् हंसा विधेरस्य ततैस्तरङ्गैः ।।३९।।**

अपने सुन्दर स्वरों के उच्चारण में सरस्वती के चरणकमलों के नूपुरों की ध्वनि से शिक्षा लेने वाले ब्रह्मा जी के हंस इस पुष्कर की विस्तृत तरंगों में झूला झूलने का आनन्द ले रहे हैं ।।३९।।

**तीर्थान्तराणामपि कोटयोऽस्य सेवाविधिज्ञाः सविधे सदैव ।**
**अध्यासते साधयितुं स्वशक्तिं पुंसामसाधारणशुद्धिदात्रीम् ।।४०।।**

अन्य करोड़ों तीर्थ, पुष्कर की सेवा में दत्तचित्त होकर लोगों को असाधारण शुद्धि देने वाली अपनी शक्ति को सिद्ध करने के लिये यहाँ सदा बैठे रहते हैं ।।४०।।

**एकैकमस्मात् कमलं विचिन्वन् नवं नवं प्रत्यहमासनाय ।**
**सरोजिनीखण्डमखण्डरूपमपालयत् कौतुकतो विरिञ्चिः ।।४१।।**

अपने आसन के लिये पुष्कर में से प्रति दिन एक नया कमल तोड़ने वाले ब्रह्मा जी ने कौतुक-वश इसमें कभी समाप्त न होने वाला कमलों का समूह लगा रक्खा है ।।४१।।

**अत्रावदातं शतपत्रजातं भृङ्गैः क्वचिन् मेचकितञ्चकास्ति ।**
**सव्योम शङ्के शरदभ्रखण्डं सूर्यांशुतापात् पतितं पयःसु ।।४२।।**

यहाँ पुण्डरीकों (सफेद कमलों) का समूह, काले भ्रमरों से युक्त होने के कारण, ऐसा

---

(३७) गंगा विधेः कमण्डलोः प्रादुरासीत् ।

शोभित हो रहा है मानों शरद् ऋतु के सफ़ेद बादल का टुकड़ा अपने साथ थोड़े से काले आकाश के टुकड़े को लेता हुआ, सूर्य की किरणों की गर्मी से घबराकर पुष्कर के जल में शान्ति पाने के लिये आ गिरा हो ॥४२॥

**नवेन्दुवक्त्राऽविरतं बिभर्ति विशालशोभां बिसकन्दलीयम् ।**
**मग्नस्य मध्येसलिलं सलीलं दंष्ट्रेव भूदारतनोर्मुरारेः ॥४३॥**

जलमग्न नीलकमलों की सदा द्वितीया के अर्धचन्द्र के समान शुभ्र और अर्धवृत्ताकार (सफेद) मृणालकन्दली, लीलावश जल के भीतर निमग्न (नीले) भगवान् विष्णु के वराहावतार की (सफ़ेद) दाढ़ के समान, सुशोभित हो रही है ॥४३॥

**गाहन्त एते गहनं न पाथः पाथोजिनीपल्लवभङ्गभीताः ।**
**दिग्दन्तिनो दूरत एव गण्डं गण्डूषितैरम्बुभिरार्द्रयन्ति ॥४४॥**

(ब्रह्मा द्वारा लगाई हुई) कमलिनी के पत्तों के टूट जाने के भय से ये दिशाओं के हाथी पुष्कर के गहरे पानी में न उतर कर दूर से ही सूँड़ों में जल ले लेकर अपने मस्तकों को गीला कर रहे हैं ॥४४॥

**अन्तर्विशत्षट्पदराजिराजत्सिताम्बुजस्तोममिषेण मन्ये ।**
**शरीरवान् सत्वगुणोऽत्र मूर्तं तमः समस्तं कवलीकरोति ॥४५॥**

अपने अन्दर स्थित काले भ्रमरों की पंक्ति से शोभित श्वेत कमल ऐसे प्रतीत होते हैं मानो शरीरधारी सत्त्वगुण यहाँ मूर्तिमान् तमोगुण को निगल रहा हो ॥४५॥

**अद्याप्यमुष्मिन्नरुणद्युतीनि सद्यः प्रबुद्धानि सरोरुहाणि ।**
**विरिञ्चिवक्त्रप्रतिबिम्बबुद्ध्या वृद्धा न हंसाः परिमर्दयन्ति ॥४६॥**

आज भी यहाँ पुष्कर में लगे हुये अरुण शोभा वाले और ताज़ा खिले हुये रक्तकमलों को ब्रह्मा जी के मुख के समान समझ कर वृद्ध हंस नहीं रौंदते ॥४६॥

**अपारयन् प्राणिवधं विधातुं व्यपेतपङ्कोऽत्र बको वराकः ।**
**कारण्डवाऽऽस्वादितकोमलाग्रैः शैवालकैर्वर्तयते कथञ्चित् ॥४७॥**

यहाँ पुष्कर में प्राणिहिंसा न कर सकने के कारण और कीचड़ का भी अभाव होने के कारण (कुछ न मिलने पर बगुला कीचड़ भी खा लेता है) बिचारा बगुला काई में उगने वाले छोटे छोटे पौधों से ही, जिनके कोमल ऊपरी भागों को भी कारण्डव पक्षी खा गये हैं, किसी प्रकार निर्वाह कर रहा है ॥४७॥

**महान्तमप्याश्रितवान् नितान्तं नीचो न नीचां प्रकृतिं जहाति ।**
**स्वच्छन्दपद्मेऽपि सरोवरेऽस्मिन् यच्छैवलं शीलयते बकोटः ॥४८॥**

(अथवा) महान् व्यक्ति का आश्रय लेने पर भी नीच कभी अपनी नीचता नहीं छोड़ता। इस पुष्कर में सुन्दर खिले हुये कमलों के होते हुये भी यह क्षुद्र बगुला काई के पौधों का ही आश्रय ले रहा है ॥४८॥

**अस्मिन् निशायामपि पुष्पितानां सरोरुहां रेणुभरैः पिशङ्गम् ।**
**स्वकान्तबुद्धया किल चक्रवाकी चक्राङ्गमाक्रन्दपराऽनुयाति ॥४९॥**

यहाँ पुष्कर में रात में भी खिले हुये कमलों के पराग से ढके हुये और इसलिये पीले दिखाइ देने वाले हंस के पीछे-पीछे चकवी (कमलों के खिलने से प्रभात का अनुमान लगा कर) उसे अपना पति समझ कर, कूजती हुई चल रही है ॥४९॥

**स्वयं विधाता स विधिर्विधीनां सङ्कल्पमात्रोपचितैः पदार्थैः ।**
**त्रेतामिहाधाय जुहाव कुर्वन् त्रयीगिरो निस्त्रिगुणाः कृतार्थाः ॥५०॥**

संकल्प-मात्र से समस्त पदार्थों को उपस्थित करके सम्पूर्ण विधियों को पूर्ण करने वाले, सब विधियों के स्वामी स्वयं ब्रह्मा जी ने यहाँ पुष्करतीर्थ में यज्ञ की तीनों अग्नियों को (गार्हपत्य, आहवनीय और दक्षिण) एकत्रित करके, वेद-मंत्रों को सचमुच निस्त्रैगुण्य सिद्ध करने के लिये निष्काम भाव से यज्ञ प्रारंभ किया (वेद प्रतिपादित यज्ञ कामनाओं के कारण किये जाते हैं जैसे—'स्वर्गकामो यजेत' इत्यादि, अतः वेद भी कामना पूर्ण करने के कारण त्रैगुण्यविषय हुये; किन्तु स्वयं ब्रह्मा जी को किसी कामना की आवश्यकता नहीं थी, अतः उन्होंने निष्काम भाव से यज्ञ करके मानों वेदों का निस्त्रैगुण्य होना सिद्ध किया) ॥५०॥

**स्वयं स ईशः सकलस्य कर्ता समं समस्तैरपि दैवतैस्तैः ।**
**मखैरखण्डैः कतमं नु देवं संप्रीणयामास न तं विदामः ॥५१॥**

पूर्ण समर्थ और सम्पूर्ण सृष्टि को उत्पन्न करने वाले स्वयं ब्रह्मा जी ने, सब देवताओं को साथ लेकर, किस देवता को प्रसन्न करने के लिये वह अखण्ड यज्ञ किया, इस बात को हम नहीं जानते ॥५१॥

**हुताशने यद् विधिवद् वितीर्णं सुधाभुजां नाम सुधा तदेव ।**
**वषट्कृतं यद् विधिनात्मनैव तत्रापि कः कल्पयितुं क्षमेत ॥५२॥**

यज्ञ की अग्नि में विधिपूर्वक जो कुछ हवन किया जाता है वह अमृत बन जाता है और देवता उसे ग्रहण करते हैं; किन्तु (समस्त देवताओं से सेवित) स्वयं ब्रह्मा जी ने उस यज्ञ में जो आहुति दी, वह आहुति क्या बनी और किसने उसे ग्रहण किया इसकी कल्पना कौन कर सकता है ? ॥५२॥

**सत्यामपि प्रार्थितवस्तुसिद्धेः समग्रतायामिह सप्ततन्तौ ।**
**वनान्तराद् व्योमसदां समूहः समित्कुशादीन् स्वयमाजहार ॥५३॥**

समस्त वाञ्छित वस्तुओं की सम्पूर्ण सिद्धि विद्यमान होने पर भी ब्रह्मा जी द्वारा कृत उस यज्ञ के लिये स्वयं देवता गण वन में से समिधा और कुश इत्यादि लाये ॥५२॥

---

(४९) चक्राङ्गं हंसम् ।

(५०) त्रेतामग्नित्रयीं गार्हपत्याहवनीयदक्षिणरूपाम् । वेदप्रतिपादितयज्ञादिकर्मणां 'स्वर्गकामो यजेत' इत्यादि वचनात् काम्यकर्मरूपत्वात् 'त्रैगुण्यविषया वेदाः' इत्युक्तं, किन्तु विधिः स्वयं निष्कामभावेन यज्ञं कृतवानिति वेदगिरो निस्त्रैगुण्यमेव तेन सम्पादितम् ।

(५२) यज्ञाग्नौ यद् विधिवत् हुतं तदेव सुधा भवति देवाश्च तद् गृह्णन्ति । उक्तं च माघेरपि—'अमृतं नाम यत् सन्तो मन्त्रजिह्वेषु जुह्वति' इति । किन्तु यत् स्वयं ब्रह्मणा हुतं तत् किमभवत् केन च तद् गृहीतमिति विज्ञातुं कः समर्थो भवेत् ?

**हविर्भुजस्तत्र पवित्रिताशे वितायमाने दिवि भव्यगन्धे।**
**अमन्दमन्दारमरन्दधारासौरभ्यमभ्यस्तमपि प्रलीनम् ॥५४॥**

उस यज्ञ की अग्नि की दिशाओं को पवित्र करने वाली अलौकिक सुगन्ध के आकाश में व्याप्त होने पर उसके आगे देवताओं द्वारा अभ्यस्त, कल्पवृक्षों के मकरन्द की तीव्र और दिव्य सुगन्ध भी फीकी पड़ गई ॥५४॥

**तस्मिन् मखे ब्रह्मविदामृषीणां यः सामघोषस्त्रिदिवं जगाम।**
**तिरोदधे दैवतदुन्दुभीनामनारतं तेन गभीरनादः ॥५५॥**

उस यज्ञ में ब्रह्म को जानने वाले ऋषियों की स्वर्ग तक जाने वाली सामवेद की गंभीर ध्वनि के आगे देवताओं की दुन्दुभियों की ध्वनि छिप गई ॥५५॥

**शुद्धिं वितन्वन् मलिनोऽपि सत्वं प्रकाशयन्नत्र तमोमयोऽपि।**
**स्वयंभुवा संभृतसाधुहव्याद् धूमः कृशानोरुदभूदुदग्रः ॥५६॥**

ब्रह्मा जी द्वारा हवन किये गये उत्तम हव्य से जो यज्ञाग्नि में तीव्र धुआँ उठा वह मलिन (मटमैला; अपवित्र) होने पर भी चारों ओर पवित्रता बरसा रहा था और तमोमय (काला; तमोगुणी) होने पर भी सत्वगुण का प्रकाश कर रहा था ॥५६॥

**इत्थं वितन्वन् विधिवद् वितानमुत्प्रेक्ष्य विघ्नस्य पुरोऽवतारम्।**
**विधिर्विधित्सुः प्रतिकारमस्य दिदेश दृष्टिं दिवसाधिनाथे ॥५७॥**

इस प्रकार विधिवत् यज्ञ करते समय ब्रह्मा जी ने, भावी विघ्न की संभावना देखकर, उस विघ्न का प्रतिकार करने की इच्छा से, सूर्य पर दृष्टि डाली ॥५७॥

**बिम्बादथाम्भोजवनस्य बन्धोः स्वधामसन्दोहनिगूढदेहः।**
**अवातरद् वातरयेण कश्चित् पुमान् पुरस्तात् परमेष्ठिनोऽस्य ॥५८॥**

उसी समय सूर्य के बिम्ब से, अपने तेजःपुञ्ज से ढके हुये शरीर वाले एक पुरुष वायु के समान वेग से उतर कर ब्रह्मा जी के आगे आ खड़े हुये ॥५८॥

**बाणासनं सज्यमसिं सशक्तिं महेषुधी मार्गणपूगपूर्णौ।**
**बिभ्रच्चतुर्बाहुरवार्यवीर्यो वधं विधास्यन् मखबाधकानाम् ॥५९॥**

वे तेजस्वी पुरुष मौर्वी सहित धनुष को, मंत्रशक्ति से युक्त तलवार को और बाणों के समूह से भरे हुये दो भारी तरकसों को लिये हुये थे। उनके चार भुजायें थीं। उनका बल अजेय था। वे यज्ञ में बाधा पहुँचाने वाले पापियों का बध करने वाले थे ॥५९॥

**ध्रुवं चतुर्बाहुरिति प्रसिद्धः स चाहुवाणः किल लौकिकोक्त्या।**
**वंशस्य कर्ता भवतां बभूव संरक्षितोऽधिक्षिति विश्वधात्रा ॥६०॥**

वे तेजस्वी पुरुष निश्चय ही 'चतुर्बाहुमान्' इस नाम से प्रसिद्ध हुये। लोगों में यह 'चतुर्बाहुमान्' नाम अपभ्रंश के कारण 'चाहुवाण' (चौहाण) बन गया। ब्रह्मा जी द्वारा इस पृथ्वी पर संरक्षित वे चतुर्बाहुमान् आपके वंश के कर्ता थे ॥६०॥

**लोकालोकेनेव भूलोकमेतत् तीर्थश्रेष्ठं तीर्थबन्धैः समन्तात् ।**
**सम्भाव्यैतत् सम्भृतैः कीर्तिपूरैः पृथ्वीमेतां पूरय क्षोणिपाल ॥६१॥**

राजन् ! (आपके वंश के कर्ता यहाँ पुष्कर में ही उत्पन्न हुये थे अतः यह पुष्कर तीर्थ आपके लिये अत्यन्त पवित्र है ।) जिस प्रकार लोकालोक पर्वत से यह पृथ्वीलोक घिरा हुआ है, उसी प्रकार इस पुष्कर को जो तीर्थों में श्रेष्ठ है, आप चारों ओर दृढ़ घाटों से घेर कर अपनी विशाल-कीर्ति से इस पृथ्वी को भर दीजिये ॥६१॥

**वर्षाण्येवं द्वादशास्मिन्नुषित्वा स्वेच्छाभोज्यैस्तर्पयन् भूमिदेवान् ।**
**लब्धासि त्वं ब्रह्मसायुज्यमग्रे यद् दुष्प्रापं यज्वभिर्भूरियज्ञैः ॥६२॥**

बारह वर्ष यहाँ रह कर ब्राह्मणों को स्वेच्छा भोजन से तृप्त करके आप विपुल यज्ञ करने वाले याजकों द्वारा भी दुष्प्राप्य ब्रह्मसायुज्य मोक्ष को प्राप्त कीजिये । (मोक्ष चार प्रकार का माना गया है—सालोक्य, सामीप्य, सारूप्य और सायुज्य । इनमें सायुज्य सर्वश्रेष्ठ है) ॥६२॥

इति सुर्जनचरिते महाकाव्ये सप्तम सर्गः ।

---

(६१) लोकालोकः भूलोकपरिधिरूपो विशालः पर्वतविशेषः ।

# अष्टमः सर्गः

**इति निशम्य गिरोऽथ पुरोधसः श्रितमनोरमपुष्कररोधसः ।**
**समनुमोदितवान् मुदितः प्रभुर्हितवचो हि सताममृतायते ॥ १ ॥**

पुष्कर के मनोहर तट पर खड़े हुये पुरोहित के पूर्वोक्त वचन सुन कर राजा अनलदेव ने प्रसन्न होकर उनका अनुमोदन किया । हित के लिये कहे गये वचन सज्जनों को अमृत तुल्य लगते हैं ॥ १ ॥

**अदिशदाशु च दाशरथिप्रभश्चतुरदासजनान् स जनाधिपः ।**
**सपदि पुष्करतीर्थपरिष्कृतौ व्रजत सम्प्रति सोद्यमतामिति ॥ २ ॥**

भगवान् राम के समान तेजस्वी राजा ने अपने अनुचरों को शीघ्र पुष्कर में घाट बनाने के लिये आज्ञा दी ॥ २ ॥

**उपलदारणदारुणवर्तनाः परशुपट्टिशटङ्कपरिच्छदाः ।**
**प्रचलिताश्चपलं चपलेरितैः कलकलैरथ जानपदा जनाः ॥ ३ ॥**

इसके वाद मजदूर लोग जो पत्थर फोड़ने के भीषण कार्य में कुशल थे, फरसे, फावड़े, टाँके आदि औज़ार लेकर वेग से, चापल्य से कलकल शब्द करते हुये, रवाना हुये ॥ ३ ॥

**गुरुवरण्डकरज्जुभिरूर्जिता जितयमानुचरव्रजडम्बराः ।**
**मृगयुवन् मृगयूथमुपाद्रवन् द्रुतपदध्वनिनाऽध्वनि केचन ॥ ४ ॥**

कुछ लोग वड़ी-बड़ी पट्टियाँ उठाने योग्य दृढ़ रस्सियाँ लेकर, यमराज के दूतों के समूह की तीव्र गति को जीतने वाले वेग से, जिस प्रकार शिकारी शिकार पर टूट पड़ता है उसी प्रकार, पग-ध्वनि से मार्ग गुँजाते हुये, टूट पड़े ॥ ४ ॥

**अगणितोन्मदवारणयूथपाः प्रसभरुद्धबिलेशयकन्दराः ।**
**शिखरिणां शिखराणि समापतन् प्लवगतैरपरे प्लवगा इव ॥ ५ ॥**

कुछ लोग मदमत्त हाथियों के झुण्ड की परवाह न करके, वेग से पर्वत की गुफाओं को रोक कर, बन्दरों की तरह कूदते फाँदते, पर्वतों के शिखरों पर चढ़ गये ॥ ५ ॥

**उपरिगप्रतिबिम्बविभावनात् प्रतिमुहूर्तमुपस्थितसंभ्रमाः ।**
**अघटयन् घटकाः कटकान्तरे प्रणिहिताः स्फटिकोपलपट्टकान् ॥ ६ ॥**

ऊपर दिखाई देने वाली अपनी परछाँई के कारण कुछ देर चकित हुये कुशल मजदूरों ने संगमरमर की बड़ी-बड़ी पट्टियाँ पानी के किनारे पर खड़ी कर दीं ॥ ६ ॥

**गिरिदरीशयिताः शरदम्बुदाः स्फटिकपट्टधिया घनपट्टिशैः ।**
**अभिहता जनताः समतापयन् सपदि सस्तनितैस्तडिदग्निभिः ॥ ७ ॥**

पर्वत की गुफाओं में सोने वाले शरद् ऋतु के सफ़ेद बादलों को संगमरमर की पट्टियाँ समझ कर कुछ मजदूरों ने बड़े-बड़े औजारों से उन्हें तोड़ दिया और शीघ्र ही उनमें से भयंकर गर्जना और बिजलियों की आग निकली जिससे बड़ी दूर तक लोग भयभीत हो गये ॥ ७ ॥

**निहितमूर्ध्वमुपस्कृतमञ्जसाञ्जनशिलाफलकं तलशालिभिः ।**
**नवघनाभमुदीक्ष्य जनावृतं न विजहुर्विपिनं वनबर्हिणः ॥ ८ ॥**

काले पत्थर की बड़ी पट्टियों को, जिनको मजदूरों ने बराबर करके ऊपर रक्खा था, नये काले बादल समझ कर बन के मोर, जन-समूह के होने पर भी, वन को छोड़ कर नहीं भागे ॥ ८ ॥

**विकटटङ्कविदारणसंभवैररुणितं घनगैरिकरेणुभिः ।**
**क्षितिभृतः क्षतजद्रववद् बभौ बहलनिर्झरनीरमनारतम् ॥ ९ ॥**

भीषण औजारों से पर्वत की चट्टानों को तोड़ देने के कारण उनमें से गहरे जल की धारा फूट पड़ी जो गेरु के कणों से मिल कर लाल हो गई और ऐसी लगी मानों चट्टानों के टूटने से पर्वत पर जो घाव पड़ गये थे उनसे निरन्तर रुधिर की धारा वह रही हो ॥ ९ ॥

**परशुपातपरासुमहातरुप्रपतनोत्पतदायतनिःस्वनैः ।**
**क्षितिभृदार्तरवं व्यतनोदिव प्रतिरवैर्मुखरीकृतदिङ्मुखैः ॥१०॥**

कुल्हाड़ों और फरसों की चोटों से बड़े-बड़े वृक्षों के गिरने के जो विकट शब्द हुये वे दिशाओं की प्रतिध्वनि के कारण प्रगुणित होकर ऐसे लगे मानों पर्वत, अपने ऊपर चोटें पड़ने से, कराह रहा हो ॥१०॥

**उपलताडननिष्ठुरनिस्वनव्रणितकर्णयुगं गिरिगह्वरे ।**
**उपलताभवनं वनदेवतामिथुनमुज्झितधैर्यमवर्तत ॥११॥**

पर्वत की गुफाओं में लता भवन के समीप स्थित वन देवताओं का मिथुन, चट्टानों को तोड़ने के भयंकर शब्दों के कारण मानों अपने कानों में प्रहार का अनुभव करता हुआ, अधीर हो उठा ॥११॥

**विदलितद्रुममुद्धृतकण्टकं चिरनिराकृतवन्यमृगद्विजम् ।**
**विपणिनां विनिवेशमनोरमं गिरिवनं नगरं समजायत ॥१२॥**

वृक्षों को तोड़ देने से, काँटों को उखाड़ फेंकने से, जंगली जानवरों को भगा देने से और व्यापारियों के सुन्दर मकान वन जाने से वह पर्वतप्रदेश सुन्दर नगर के समान वन गया ॥१२॥

**अतिबलोद्धृतदीर्घशिलावटाः सपदि निर्मलनिर्झरपूरिताः ।**
**तनुभृतां महतामवगाहनक्षमतमाः सरितः शतशोऽभवन् ॥१३॥**

अत्यन्त बलपूर्वक बड़ी-वड़ी चट्टानों के तोड़ देने से वहाँ गहरे गर्त बन गये जिनमें से निर्मल झरने बहने लगे और उन झरनों के आपस में मिल जाने से वहाँ बड़े-वड़े प्राणियों के स्नान करने योग्य सैकड़ों नदियाँ बन गईं ॥१३॥

**अथ रथप्रतिमैर्जववत्तया जितमनोभिरनोभिरनायतैः ।**
**परिजनाः परितो गिरितस्ततो मणिशिलाशकलान् समुपाहरन् ॥१४॥**

लोग, रथ के समान लगने वालीं, अपने वेग से मन की गति को भी जीतने वालीं, छोटी-छोटी गाड़ियों (बहेलियों) में पर्वत के चारों ओर से मणिशिलाओं के टुकड़े रख कर घर ले गये ॥१४॥

**शुभमुहूर्तमिवास्य महीपतेः समधिगम्यनियोगमयोपमम् ।**
**स्थपतयः खलु पुष्कररोधसः सुनिपुणाः परिकर्म विनिर्ममुः ॥१५॥**

राजा के शुभ मूहूर्त के समान सुन्दर आदेश को पाकर कुशल कारीगरों ने पुष्कर के तट पर
हे के समान दृढ घाट बना दिये ॥१५॥

**कनकपुष्पमिव क्रमशोभितामुपरि बिभ्रदथाधिकविस्तृतिम् ।**
**व्यरचि कारुगणेन सुमेरुवत् समवतारचयो मणिभिः शुभैः ॥१६॥**

कारीगरों ने सोने के फूल के समान सुन्दर, नीचे से ऊपर जाने पर क्रमशः चौड़ी होने वाली,
न्दर मणियों से जड़ी हुई, घाटों पर सीढ़ियाँ भी बनाईं ॥१६॥

**तदुपरि प्रथितोज्वलतेजसा प्रतिदिशं पृथिवीपतिना ततः ।**
**मणिहिरण्मयहर्म्यनिवेशनं दिविषदामुपदीकृतमायतम् ॥१७॥**

सीढ़ियों के ऊपर प्रत्येक दिशा में, तेजस्वी और विख्यात राजा ने देवताओं के योग्य, सोने
ार मणियों से जड़े हुये विशाल महल बनवाये ॥१७॥

**प्रथममेव बभूव निवासभूः सुमनसां किल पुष्करतीर्थभूः ।**
**अनलदेवनिवेदितमन्दिरैरजनि सा सुतराममरावती ॥१८॥**

पुष्कर तीर्थ की भूमि पहले से ही देवताओं के रहने योग्य थी और राजा अनलदेव के बनवाये
ो घाटों, महलों और मन्दिरों के कारण तो वह इन्द्रपुरी ही बन गई ॥१८॥

**कलियुगेऽत्र निगूहितमूर्तयोऽप्यतिमनोरमधामजिघृक्षवः ।**
**उपहितायतनप्रतिमामिषाद् ववृतिरे प्रकटास्त्रिदिवौकसः ॥१९॥**

कलियुग में स्वर्ग के देवता पृथ्वी पर अपना स्वरूप प्रकट नहीं करते, फिर भी अत्यन्त मनो-
र स्थान में रहने की इच्छा करते ही हैं। अतः पुष्कर के मन्दिरों में बड़ी-बड़ी प्रतिमाओं के बहाने
प्रकट हुये ॥१९॥

**अवततार हरिर्दशधा क्रमात् समयदेशविशेषवशात् पुरा ।**
**युगपदेव तदेकनिकेतने दशभिराविरभूत् तनुभिर्विभुः ॥२०॥**

पहले भगवान् समय और देश विशेष का ध्यान करके क्रमशः दश अवतारों के रूप में प्रकट
ए थे, किन्तु वे पुष्कर के एक ही मन्दिर में एक साथ दसों अवतारों के रूप में प्रकट हुये ॥२०॥

**स्फटिकदेवकुले क्वचन स्थितं जलदखण्डमखण्डरुचिं दधौ ।**
**हिममयावरणोज्झितमण्डले हिमकरे हरिणस्य यथा वपुः ॥२१॥**

संगमरमर के मन्दिर में एक मेघ का टुकड़ा अखण्ड शोभा धारण करता हुआ ऐसा लग
हा था मानों कुहरे के आवरण से मुक्त चन्द्रबिम्ब में हरिण का शरीर हो ॥२१॥

**दिविषदायतनान्यभितस्तदा तरुणचारुतरारुणपल्लवैः ।**
**व्यरचयत् फलपुष्पपुरस्कृतान्युपवनानि घनान्यवनीपतिः ॥२२॥**

राजा ने देव-मन्दिरों के चारों ओर नवीन और अत्यन्त सुन्दर लाल पत्तों वाले एवं पुष्पों
ौर फलों से लदे हुये घने उपवन लगवाये ॥२२॥

**न च नवस्तबके सुरभूरुहां रतिपते र्न तथा च शरासने।**
**अतितरां रतिमानशिरे यथा तदधिगत्य वनं मधुपाङ्गनाः ॥२३॥**

भ्रमरियों ने जैसी रति उन उपवनों में दिखाई वैसी न तो कल्पवृक्षों के नये पुष्पों के गुच्छों में दिखाई और न कामदेव के पुष्प धनुष में ॥२३॥

**सपदि तत्र वनेऽवनिमण्डने फलमनेकविधं यदजायत।**
**तदुपयुज्य तपस्विगणः स्फुटं निजतपःफलितं सममन्यत ॥२४॥**

पृथ्वी के भूषण उस उपवन में जो नाना प्रकार के फल उत्पन्न हुये उनको खाकर तपस्वी पुरुषों ने अपना तप सफल समझा ॥२४॥

**अथ विधाय विधेयमखण्डयन् गुरुगिरां गरिमाणमकैतवम्।**
**नरपतिः प्रयतश्चिरमुत्सुकप्रियपुरन्ध्रिपुरं धृतिमान् ययौ ॥२५॥**

सावधान और धीर राजा अनलदेव ने अपने पुरोहित गुरु के वचनों के गौरव की रक्षा करते हुये निष्कपट रीति से उनकी आज्ञानुसार कार्य सम्पूर्ण किया और फिर चिरकाल से अपने प्रिय की उत्सुकतापूर्वक प्रतीक्षा करने वाली स्त्रियों से शोभित अपनी राजधानी गये ॥२५॥

**अजनि तस्य सुतः सुकृतालयः क्षितितले जगदेव इति श्रुतः।**
**विपुलसत्वगुणो जगतोऽप्यलं वितरणाय वनीयकवत्सलः ॥२६॥**

उन अनलदेव के पुण्यात्मा, विपुल सत्वगुण से युक्त, महान् वलशाली, सम्पूर्ण जगत् को दान देन में समर्थ, याचकों के प्रिय, **जगदेव** नाम से विख्यात पुत्र उत्पन्न हुये ॥२६॥

**उपचितो जगति प्रथितैर्गुणैर्गुणिसमाजसमादरमण्डितः।**
**प्रतिहतप्रतिपक्षगणोन्नतिर्वसुमतीमशिषद् वशिनां पतिः ॥२७॥**

संसार में प्रसिद्ध गुणों से युक्त, गुणी पुरुषों के समुदाय का समुचित आदर करने वाले और शत्रु-समुदाय की उन्नति को रोकने वाले तथा वशी पुरुषों में अग्रगण्य जगदेव ने पृथ्वी पर शासन किया ॥२७॥

**विशदकीर्तिमतीव विशालयन् बिसलतामिव तामरसाकरः।**
**स किल बीसलदेवमजीजनद् वसुसमानगुणं वसुधाधिपः ॥२८॥**

जैसे सूर्य कमलों की मृणाल-लता को विकसित बनाते हैं वैसे ही अपनी शुभ्र-कीर्ति को अत्यन्त विकसित बनाने वाले उन राजा जगदेव ने देवता के समान गुणवान् (अथवा अग्नि के समान प्रतापी) **बीसलदेव** को जन्म दिया ॥२८॥

**सुचरितैः सततं जनरञ्जनव्यसनिनः खलु बीसलदेवतः।**
**अजयपाल इति प्रथितः सुतो रिपुसमाजजयी समजायत ॥२९॥**

अपने सुन्दर चरितों से सदा प्रजा को आनन्दित करने में संलग्न बीसलदेव के शत्रुसमाज को जीतन वाले **अजयपाल** नाम से विख्यात पुत्र उत्पन्न हुये ॥२९॥

**अपि नरेन्द्रपरम्परयागतं पदमवाप्य नवाधिपतिर्भुवः ।**
**स्वमहसा सहसा बहुसम्पदा वहलयन्नयमन्यदिवाकरोत् ॥३०॥**

पृथ्वी का नया अधिकार पाने वाले अजयपाल ने राजपरंपरा से प्राप्त पद को अपने तेज से और सर्वतोमुखी सम्पत्ति से बढ़ा कर और ही वना दिया ॥३०॥

**यदलभन्त पुरा पृथिवीभुजो विजयमानचमूचरसङ्गरैः ।**
**स्वनगरे निवसन् नयकोविदः स तदवाप यशः प्रहसन्मुखः ॥३१॥**

पहले राजाओं ने जो यश अपने विजयशील सैनिकों द्वारा युद्धों से प्राप्त किया था उस यश को नीतिकुशल और हँसमुख राजा अजयपाल ने राजधानी में रह कर ही प्राप्त कर लिया ॥३१॥

**तरुणयन् मिथुनेषु परस्परप्रणयबन्धमपाकृतकैतवम् ।**
**सुरभयन्नथ मन्दसमीरणं सुरभिराविरभूदभितो वनम् ॥३२॥**

स्त्री-पुरुषों के परस्पर निष्कपट प्रेम-बन्धन को दृढ़ वनाने वाला और मन्द पवन को सुगन्धित करने वाला वसन्त उपवन के चारों ओर प्रकट हुआ ॥३२॥

**मलयमारुतचारुतराधुतस्तबकदम्भमनोरमचामरैः ।**
**अतिरसादतिमुक्तलता किमु स्मरसखं समयं समवीजयत् ॥३३॥**

क्या मलयानिल द्वारा अच्छी तरह हिलाये जाने वाले पुष्पों के गुच्छों रूपी सुन्दर चँवरों को यह अतिमुक्त वृक्ष की लता, अपने अत्यधिक प्रेम के कारण, कामदेव के मित्र वसन्त पर ढुला रही है ? ॥३३॥

**स्फुटलवङ्गलतावनसङ्गिनां मधुलिहां निनदः सममूमुहत् ।**
**कुसुमबाणशरासनशिञ्जिनीध्वनिरिवाध्वगवामदृशां मनः ॥३४॥**

खिली हुई लवंग लताओं के वन में आसक्त भ्रमरों के, पुष्पधन्वा कामदेव के धनुष की मौर्वी की टंकार के समान लगने वाले, निनाद ने प्रोषितपतिका स्त्रियों के मन को मूर्च्छित कर दिया ॥३४॥

**श्रियमधत्त मधूद्यमसंभृतां कुटिलकिंशुककोरकधोरणी ।**
**स्मृतिभुवोर्धशशाङ्कशिलीमुखावलिकलामिव भीतवियोगिनाम् ॥३५॥**

वसन्त ऋतु में विकसित पलाश वृक्ष की लाल और अर्धवृत्ताकार कलियों की पंक्ति ने भय-भीत विरही व्यक्तियों के लिये पुष्पधन्वा कामदेव के वसन्त द्वारा निर्मित अर्धचन्द्राकार बाणों की शोभा प्राप्त की ॥३५॥

**अधरपत्रविमर्दभयादिव क्षणविकम्पिकराकृतिपल्लवाम् ।**
**मुखपटाभमुदस्य रजोभरं मृदु चुचुम्ब मरुन् नवमाधवीम् ॥३६॥**

अपने लाल पत्तों रूपी अधर के मर्दन के भय से कुछ देर अपने शाखा रूपी हाथ हिला कर मना करती हुई तरुण माधवी लता को, पराग रूपी घूँघट हटा कर, पवन ने धीरे से चूमा ॥३६॥

---

(३१) विजयमाना ये चमूचरास्तेषां संगरैः ।

**सहजमेव समेत्य मधुश्रिया विकलयेत् पथिकान् बकुलद्रुमः ।**
**किमुत मेदुरितो मदिरेक्षणावदनवासितसीधुसुधारसैः ॥३७॥**

वसन्त की लक्ष्मी को प्राप्त कर वकुल वृक्ष सहज ही पथिकों को व्याकुल कर देता है; फिर मादक नयनों वाली कामिनियों के मुख से उगली हुई मदिरा के अमृत-रस को पीकर विकसित होने पर तो कहना ही क्या ! (कवि समय के अनुसार वकुलवृक्ष स्त्रियों के मुख से कुल्ले की हुई मदिरा को पीकर अत्यन्त विकसित होता है) ॥३७॥

**अदशदाम्रलतानवपल्लवं सुललितस्वरहेतुकुहूमुखः ।**
**अभवदाशु वियोगमृगीदृशां हृदयमर्मणि दारुणवेदना ॥३८॥**

अत्यन्त ललित-स्वर में कूकने वाली कोयल ने आम्रलता के नये पल्लव पर चोंच मारी, किन्तु इससे शीघ्र ही वियोगिनी स्त्रियों के हृदयमर्मों पर भीषण आघात हुआ ॥३८॥

**स्मृतिभुवः श्वसितैरिव शीतलैरपि नितान्तमरुन्तुदकर्मभिः ।**
**अजनि चेतसि मन्दसमीरणैश्चिरममन्दरुजाध्वगयोषिताम् ॥३९॥**

कामदेव की साँसों के समान शीतल, किन्तु फिर भी मर्मस्पर्शी पीड़ा देने वाले, मन्द पवन से प्रोषितपतिका स्त्रियों के मन में तीव्र वेदना हुई ॥३९॥

**अधिवनान्तमशोकमहीरुहः स्फुटमशोभत कोमलपल्लवः ।**
**निहितदोहदमिन्दुमुखीपदं किमु सभाजयितुं प्रसृतः करः ॥४०॥**

उपवन में अशोक वृक्ष की कोमल शाखा ऐसी शोभित हुई मानों (अशोक को) पुष्पित करने वाले, चन्द्रमुखी कामिनी के पैर को पूजने के लिए वढ़ाया हुआ अशोक का हाथ हो। (कवि-समय के अनुसार अशोक वृक्ष स्त्रियों के पादाघात से पुष्पित होता है ) ॥४०॥

**ज्वलयताथ पलाशमयेन्धनैर्मनसिजज्वलनं मधुयज्वना ।**
**विरहिणामभिचारमखे द्विजः प्रथम ऋत्विगकारि वनप्रियः ॥४१॥**

वसन्त रूपी यजमान ने विरही पुरुषों को मारने के निमित्त कराये गये यज्ञ में पलाश-रूपी ईंधन (समिधा) से कामदेव रूपी अग्नि को प्रज्वलित करके वन में रहने वाले द्विज (पक्षी अर्थात् कोयल; ब्राह्मण) को प्रथम ऋत्विक् (यज्ञ करने वाला प्रमुख ब्राह्मण) बनाया ॥४१॥

**दिनकृतोज्झितदक्षिणवर्त्मना प्रथयतातिकठोरकरव्रजम् ।**
**अहरहः परितापमुपेयिवान् नृपतिनेव कुनीतिमता जनः ॥४२॥**

दक्षिणायन से उत्तरायण होने वाले और किरण-समूह को अत्यन्त उग्र करने वाले सूर्य के कारण जनता को दिन-दिन अधिक गर्मी प्राप्त होती गई, जिस प्रकार दक्षिण (उचित और न्याय-शील) मार्ग छोड़ देने वाले अन्यायी और अत्यन्त कठोर कर लगाने वाले निर्दय, कुनीति वाले राजा के कारण जनता का सन्ताप दिन-दिन बढ़ता जाता है ॥४२॥

---

(४१) मधुयज्वना वसन्तरूपयजमानेन। वनप्रियो द्विजः कोकिलः। प्रथम ऋत्विक् प्रधानयाज्ञिकः।

**परिमलैः परितः पवनेरितैर्विविधपुष्पसमृद्धिसमुद्भवैः ।**
**तत इतो ह्रियमाणमनाः क्वचित् स्थितिमधान् न मधुव्रतसन्ततिः ॥४३॥**

नाना प्रकार के पुष्पों के मकरन्द से उत्पन्न होनेवाली और वायु द्वारा चारों ओर फैलाई गई सुगन्ध के कारण इधर-उधर खींचे गये चित्त वाली भ्रमरों की पंक्ति कहीं स्थिर होकर नहीं बैठ सकी ॥४३॥

**कुसुमपल्लवदुर्ललिता लताः परभृताऽऽविरुतानि वनानिलाः ।**
**परममीभिरकारि वशे जगद् विभुतयैव यशोऽलभत स्मरः ॥४४॥**

पुष्पों और पल्लवों के दुलार से लाड़ली लतायें, कोयलों की कूकें, उपवन के पवन—इन सबने जगत् को वश में कर लिया, किन्तु प्रभु होने के कारण यश मिला कामदेव को ॥४४॥

**विधिवशः प्रसवोऽस्तु यथा तथा कुरबकान् न परो रसिकस्तरुः ।**
**सकृदुपात्तवधूपरिरम्भजाः शिथिलिता यदमुष्य न कण्टकाः ॥४५॥**

फूलना-फलना तो विधाता के हाथ है इसलिये भले ही कुरवक वृक्ष के काँटे उत्पन्न होते हैं, किन्तु सच पूछा जाय तो कुरबक के वरावर रसिक वृक्ष और नहीं है क्योंकि एक वार के वधू के आलिंगन से उत्पन्न होनेवाले इसके काँटे (रोमांच) कभी शिथिल नहीं होते ॥४५॥

**किमतिमुक्त ! तवापि बतेदृशी चपलता मधुपीकुलसङ्गमे ।**
**इति लसत्कुसुमैर्नवमालिका किमु जहार रसान् नवपुण्ड्रकम् ॥४६॥**

'हे अतिमुक्त वृक्ष ! भ्रमरियों के समागम में तेरी भी इतनी चपलता क्यों ?'—इस प्रकार कह कर मानों पुष्पों से शोभित नवमालिका लता ने तरुण अतिमुक्त वृक्ष को प्रेम से अपनी ओर खींच लिया ॥४६॥

**सुरभिमासि कृशाङ्गि ! मृषा रुषा ग्रहिलता न हिताय तवेदृशी ।**
**इति निषिद्धवतीव मनस्विनीमनिलकम्पदलाङ्गुलिभिर्लता ॥४७॥**

'हे कृशांगि ! वसन्त के समय में प्रणय-कोप के कारण झूठमूठ का इतना हठ ठीक नहीं है'—इस प्रकार कह कर वायु से कम्पित पत्तों रूपी उँगलियों द्वारा लता ने मानों मानिनी नायिका को मना किया ॥४७॥

**अनुपतद्भ्रमरावलिभेरिकाघनरवैः प्रतिवेश्म परिभ्रमन् ।**
**मदनयामिकवन् मलयानिलो मुहुरजागरयन् निशि नागरान् ॥४८॥**

गूँजनेवाले भ्रमरों की पंक्ति-रूपी ढोल की गहरी ध्वनि के साथ घर-घर घूमने वाला कामदेव का चौकीदार मलयानिल रात में नगर के रसिक लोगों को वार-वार जगाता रहा ॥४८॥

**वनसमीरणमन्थरचालनप्रतिदलोज्वलदिन्दुमरीचयः ।**
**अदलयन् नयनानि वियोगिनां प्रतिदिशं तरवो घनपल्लवाः ॥४९॥**

उपवन के पवन की मन्द चाल के कारण पत्ते-पत्ते पर चन्द्रमा की किरणों का प्रकाश धारण करने वाले और घने पल्लव वाले वृक्ष प्रत्येक दिशा में विरही पुरुषों के नेत्रों को पीड़ित करते रहे ॥४९॥

**धृतनिजासनसक्तगुणं वधूकुलमदीव्यत दोलनविभ्रमैः ।**
**प्रियगुणग्रथितान् पथिकप्रिया मुहुरसूनधिकण्ठमदोलयन् ॥५०॥**

लकड़ी की पट्टी को झूले के गुणों (रस्सियों) पर रख कर ललनायें झूला झूलने की क्रीड़ा कर रही थीं, किन्तु विरहिणी स्त्रियाँ अपने प्रियतमों के गुणों में अपने प्राणों को गूँथ कर उन प्राणों को वार-बार अपने कंठों में झुला रहीं थीं ॥५०॥

**हतहिमावरणः परिशीलयन् कमलिनीं मिलितां बहुकालतः ।**
**स्फुटमतृप्तमना दिननायकः शिथिलरथ्यरयः शनकैरगात् ॥५१॥**

(अपनी प्रिया कमलिनी के शत्रु) कुहरे और पाले के पर्दे को नष्ट करके, वहुत समय बाद मिली हुई प्रिया कमलिनी से प्रेमालाप करने वाले सूर्य भगवान्, अतृप्त मन से, अपने रथ के घोड़ों का वेग कम करके, वड़ी कठिनता से धीरे-धीरे गए। (वसन्त में दिन काफ़ी वड़े हो जाते हैं) ॥५१॥

**नियतमम्बुजिनीमविलोकयन्नजनि मन्दरुचिः शिशिरे रविः ।**
**इतरथा कथमेतदुदीक्षणात् प्रकृतिमाप पुनर्भगवान् निजाम् ॥५२॥**

शिशिर-ऋतु में निश्चय ही अपनी प्रेयसी कमलिनी को न देखने के कारण सूर्य की प्रभा फीकी (मन्दरुचि) पड़ गई थी, अन्यथा अव वसन्त में कमलिनी को देखकर सूर्य भगवान् फिर स्वभाव से चण्डरुचि (उग्र तेज वाले; सूर्य का नाम) कैसे वन गये ? ॥५२॥

**दिनमुखोपचितं हरितां मुखान् मलिनिमानमुदस्य मरीचिमान् ।**
**कलहखेदितवल्लभचेतसामधिमुखं निदधे हरिणीदृशाम् ॥५३॥**

प्रातःकाल में दिशाओं के मुखों पर लगी हुई (अन्धकार की) कालिमा को हटा कर सूर्य न उस प्रणय-कलह से रात भर प्रियतमों के मन को दुःख देनेवाली कलहान्तरिता नायिकाओं के मुखों पर पोत दिया। (अपने हठ से वसन्त की रात प्रणय-कलह के कारण बेकार खो देने से प्रातः काल कलहान्तरिताओं के मुख शोक से मलिन हो गये) ॥५३॥

**सुवदनारदनच्छदकोमला नवविमुक्तपुटा मृदुपल्लवाः ।**
**असितदृक्श्वसितप्रतिरूपका मलयशैलसखा वनवायवः ॥५४॥**
**नववधूनिभृतालपितोपमाः परभृतापरिषत्कलनिस्वनाः ।**
**पृथगपि प्रभवेयुरयोगिनां विशसने किमुताधिकसंहताः ॥५५॥**

सुन्दर मुख वाली रमणियों के अधर के समान कोमल नये खिले हुए ये मृदु पल्लव, काली आँखों वाली सुन्दरियों की साँस के समान सुगन्धित मलयगिरि के मित्र ये उपवन के वायु, नवोढा नायिकाओं के एकान्त में बोले गये वचनों के समान मधुर ये कोयलों की सुन्दर कूकें—इनमें से प्रत्येक अलग-अलग भी, विरही जनों को सन्ताप देने में पूर्ण समर्थ है, फिर सबके इकट्ठे मिल जाने पर तो कहना ही क्या ! ॥५४–५५॥

**विततबहुविधप्रसूनमालां भृततिलकां किल काञ्चनाढ्यभूषाम् ।**
**नरपतिरथ निर्ययौ तदानीं दयिततमामिव वीक्षितुं वनालीम् ॥५६॥**

तब विविध पुष्पों की विस्तृत मालायें धारण करने वाली, तिलक (सौभाग्य चिह्न; एक वृक्ष) से युक्त, सुवर्ण की समृद्धि से भूषित, प्रियतमा के समान लगने वाली, उपवन-वाटिका को देखने के लिये राजा अजयपाल चले ॥५६॥

इति सुर्जनचरितमहाकाव्येऽष्टमः सर्गः ।

---

(५०) अदीव्यत इत्यत्र दिविरन्तर्भावितण्यर्थः कर्मणि लङ् क्रीडां कारितमित्यर्थः ।

# नवमः सर्गः

अवनीरमणो मनोरमाभिः कियतीभिः कुतुकेन कामिनीभिः ।
कुसुमाकरकौशलं दिदृक्षुर्निजमाराममथोज्वलं जगाम ॥ १ ॥

राजा अजयपाल कुछ सुन्दर कामिनियों के साथ कौतुकवश वसन्त की शोभा देखने के लिये अपने सुन्दर उपवन में गये ॥ १ ॥

जितपल्लवविभ्रमाः करार्ग्रैर्विहसन्त्यो नखरोचिषा प्रसूनम् ।
मुखरैः कलनूपुरैरलीनां दुरहङ्कारमनारतं हरन्त्यः ॥ २ ॥
भणितैरनृतीकृतामृतौघैः कलकण्ठीविरुतानि कुण्ठयन्त्यः ।
शिथिलां सुरभिश्रियं वितेनुः प्रविशन्त्यः पृषतीदृशो वनान्तम् ॥ ३ ॥

अपने कोमल हाथों से पल्लवों की शोभा हरने वाली, नखों की कान्ति से पुष्पों को मात करने वाली, नूपुरों की मनोहर ध्वनि से भ्रमरों के दुर्मद को सदैव हरने वाली, अमृत के प्रवाह को तुच्छ करने वाले मधुर वचनों से कोयलों की कूकों को कुण्ठित करने वाली मृगनयनी कामिनियों ने उपवन में प्रवेश करके वसन्त की शोभा को अपनी शोभा के आगे फीका बना दिया ॥ २–३ ॥

करमर्पयितुं कृतानुबन्धां नवसूनस्तबकेषु वामनेत्राम् ।
प्रतिषेद्धुमसूयया किमुच्चैः कृतनादं मधुपालिरुच्चचाल ॥ ४ ॥

नये पुष्पों के गुच्छों में (तोड़ने के लिये) हाथ डालने के यत्न में बद्धपरिकर मृगनयनी को ईर्ष्या के कारण मानों मना करती हुई भ्रमरों की पंक्ति उच्च-स्वर से हुंकारती हुई उड़ गई ॥ ४ ॥

अविषह्यमनङ्गकिङ्करीभिः सहकाराङ्कुरभङ्गमङ्गनाभिः ।
अवलोक्य विदूरमुत्पतन्ती विकला किं पिककामिनी चुकूज ॥ ५ ॥

कामदेव के आधीन स्त्रियाँ आम की नई कोंपल का (कामदेव का धनुष होने के कारण) तोड़ना नहीं सह सकतीं। मानों इसीलिये यह देख कर कोयल दूर उड़ गई और व्याकुल होकर कूकने लगी ॥ ५ ॥

घनकुञ्जतिरोहितं धुवत्यास्तरुमुच्चैः कुसुमाशया युवत्याः ।
कलकङ्कणझङ्कृतं निशम्य क्षणसंभावितवैशसा सपत्नी ॥ ६ ॥
स्फुरिताधरपल्लवा सकम्पा पवमानोल्लसितेन कापि वल्ली ।
अरुणं मुखमातपेन भूयोऽप्यरुणिम्नैव तिरोहितं वहन्ती ॥ ७ ॥
द्रुतमुच्चलितुं कृतप्रयत्ना विनिरुद्धा घनवीरुधां वितानैः ।
सहसावचितैः सह प्रसूनै र्न दुकूलं गलितं विदाञ्चकार ॥ ८ ॥

घने कुंज में छिपे हुये किसी वृक्ष को, फूलों की आशा से, जोर से हिलाती हुई युवती के कंकणों

---

(६) वैशसं ईर्ष्याजन्यक्रोधः ।

की सुन्दर झनकार सुन कर समीपस्थ लता को, युवती को सपत्नी समझकर, तुरन्त ईर्ष्या हो गई और वह अपने पल्लव-रूपी अधर को फड़काती हुई, वायु से हिलने के कारण मानों क्रोध से काँपती हुई, धूप से लाल मुख को क्रोध की लाली से छिपाती हुई, वेग से चलने के लिये तैयार हुई, किन्तु अन्य घनी लताओं के विस्तार से रोक ली गई; ईर्ष्या से वह इतनी आकुल हो गई थी कि उसे हिलने के कारण सहसा नीचे गिरे हुए अपने फूलों-रूपी वस्त्र तक का ध्यान नहीं रहा ॥ ६–८ ॥

**जननावधि सेवितां नितान्तं बत सत्स्वामिवधूमिवान्तरार्द्राम् ।**
**स्वपदव्यसनेऽपि षट्पदाली सुमनःसन्ततिमन्वियाय दूरम् ॥ ९ ॥**

विद्वान् पिता की पुत्री, जन्म से ही अच्छी तरह सेवित, दयार्द्रहृदया और सुशीला स्वामिनी के समान जन्म से ही भलीभाँति सेवित, मकरन्द से आर्द्र, और शुभ्र होने के कारण सुन्दर, पुष्पों की पंक्ति के पीछे, अपने स्थान से हटाकर दूर ले जाये जाने पर भी, भ्रमरों की पंक्ति, नैहर से ससुराल लिवाये जाने वाली स्वामिनी के पीछे दासी के समान, बहुत दूर तक गई ॥ ९ ॥

**नमितो नहि नावधूनितो वा क्लिशितो नाङ्कुशसङ्कुलैरुपायैः ।**
**स्वयमेव समाकिरत् प्रसूनैर्बकुलो लम्भितदोहदो वधूभिः ॥१०॥**

वकुल वृक्ष को ललनाओं ने न तो झुकाया, न हिलाया और न अंकुश के समान पीड़ा देने वाले उपायों से उसे क्लेश ही दिया। फिर भी वकुल ने (ललनाओं के मुख से कुल्ले की गई मदिरा के कारण विकसित और पुष्पित होने से मानों अहसान मानते हुये) अपने आप उन पर अपने फूल बिखेर दिये ॥१०॥

**सुचिरं कुसुमानि केसराणामवकीर्णान्यपि मारुतेन दूरात् ।**
**यदखण्डितसौरभाणि रामामुखमाध्वीकरसस्य स प्रभावः ॥११॥**

बकुल वृक्षों के फूलों को पवन ने बहुत दूर ले जाकर डाल दिया, किन्तु फिर भी उनकी सुगन्ध अखण्ड बनी रही; यह रमणियों के मुख से कुल्ले किये गए मद्य के रस का प्रभाव था ॥११॥

**परिहासपुरःसरं प्रियेण प्रहितस्य स्थलपङ्कजस्य रेणुः ।**
**प्रविशन् नयनान्तरं नताङ्ग्या ववृते वाष्पतरङ्गिणी सपत्न्याः ॥१२॥**

प्रियतम द्वारा हास्य में फेंके गये स्थल-कमल का पराग तो किसी कृशांगी सुन्दरी के नेत्रों में घुसा, किन्तु उसके कारण आँसुओं की धारा निकली सपत्नी की आँखों से ॥१२॥

**अरुणैस्तरुणेन रेणुपूरैः परितो रञ्जितमाननं मृगाक्ष्याः ।**
**नतमानयति स्म शोणिमानं गुरुमन्युः प्रतिकामिनीजनस्य ॥१३॥**

इधर तरुण प्रियतम ने अरुण परागों के समूह के मर्दन से मृगनयनी के मुख को चारों ओर से लाल बना दिया और उधर ईर्ष्याजन्य महान् क्रोध ने सपत्नियों के झुके हुए मुखों को लाल बना दिया ॥१३॥

**अवचित्य पुरोगतानि तावत् कुसुमानि त्वरितैव पञ्चषाणि ।**
**करमध्यगतानि गोपयन्ती सविधे मुग्धवधूर्मनोधिपस्य ॥१४॥**

**निपुणं निजदेवमर्चयेति प्रथिताकूतमुदाहृताऽथ सख्या ।**
**कुटिलीकृतपाटलान्तनेत्रा वदनेऽस्याः क्षिपति स्म तानि तूर्णम् ॥१५॥**

सामने लगे हुए फूलों में से झट पाँच छ:फूल तोड़कर मुग्धा वधू ने, प्रियतम के पास होने के कारण, उन्हें हथेली में छिपा लिया। किन्तु किसी सखी ने उसे देख लिया और व्यंग्यपूर्वक कहा—'इन फूलों से अपने देवता की अच्छी तरह पूजा करो।' इस पर मुग्धा वधू ने, अपनी तिरछी और लाल आँखों से उसकी ओर देखकर, शीघ्र उन फूलों को सखी के मुख पर ही फेंक दिया॥१४-१५॥

**नवखण्डितपल्लवावलीनां क्षरितक्षीरकषायितः क्रमेण ।**
**श्रमशीकरजालकेऽबलानां क्षणमस्पन्द इवास गन्धवाहः ॥१६॥**

नये कोमल पत्तों के समूहों को तोड़ने के कारण उनमें से निकले हुए रस से सुगन्धित पवन, क्रमशः ललनाओं के श्रमजन्य पसीने की बूँदों के जाल पर, क्षण भर गतिशून्य सा होकर, रुका रहा॥१६॥

**समुदा समुदायमङ्गनानां श्रमखेदादलसालसञ्चलन्तम् ।**
**न विवेद विदूरतां भजन्तं वनलक्ष्मीविनिभालनान् नरेन्द्रः ॥१७॥**

उपवन की शोभा देखने में संलग्न होने के कारण, राजा को, परिश्रम के खेद से धीरे धीरे चलने वाले और बहुत दूर तक चले जाने वाले स्त्रियों के समूह का ध्यान नहीं रहा॥१७॥

**अवगाह्य च काननं महीयः सुमुहूर्तादथ देवतासहायः ।**
**अवलोकयति स्म लोकपालप्रतिमल्लः कमलाकरं प्रफुल्लम् ॥१८॥**

इन्द्रादि दिक्पालों के समान प्रतापी राजा अजयपाल ने अकेले ही उस बड़े उद्यान के भीतर जाकर सुमुहूर्त में एक कमलों से खिले हुए सरोवर को देखा॥१८॥

**तटसीमनि तस्य वेदिकायां स्फुटकङ्केल्लिनिकुञ्जरञ्जितायाम् ।**
**अमृताञ्जनतामयं निनाय स्वदृशोः कामपि भामिनीमपूर्वाम् ॥१९॥**

राजा ने उस सरोवर के किनारे पर, खिले हुए अशोक के कुंज से शोभित एक छोटे से चबूतरे पर स्थित, नेत्रों को अमृत के अञ्जन के समान आनन्द देने वाली एक अलौकिक सुन्दरी को देखा॥१९॥

**चिकुरार्पितदिव्यदामगन्धादुपरिष्टात् परितो विवर्तमानैः ।**
**शिखिपत्रकृतातपत्रकान्ति कलयद्भिर्भ्रमरैर्निषेव्यमाणाम् ॥२०॥**
**पतनोत्पतनाकुलद्विरेफं मुहुरुन्मुद्रणमुद्रणाभियोगात् ।**
**स्फुरदङ्गुलिमृद्यमानपत्रं क्लमयन्तीं कमलं करस्थनालम् ॥२१॥**
**मदनज्वरमुल्वणानुबन्धं मदनेऽपि प्रसभं निवेशयन्तीम् ।**
**नवविभ्रमसंभृतैरपाङ्गैरतिवल्लीदलताण्डवप्रसङ्गैः ॥२२॥**

वह सुन्दरी अपने बालों में लगाई गई अलौकिक पुष्पमाला की सुगन्ध के कारण चारों ओर

---

(१९) कंकेल्लिरशोकः।
(२०) शिखिनो मयूरस्य पत्रेण पिच्छेन कृतमातपत्रं येन सः श्रीकृष्णः तस्य कान्ति शोभां श्यामतामित्यर्थः।

ऊपर मँडराने वाले तथा मयूरपिच्छ रूपी छत्र धारण करनेवाले भगवान् कृष्ण की कान्ति को चुराने-वाले (अर्थात् श्रीकृष्ण के समान श्याम) भ्रमरों द्वारा सेवित थी। वह एक हाथ में कमल की नाल पकड़े हुए थी और दूसरे हाथ से, लीला के कारण, कमल को कभी खोलती और कभी बन्द करती थी जिस कारण कमल पर मँडरानेवाले भ्रमर बार बार गिरने से और उड़ने से आकुल हो-रहे थे और उज्वल उँगलियों द्वारा पखुड़ियों के मर्दन से कमल म्लान हो रहा था। लता के वायु-कम्पित पल्लवों के नाच के समान चञ्चल तथा नवीन हाव भाव से शोभित कटाक्षों द्वारा वह सुन्दरी स्वयं कामदेव को भी काम-ज्वर के उत्कट आवेग का बलपूर्वक शिकार बना रही थी ॥२०–२२॥

**वशिनां प्रथमोऽपि पार्थिवेन्द्रः स तदालोकसमानकालमेव ।**
**युगपद् विशिखैः प्रसूनकेतोरभवन् मर्मणि पञ्चभि विभिन्नः ॥२३॥**

राजा अजयपाल, वशी पुरुषों में अग्रगण्य होने पर भी, उस दिव्य सुन्दरी को देखते ही काम-देव के पाँचों बाणों से एक साथ घायल हो गये ॥२३॥

**विनियम्य च मानसं प्रयत्नात् क्षणमक्षीणमतिः पतिः पृथिव्याः ।**
**इदमन्तरचिन्तयत् तदानीं बहुभिर्व्याकुलितेन्द्रियो वितर्कैः ॥२४॥**

बुद्धिमान् राजा ने बड़े प्रयत्न से अपने चित्त को वश में करके, अनेक तर्क-वितर्कों से व्याकुल मन में इस प्रकार विचार किया ॥२४॥

**किमियं वनदेवतैव तावन् मधुलक्ष्मीः किमु लक्षणीयमूर्तिः ।**
**वरुणालयसोदरादमुष्माद् वरुणश्रीः सरसः किमुन्ममज्ज ॥२५॥**

क्या यह सुन्दरी कोई वनदेवता है ? या यह सुन्दर वसन्तलक्ष्मी है ? या समुद्र के समान इस सरोवर से वरुण-लक्ष्मी प्रकट हुई है ? ॥२५॥

**इदमद्भुतकौशलं विधातुर्मदिराक्षीरमणीयताविधाने ।**
**त्रिदिवेऽपि सुदुर्लभं प्रतीमः किमुतास्मिन् मसृणे मनुष्यलोके ॥२६॥**

यह सुन्दरी सुन्दर रमणियों की रमणीयता के निर्माण में विधाता का अद्भुत कौशल है। ऐसा अद्भुत सौन्दर्य स्वर्ग में भी, हमारे विचार से, अत्यन्त दुर्लभ है, फिर इस अस्थिर मरणशील मनुष्यलोक की तो बात ही क्या ॥२६॥

**मधुना मधुरीकृते वनेऽस्मिन् सततं सन्निहितः प्रसूनबाणः ।**
**विजने विजरीहरीति तस्य प्रतिकुञ्जं सहधर्मचारिणी वा ॥२७॥**

अथवा, वसन्त से मधुर बनाये हुए इस उपवन में कामदेव सदा उपस्थित रहता है, अतः संभव है कि यह उसकी धर्मपत्नी रति हो जो उसके साथ इस उद्यान के कुंजों में विहार कर रही है ॥२७॥

**कुसुमाकरशीलिते वनेऽस्मिन् मदनः सन्निहितः सहैव रत्या ।**
**रतिरेव विभाव्यते पुरस्तादतनुत्वादपरः परोक्ष एव ॥२८॥**

वसन्त से सुशोभित इस उद्यान में कामदेव का रति के साथ विहार करना सर्वथा उचित है। अतः यह सुन्दरी निश्चय ही रति है और कामदेव, शरीररहित होने के कारण, दिखाई नहीं देता।२८।

**स्वयमेव समीपमेत्य तावत् प्रणयप्रश्नपुरःसरं कृशाङ्ग्याः ।**
**कुलजातिनिवासचेष्टितानि प्रतिपत्स्ये निखिलानि सावधानः ॥२९॥**

मैं स्वयं ही इस कृशांगी के पास जाकर प्रेमपूर्वक प्रश्न करके सावधान मन से इसके कुल, जाति, निवास और कार्य का सारा विवरण प्राप्त कर लूँ ॥२९॥

**इति चिन्तयति क्षणं क्षितीशे मदनाकूतमरं तरङ्गयन्ती ।**
**अविशत् सरसं ह्रदं तदन्तःकरणं चापि समं सुमध्यमा सा ॥३०॥**

जब राजा अजयपाल इस प्रकार सोच ही रहे थे तभी वह सुन्दरी मानों कामदेव के रहस्य को शीघ्र तरंगित करती हुई उस सरस सरोवर में और साथ ही साथ राजा के सरस हृदय में प्रवेश कर गई ॥३०॥

**अथ रीतिममानुषीममुष्याः प्रविलोक्याकृतिविभ्रमानुरूपाम् ।**
**सुविषण्णमना मनोरथानामपि दुष्प्रापमभीप्सितं स मेने ॥३१॥**

उसके अलौकिक सौन्दर्य और हाव-भाव के अनुरूप उसका यह अलौकिक व्यवहार देखकर दुःखित-हृदय राजा ने अपने मनोरथों को नितान्त दुष्प्राप्य माना ॥३१॥

**स तथागतया तयैव शक्त्या नृपतिर्मर्मणि कीलितः स्मरेण ।**
**अवधूय विधेयमात्मनीनं विवशात्मा दिवसान् निनाय शून्यः ॥३२॥**

सरोवर में विलीन होनेवाली उस सौन्दर्य-शक्ति के द्वारा हृदय-मर्म में काम-वेदना से पीड़ित राजा अजयपाल विवश होकर अपने सब कर्तव्य भूल गये और शून्यमन से दिन बिताने लगे ॥३२॥

**धृतिमेतु धृतिः कथं नु तस्मिन् स्थितिरीतिः स्थितिमीहतां कथं वा ।**
**स्मृतिभूरतिभूमिमागतोऽयं मतिसंस्थां समतीत्य वर्तते स्म ॥३३॥**

जब चरम उत्कर्ष पर पहुँचे हुए कामदेव ने बुद्धि की सीमा को पार कर राजा के हृदय पर आधिपत्य जमा लिया तो फिर राजा कैसे धैर्य धारण करते अथवा शान्तचित्त होकर किस प्रकार स्थित होते ? ॥३३॥

**अथ कश्चन भागधेययोगान् मिलितः संसदि सिद्धपूरुषोऽस्य ।**
**विनयेन निवेदितो नृपेण प्रणिधाय प्रमना मनाग् बभाषे ॥३४॥**

सौभाग्य से एक दिन कोई सिद्धपुरुष राजसभा में आये। राजा के सविनय निवेदन करने पर उन्होंने ध्यान करके, प्रसन्न हो, कुछ इस प्रकार कहा ॥३४॥

**क्षितिनायक नाकलोकतोऽपि स्पृहणीयोज्वलधाम्नि नागलोके ।**
**भवतीष्टगुणः सुदामनाम्ना प्रथितो वासुकिवंशजो भुजङ्गः ॥३५॥**

राजन् ! स्वर्गलोक से भी सुन्दर और उज्वल नागलोक में एक गुणवान् और विख्यात, नाग-श्रेष्ठ वासुकि के वंशज, सुदामा नामक सर्प हैं ॥३५॥

**सुचरित्रपवित्रितादमुष्मादुदभूदन्वयभूषणं कुमारी ।**
**विदिता विजयाख्यया त्रिलोकीजयलक्ष्म्या इव मन्मथस्य मूर्तिः ॥३६॥**

सुन्दर चरित्रों से पवित्र सुदामा के, कुलभूषण, कामदेव की मूर्ति, तीनों लोकों की विजयलक्ष्मी के समान विजया नाम से विख्यात कन्या उत्पन्न हुई ॥३६॥

**इयमायतकौतुका भ्रमन्ती क्रमतस्ते कमलाकरादधस्तात् ।**
**विकचाम्बुजसौरभाद् व्युदस्य द्रुतमम्भांसि कदाचिदुन्ममज्ज ।।३७।।**

एक बार कौतुकवश घूमती हुई यह विजया विकसित कमलों से सुगन्धित आपके उद्यान-सरोवर के पानी को हटा कर बाहर निकली ।।३७।।

**मधुमासविशेषितामभिख्यामभिवीक्ष्योपवनस्य वामनेत्रा ।**
**नववञ्जुलवेदिकानिषण्णा चिरमासीद् विरलेतरप्रसङ्गा ।।३८।।**

वह वसन्त ऋतु से सुशोभित उद्यान की शोभा देखकर, प्रफुल्ल अशोक वृक्षों से रमणीय एक छोटे चबूतरे पर बैठ कर, अन्य बातों को भूल कर, उस उद्यान की शोभा में खो गई ।।३८।।

**विशिखैर्विषमायुधस्य तीक्ष्णैः कृतरन्ध्रे हृदि वेदिमध्यमायाः ।**
**विहरन् विपिनान्तरे त्वमस्या नयनोपान्तपथेन संप्रविष्टः ।।३९।।**

इसके बाद उद्यान में विहार करते हुए आप इस पतली कमर वाली विजया के कामदेव के तीखे बाणों से छेदे हुए हृदय में नेत्रों के मार्ग से प्रविष्ट हुए ।।३९।।

**परतन्त्रतया पितुः स्वभावादपि दुर्लभ्यतया कुलीनतायाः ।**
**अदयं मदनेन पीड्यमानाऽप्यतिचक्राम न शीलपद्धतिं सा ।।४०।।**

स्वभाव से ही पिता के अधीन होने के कारण तथा कुलीनता के दुर्लभ होने के कारण, कामदेव द्वारा निर्दयतया पीड़ित होने पर भी विजया ने शील-पथ का उल्लंघन नहीं किया ।।४०।।

**तदहः प्रभृति प्रतीत्य तस्याः किमपि स्वान्तजवैकृतं वयस्याः ।**
**अविलङ्घितगेहदेहलीकां परिवव्रुः परिवर्धमानशङ्काः ।।४१।।**

उस दिन से ही इसकी सखियों ने, इसके हृदय में मदन-विकार देखकर, घर की देहली के बाहर पैर न रखनेवाली इस विजया को सशंकित होकर घेरे रक्खा ।।४१।।

**अवशस्वतनुः प्रसूनकेतोर्विधियोगेन गता विधेयभावम् ।**
**बत पञ्जरगेव चक्रवाकी विकला जीवितुमेव जीवतीयम् ।।४२।।**

विधाता के विधान से कामदेव की दासी बन जाने पर इसका शरीर भी इसके वश में नहीं रहा। पिंजरे में बन्द चकवी के समान व्याकुल होकर यह केवल जीने के लिये ही जीवित रही ।।४२।।

**हृदये हृदयङ्गमं भवन्तं प्रतिसन्धाय रहो निमीलिताक्षी ।**
**स्वजनैः प्रतिबोधिता कथञ्चित् प्रतिपेदे परमुत्तरं प्रतीपम् ।।४३।।**

एकान्त में आँखें मूँदकर हृदय में प्रतिष्ठित आपका ही ध्यान करती हुई यह विजया, बन्धु-वर्ग द्वारा पूछे जाने पर, किसी प्रकार प्रतिकूल उत्तर देती रही ।।४३।।

**इति मन्मथ एव युक्तकारी युवयोर्निर्मितवान् मिथोऽनुरागम् ।**
**अपरं तु फलं मनोरथानां करसंस्थं किल केवलं विधातुः ।।४४।।**

आप दोनों के हृदयों में परस्पर अनुराग उत्पन्न करनेवाला कामदेव ही अब आप लोगों की भलाई करेगा। इच्छानुकूल फ़ल देना तो केवल विधाता के ही हाथ है ।।४४।।

**स्वमनीषितसाधनाय यत्नादवनीश प्रवणीकृतात्मचेताः।**
**भगवन्तमनन्तरायसिद्धि तमनन्तं त्वमनन्तरं भजेथाः ॥४५॥**

राजन्! अपने मन को सुदृढ़ करके, अपनी इच्छा की पूर्ति के लिये, आप अब शीघ्र ही प्रयत्न-पूर्वक, निर्विघ्न सिद्धि देने वाले अनन्त भगवान् की उपासना करें ॥४५॥

**कतिभिर्दिवसैर्जगन्निवासे वरिवस्याविधिना तव प्रसन्ने।**
**भुवनत्रयमप्यधीनमेतत् किमु पातालतलस्थितैकनारी ॥४६॥**

कुछ दिनों में ही आपकी सेवाविधि से जगन्निवास परमेश्वर के प्रसन्न हो जाने पर, तीनों लोक आपके अधीन हो सकते हैं फिर पाताल लोक में रहने वाली एक स्त्री की तो बात ही क्या? ॥४६॥

**गिरमित्थमुदीर्य सोपदेशां स दिशं स्वाभिमतां जगाम सिद्धः।**
**परमेशमुपास्य पार्थिवोऽपि प्रमनाः प्रार्थितलाभतो बभूव ॥४७॥**

इस प्रकार उपदेशयुक्त वचन कहकर वे सिद्ध पुरुष अपनी वांछित दिशा की ओर चले गये। राजा अजयपाल भी परमेश्वर की उपासना करके वांछित लाभ हो जाने से प्रसन्न हो गये ॥४७॥

**अथ यस्य जलाशयस्य तीरे तरुणीं तां नयनातिथीचकार।**
**परवानिव निर्ममज्ज दूरं विहरन्नम्भसि तस्य भूमिपालः ॥४८॥**

फिर उसी सरोवर के तीर पर जाकर, जहाँ उन्होंने उस तरुणी को देखा था और विवश से हो गये थे, राजा अजयपाल पानी में डुबकी लगाकर दूर तक घुस गये ॥४८॥

**क्षणतः पृथुपन्नगोत्तमाङ्गोल्लसदुत्तुङ्गमणीमयूखजालैः।**
**अपहस्तितपीवरान्धकारं फणिलोकं स विलोकयाञ्चकार ॥४९॥**

क्षण भर बाद ही उन्होंने, बड़े-बड़े सर्पों के मस्तकों में चमकने वाली विशाल मणियों के किरण-समूह से अन्धकार को दूर करनेवाले, नागलोक को देखा ॥४९॥

**वदनैर्मदनैकतानिदानैर्विलसत्पन्नगनागरीजनानाम्।**
**इतरेतरविस्मयाज्जगत्यां शशिनैकेन कृतार्थतां प्रपन्ने ॥५०॥**
**रजनीशदिनेशयोरयोगादविनिर्धारितवासरत्रियामे।**
**अनिशं सरसीरुहं सहासं मुदिता यत्र निरन्तरं रथाङ्गाः ॥५१॥**

उज्वल सर्प-युवतियों के कामदेव को अत्यन्त जाग्रत् करने वाले अनेक चन्द्रमुखों से कृतार्थ नागलोक मानों एक ही चन्द्रमा से कृतार्थ हो जाने वाले मर्त्यलोक की हँसी कर रहा हो। चन्द्रमा और सूर्य के न होने के कारण नागलोक में दिन और रात का पता ही नहीं चलता था। अतः वहाँ कमल सदैव खिले रहते थे और चकवा चकवी सदैव साथ-साथ रहने के कारण प्रसन्न रहते थे ॥५०–५१॥

---

(५०–५१) जगत्यां मर्त्यलोके एकेनैव शशिना प्रकाशितायां सत्यामितरेतरविस्मयात् विलसन्तीनां पन्नग-नागरीजनानां मदनैकतानिदानैश्चन्द्रोपमैरनेकैर्वदनैश्चन्द्राऽभावेऽपि कृतार्थतां प्रपन्ने नागलोके चन्द्रसूर्ययोरयोगा-दविनिर्धारितरात्रिदिवसविभागे कमलानि निरन्तरं विकसन्ति चक्रवाकमिथुनानि च वियोगाभावे निरन्तरं प्रसन्नानि सन्तीत्यर्थः।

**इतरत्र यदर्जितं तपोभिः सुकृतं विस्मृतकैतवप्रपञ्चैः ।**
**फलमस्य महार्हमश्नुवानाश्चिरकालं निवसन्ति यत्र जीवाः ॥५२॥**

अन्य लोकों में निश्छल तपस्या के द्वारा जो पुण्य प्राप्त किया था उसका महान् फल भोगने के लिए जीव चिरकाल तक नागलोक में निवास करते थे ॥५२॥

**न जराकृतवैकृतप्रसङ्गो न च विच्छेदविभीषिकावकाशः ।**
**मिथुनस्य मिथोऽनुरागबन्धो नितरां यत्र निरामयश्चकास्ति ॥५३॥**

न वहाँ वृद्धावस्था के कारण शरीर में विकृति होती थी और न वियोग के भीषण दुःख का अवकाश था। वहाँ दम्पति स्वस्थ परस्पर प्रेमानुराग से युक्त रहते थे ॥५३॥

**वनिताऽऽस्यनिशाकरैरसङ्ख्यैर्बहुभिर्भोगिफणामणीदिनेशैः ।**
**उपरिस्थितियोग्यतां दधानं किमिवाधोभुवनं बुधास्तदाहुः ॥५४॥**

सुन्दरियों के मुखरूपी अनेक चन्द्रों से और सर्पों के फणों पर स्थित मणिरूपी अनेक सूर्यों से शोभित नागलोक के सब लोकों से ऊपर होने पर भी, विद्वान् जाने क्यों उसे नीचे का लोक कहते हैं ! ॥५४॥

**स ददर्श दुरासदं समन्तात् किरणैस्तत्र शशाङ्ककोटिकल्पैः ।**
**हिमशैलमिव द्वितीयमुर्वीतलमाविश्य पुरो विरोचमानम् ॥५५॥**
**परितः खचिते प्रवालमुक्तामणिमाणिक्यमहेन्द्रनीलहारैः ।**
**स्थितमुज्ज्वलशातकुम्भपट्टे मृदुपट्टाम्बरसंस्तराभिरामे ॥५६॥**
**प्रगुणीकृतकान्तिमुन्मयूखैर्मणिभिः स्फारफणोपरि स्फुरद्भिः ।**
**जगतः प्रलयं विधातुमग्रे निजदेहे निहितैरिवांशुमद्भिः ॥५७॥**
**मुखमुज्ज्वलमेककुण्डलेन भ्रमदालोहितलोचनं दधानम् ।**
**अलिभिः कलिभिन्नसाहचर्यैः परिवेषायितमास्थितैः परीतम् ॥५८॥**
**स्फटिकाभवपुःप्रभापरीतं वसने नीलिमधामनी दधानम् ।**
**नवनीलसरोजकाननाभ्यामिव गीर्वाणतरङ्गिणीप्रवाहम् ॥५९॥**
**अवलोक्य तमद्भुताभिरामं स भृशं संभ्रमसंभृतः सभायाम् ।**
**प्रणिपत्य मुहुर्मुहुः फणीन्द्रं विनिबद्धाञ्जलि दूरतोऽवतस्थे ॥६०॥**

राजा अजयपाल ने अपने सामने ही स्थित सर्पों के राजराजेश्वर शेषनाग को देखा। वे करोड़ों चन्द्रमाओं की किरणों के समान प्रकाश की किरणों से जगमगा रहे थे और धरातल को फोड़ कर पाताल लोक में प्रकट द्वितीय हिमालय के समान शोभित हो रहे थे। वे कोमल रेशमी वस्त्रों की चादरों से सज्जित और चारों ओर मूँगे, मोती, हीरे, माणिक और नीलम के हारों से जड़े हुए देदीप्यमान सुवर्ण-सिंहासन पर विराजमान थे। अपने फैले हुए फणों पर जगमगाने

(५७) प्रलये द्वादशादित्या आविर्भवन्तीत्यागमः।

(५८) कलिना कलियुगेन भिन्नं विरहितं साहचर्यं सम्बन्धो येषां तैः। परिवेषायितमास्थितैः परिवेषं मंडलं प्राप्तैः।

वाले मणियों की किरणों के कारण उनका तेज कई गुना बढ़ गया था—वे मणि क्या थे मानों विश्व का भावी प्रलय करने के लिये उन्होंने अपने शरीर में सूर्य रख रक्खे थे (प्रलय के समय द्वादश आदित्य उदित होते हैं)। वे एक कुंडल लगा कर (कुंडलाकार होकर) विराजमान थे और उनका मुख घूमते हुए लाल नेत्रों से शोभित था। (उनके मुख के सौरभ से आकृष्ट) कलि-युग से कोई सम्पर्क न रखनेवाले भ्रमर उनके चारों ओर परिधि वना कर स्थित थे। शुभ्र संगमरमर के समान कान्तिवाले शरीर पर दो नीले वस्त्र पहने हुए वे ऐसे शोभित हो रहे थे मानों दोनों तटों पर विकसित नीलकमलों के उपवनों के बीच गंगा जी का शुभ्र प्रवाह हो। राजा अजयपाल उन अद्भुत सौन्दर्यवाले शेषनाग को सभा में विराजमान देखकर अत्यन्त चकित हो गये और बार बार उनको प्रणाम करके, हाथ जोड़, दूर खड़े हो गये ॥५५–६०॥

**अथ तं करुणाञ्चितेन किञ्चिन् नृपमालोक्य दृगञ्चलेन देवः ।**
**समचारयदीषदन्तिकस्थे भ्रुवमेकां भुजगे सुदामनाम्नि ॥६१॥**

भगवान् शेषनाग ने करुणा-युक्त दृष्टि से थोड़ी देर राजा को देखा और फिर समीपस्थ सुदामा नामक सर्प पर थोड़ी दृष्टि डाली ॥६१॥

**स तथेति तदिङ्गितं तदानीमभिनन्द्य द्रुतमेव काद्रवेयः ।**
**निजमालयमानयन् मनीषी बहुमानेन मनुष्यदेवमेतम् ॥६२॥**

वह बुद्धिमान् नराकार सर्प सुदामा, 'जो आज्ञा' कहकर शेषनाग के संकेत का अभिनन्दन कर, राजा अजयपाल को अत्यन्त सम्मानपूर्वक अपने घर ले गया ॥६२॥

**अतिथेः क्षितिलोकवासिनोऽस्य प्रभुणैव प्रथमं समर्थितस्य ।**
**उचितं रचयाञ्चकार यत्नान्नरनाथस्य समर्हणं सुदामा ॥६३॥**

शेषनाग द्वारा पहले ही समर्थन किये हुए इन मर्त्यलोकवासी अतिथि राजा का सुदामा ने यत्नपूर्वक समुचित सत्कार किया ॥ ६३॥

**अवतीर्णममुं कुतोऽपि लोकादपरं मन्मथमेव मन्यमानाः ।**
**परिवव्रुरवारिताभियोगा नगरस्था वरवर्णिनीसमूहाः ॥६४॥**

किसी दूसरे लोक से आये हुए इन अतिथि को दूसरा कामदेव समझकर नगर की सुन्द-रियों के समूहों ने इन्हें घेर लिया ॥६४॥

**विजया निजया ह्रिया निरुद्धा निजसौधस्य निषेव्य चन्द्रशालाम् ।**
**नयने विततीकृते कृशाङ्गी बत वातायनवर्त्मनि न्यधत्त ॥६५॥**

कृशांगी विजया अपनी स्वाभाविक लज्जा के कारण सम्मुख नहीं आकर अपने महल की चन्द्रशाला (ऊपरी भाग) में चली गई और वहाँ खिड़की की जालियों में अपने फैलाये हुए नेत्र रख कर राजा को देखने लगी ॥६५॥

**उपलभ्य च दर्शनं तदानीं तदसंभाव्यतरं मनुष्यभर्तुः ।**
**समरोपयदात्मजीविताशालतिकामुच्छ्वसिते पुनः स्वचित्ते ॥६६॥**

फिर राजा अजयपाल का अत्यन्त दुर्लभ दर्शन प्राप्त करके विजया ने आनन्द की गहरी साँस ली और मुरझाई हुई जीवन की आशा-लता का अपने प्रसन्न चित्त में आरोपण किया ॥६६॥

---

(६२) काद्रवेयः नराकृतिसर्पः ।

**अपनीतपरिश्रमं कदाचित् प्रणयेन प्रवणीकृतं फणी सः।**
**तमनुक्रमविक्लमादपृच्छत् कुलनामाश्रयदेशकाङ्क्षितानि ।।६७।।**

राजा की थकावट दूर हो जाने के बाद स्नेह से उन्हें आश्वस्त करके सुदामा ने, क्रम का ध्यान न रखकर, राजा से उनके कुल, नाम, आश्रय, देश और इच्छा के विषय में प्रश्न किये ।।६७।।

**मिलितः पृथिवीपतिं पृथिव्यां कृपया यः समशिक्षयद् विधेयम् ।**
**भुवनानि परिभ्रमन् स सिद्धः पुरुषः प्रादुरभूत् तयोः पुरस्तात् ।।६८।।**

वे सिद्ध पुरुष, जो राजा को पृथ्वी पर मिले थे और जिन्होंने राजा को इच्छा-पूर्ति का साधन बतलाया था, लोकों में घूमते-फिरते, उन दोनों के सामने आ खड़े हुए ।।६८।।

**अथ संभ्रमतः समुच्छ्रिताभ्यां कृतपादग्रहणस्तदा स ताभ्याम् ।**
**उपविश्य विशेषवित् सुदाम्ने नृपतेः कृत्स्नमुदाजहार वार्ताम् ।।६९।।**

तब उन दोनों ने जल्दी-जल्दी उठकर उन सिद्ध पुरुष को पैर छूकर प्रणाम किया। फिर बैठ कर, सब कुछ जानने वाले उन सिद्ध पुरुष ने सुदामा को राजा का सारा हाल सुनाया ।।६९।।

**अथ भगवदनुग्रहेण साक्षान्निरुपमरूपनिरूपणेन चास्य ।**
**गुणसमुदयमाकलय्य तस्मान् नरपतये तनयां ददौ सुदामा ।।७०।।**

इसके बाद भगवान् के अनुग्रह से, राजा अजयपाल का अनुपम रूप देखकर और उनके गुण-समूहों का विचार करके, सुदामा ने राजा को अपनी कन्या दे दी ।।७०।।

**स्मरस्य स्वारस्यात् समुचितसमारम्भकृतिनः**
**समानेन प्रेम्णा मिलितमनयोर्यौवनजुषोः ।**
**विधित्सुः स्तम्भादिव्यवसितविशेषेण घटयन्-**
**नुदारं दाम्पत्यं समगत समग्रेण यशसा ।।७१।।**

समुचित जोड़ी मिलाने में कुशल कामदेव के स्वारस्य के कारण परस्पर समान प्रेम रखने-वाले इन युवक-युवती का मेल कराने के इच्छुक सुदामा ने, विवाह-मण्डप आदि विशिष्ट सामग्री द्वारा इन दोनों का उदार दाम्पत्य रचकर, सम्पूर्ण यश प्राप्त किया ।।७१।।

**अथाभिवाद्य क्षितिपः स मान्यान् सुदामपुत्र्या समुदा समेतः ।**
**प्रसेदुषः पन्नगलोकभर्तुर्निदेशतः स्वां नगरीं जगाम ।।७२।।**

फिर उन राजा अजयपाल ने, प्रसन्न सुदामा-पुत्री विजया के साथ, मान्य लोगों का अभि-वादन किया और प्रसन्न होनेवाले नागलोक के राजराजेश्वर शेषनाग की आज्ञा लेकर वे स्त्री सहित अपनी नगरी को लौट आये ।।७२।।

**भुक्त्वाऽवनिं चिरमवञ्चितयाचकोऽयं यास्यन् वनान्तपदवीमथ यौवनान्ते ।**
**आसज्जयद् विजयिनीं क्षितिपाललक्ष्मीं पुत्रे गुणोदयगरीयसि गङ्गदेवे ।।७३।।**

याचकों को कभी विमुख न करने वाले राजा अजयपाल ने चिरकाल तक साम्राज्य का उप-भोग करके, वार्धक्य में वानप्रस्थ आश्रम को ग्रहण करने की इच्छा से, विजयशील साम्राज्य की लक्ष्मी को गुणों के उदय से श्रेष्ठ अपने पुत्र **गङ्गदेव** को सौंप दिया ।।७३।।

इति सुर्जनचरितमहाकाव्ये नवमः सर्गः ।

---

(७१) स्तम्भादिव्यवसितविशेषेण विवाहमण्डपादिसामग्रीविशेषेण। समगत संगतोऽभूत् ।

# दशमः सर्गः

**जज्ञे नृदेवादथ गङ्गदेवात् सोमेश्वरो नाम समः स्मरेण ।**
**राज्यं गुणप्राज्यमनुक्रमज्ञः क्रमागतं यः सुमुखः शशास ॥ १ ॥**

राजा गङ्गदेव के कामदेव के समान सुन्दर **सोमेश्वर** नामक पुत्र उत्पन्न हुए जिन्होंने क्रमानुसार कुलपरम्परागत समृद्ध राज्य का शासन किया ॥ १ ॥

**प्रलम्बबाहुः परिणाहिवक्षाः प्रलम्बवैरिप्रतिमल्लमूर्तिः ।**
**विहारभूर्मिविजयस्य भूमाविहाऽरविन्दप्रभवेन सृष्टः ॥ २ ॥**

सोमेश्वर आजानुवाहु, चौड़े वक्षःस्थल वाले, वलदेव के समान वीर थे। उनको ब्रह्मा जी ने मानों पृथ्वी पर विजय की विहार-भूमि के रूप में निर्मित किया था ॥ २ ॥

**स्वभावरम्येण मनोजमैत्रीं स्वभाबलेनाऽविरतं दधानम् ।**
**विभावयन्ति स्म निभालयन्त्यो विभावरीकान्तममुं सुमध्याः ॥ ३ ॥**

स्वभाव से ही सुन्दर अपनी आभा के कारण निरन्तर कामदेव से मित्रता रखनेवाले राजा सोमेश्वर को दखकर रमणियाँ उन्हें चन्द्रमा (सोम) ही समझती थीं ॥ ३ ॥

**शकुन्तलाऽऽभां गुणरूपशीलैः स कुन्तलानामधिपस्य पुत्रीम् ।**
**कर्पूरधारां जनलोचनानां कर्पूरदेवीमुदुवाह विद्वान् ॥ ४ ॥**

विद्वान् सोमेश्वर ने कुन्तल देश के राजा की कन्या कर्पूरदेवी का, जो गुण, रूप और शील में शकुन्तला के समान थी और लोगों के नेत्रों को कपूर की धारा के समान आनन्द देती थी, पाणिग्रहण किया ॥ ४ ॥

**लावण्यपूर्णामृतपुण्यवेणी मनोभुवो मूर्तिमती प्रशस्तिः ।**
**आसीत् कलानामधिदेवता सा विनोदभूमिश्च विदग्धतायाः ॥ ५ ॥**

वह कर्पूरदेवी मानों सौन्दर्य रूपी अमृत-जल की पवित्र नदी थी, कामदेव की मूर्तिमती प्रशंसा थी, विविध नृत्य गीत आदि कलाओं की स्वामिनी थी (कलाधर चन्द्रमा के समान सुन्दर थी), और विदग्धता की विनोदभूमि थी ॥ ५ ॥

**चिरं त्रिलोकीजयजातभूरिश्रमेण विश्रामनिमित्तमेषा ।**
**सारं समाकृष्य निजायुधानां स्मरेण नूनं निरमायि शक्तिः ॥ ६ ॥**

तीनों लोकों को जीतने के कारण उत्पन्न भारी परिश्रम से थक कर विश्राम लेने के लिये मानों कामदेव ने अपने पुष्पायुधों का सार निकालकर कर्पूरदेवी रूपी शक्ति का निर्माण किया था ॥ ६ ॥

---

(२) प्रलम्बवैरिः बलदेवः ।

**असूयताऽसौ सुतनुस्तनूजौ जयप्रभावाविव विक्रमर्द्धिः ।**
**नृपस्तयोः पूर्वजमाह पृथ्वीराजं स माणिक्यमथानुजातम् ।। ७ ।।**

जैसे पराक्रमशक्ति विजय और प्रभाव को उत्पन्न करती है वैसे ही सुन्दरी कर्पूरदेवी ने दो पुत्रों को जन्म दिया जिनमें बड़े का नाम, राजा सोमेश्वर ने, पृथ्वीराज और छोटे का नाम माणिक्यराज रक्खा ।। ७ ।।

**गुणैर्महार्घ्यैर्महसा यशोभिरन्योन्यसाधर्म्यमुभौ दधानौ ।**
**सौभ्रात्रसम्पादितशुद्धचित्तावैक्यं दधाते स्म यथाश्विनेयौ ।। ८ ।।**

पृथ्वीराज और माणिक्यराज दोनों भाई बहुमूल्य गुणों में, तेज में और यश में एक दूसरे के समान थे और दोनों, भ्रातृप्रेम से विशुद्ध अन्तःकरण वाले होने के कारण, अश्विनीकुमारों की भाँति , एक से लगते थे ।। ८ ।।

**विभज्य राज्यं भुजवीर्यभाजौ पित्रा प्रणीतं प्रतिपालयन्तौ ।**
**निशाकरार्काविव न स्वकीयमतीयतुस्तौ समयं कथञ्चित् ।। ९ ।।**

श्रेष्ठ बाहुबल वाले उन दोनों भाइयों ने पिता के दिये हुए राज्य को आपस में बाँट कर शासन किया और सूर्य तथा चन्द्र के समान कभी एक दूसरे के समय का उल्लंघन नहीं किया ।। ९ ।।

**पित्रार्पितायामवितृप्तचेताः सम्पद्यथ प्राप्तगुणप्रकर्षः ।**
**ज्यायांस्तयोः सन्ततमात्मतेजःसमृद्धिसाध्यां विभुतामियेष ।।१०।।**

बड़े भाई **पृथ्वीराज** ने, अपने गुणप्रकर्ष के कारण, पिता के दिये हुए साम्राज्य से सन्तुष्ट न होकर, अपने स्वयं के पराक्रम से अधिक साम्राज्य प्राप्त किया ।।१०।।

**पुरो बहिः क्वापि विहारभूमौ वसन्तमेनं प्रतिहारपत्नी ।**
**समागतां काञ्चन कान्यकुब्जात् प्रावेदयत् पार्श्वचरीं प्रगल्भाम् ।।११।।**

एक दिन जब पृथ्वीराज अपने नगर के बाहर उद्यानभूमि में विहार कर रहे थे तब प्रतिहारी ने निवेदन किया कि कान्यकुब्ज (कन्नोज) देश से आई हुई एक चतुर महिला मिलना चाहती है ।।११।।

**तदिङ्गितेनाधिगतप्रवेशा विधाय शश्वन् नृपतौ प्रणामम् ।**
**पृष्टा समाचष्ट समाहिताऽसौ हितार्थिनी भर्तुरथात्मजायाः ।।१२।।**

राजा के संकेत से अनुमति पाकर प्रतिहारी ने उस महिला को भीतर प्रविष्ट किया । उसने राजा को प्रणाम करके, पूछे जाने पर, सावधानी से, अपने स्वामी की पुत्री के हित के लिये इस प्रकार निवेदन किया ।।१२।।

**यमश्ववारा नवलक्षसङ्ख्याः सङ्ख्यास्वसङ्ख्येयगुणं भजन्ते ।**
**कन्या ततोऽजायत कान्यकुब्जक्षितीश्वरात् कान्तिमतीति नाम्ना ।।१३।।**

जिनकी संख्या की कोई गणना नहीं ऐसे गुणों से युक्त और नौ लाख घुड़सवारों की सेना के स्वामी कान्यकुब्ज देश के राजा की कान्तिमती नामक कन्या है ।।१३।।

**सुवर्णशैलात् पृथिवीविभागं पयांसि पीयूषपयोधिमध्यात् ।**
**तेजः शरच्छीतमरीचिबिम्बाच्छ्रीखण्डशैलानिलतस्तदंशम् ।।१४।।**
**आकाशमाकृष्य पुनः स्वकीयतूणीररन्ध्रान् निजनैपुणेन ।**
**विनिर्ममे काचन सृष्टिरन्या मन्ये मनोजेन मनोहरा सा ।।१५।।**

उस कान्तिमती को मानों कामदेव ने, स्वर्णमय सुमेरु पर्वत से पृथ्वी का भाग लेकर, अमृत-समुद्र से जल का भाग लेकर, शरद् ऋतु के पूर्ण चन्द्रविम्ब से तेज का अंश लेकर, (चन्दनों से सुशोभित) मलयगिरि के पवन से वायु का अंश लेकर और अपने तरकस के भीतर से आकाश का अंश निकालकर इन अपूर्व पंच महाभूतों से, अपनी निपुणता को सिद्ध करने के लिए एक अद्वितीय सुन्दरी के रूप में रचा है ।।१४–१५।।

**निर्माय तां मन्मथजैत्रसिद्धिमाकृष्टसारा विधिना पदार्थाः ।**
**ये न्यक्कृताः किन्नु त एव जाताः सुधासुधांशूत्पलपङ्कजाद्याः ।।१६।।**

अथवा, स्वयं ब्रह्मा ने कामदेव की विजयसिद्धि के रूप में उसका निर्माण विविध पदार्थों का सार निकाल कर किया और जिन-जिन पदार्थों का सार निकाल कर उन्हें फेंक दिया शायद वे पदार्थ ही लोक में अमृत, चन्द्रमा, कुमुद, कमल इत्यादि नामों से प्रसिद्ध हुये ।।१६।।

**सुधामयः कोपि भवेत् पयोधिर्मथ्नाति तञ्चेत् स्वयमेव कामः ।**
**जायेत चेत् काचन तत्र लक्ष्मीः समानतामञ्चति सैव तस्याः ।।१७।।**

यदि कोई अमृत का समुद्र हो और यदि स्वयं कामदेव उसका मन्थन करे और फिर उसमें से कोई लक्ष्मी प्रकट हो तो वह लक्ष्मी ही कान्तिमती की कुछ समानता कर सकती है ।।१७।।

**एकैककर्मण्युचिते समर्थाः संमोहना ये मदनस्य बाणाः ।**
**इयन्तु तस्य स्फुटयत्यजस्रं कर्माद्भुतं मार्गणपञ्चकस्य ।।१८।।**

कामदेव के पाँचों वाण अलग-अलग अपने एक-एक संमोहन कर्म में ही समर्थ हैं, किन्तु यह कान्तिमती तो कामदेव के पाँचों वाणों की एक साथ पाँचों संमोहन कर्मों में निपुण अद्भुत-शक्ति है ।।१८।।

**अभ्याशमभ्यासवशाद् गतायाः पितुः कदाचित् तनुमध्यमायाः ।**
**कर्णान्तरस्या विविशुस्त्वदीया गुणोच्चयाश्चारणगीयमानाः ।।१९।।**

अभ्यासवश एक दिन जब कान्तिमती अपने पिता के पास वैठी हुई थी तव चारणों द्वारा गाए गए आपके गुणसमूहों ने इसके कानों में प्रवेश किया ।।१९।।

**सा वर्तमाना तरुणिम्नि नव्ये कामेव धत्तेऽङ्कुरितामवस्थाम् ।**
**येते निगूढान्यपि मानसानि निगूहितुं सन्ततमोहितानि ।।२०।।**

कान्तिमती नई तरुणावस्था (नवयौवन) में स्थित होकर एक अद्वितीय (कामदेव द्वारा) अंकुरित अवस्था को धारण कर रही है। वह (लज्जावश) मन में छिपी हुई इच्छाओं को भी बार बार छिपाने का यत्न करती है ।।२०।।

**निजेन्द्रियेभ्योऽपि निगूह्यमानं गाहेत कोऽन्तःकरणं कुमार्याः ।**
**अनन्यजन्माऽयमनन्यवृत्तिरुपायतो यन् मतिमानुपास्ते ॥२१॥**

स्वयं अपनी ही इन्द्रियों से भी छिपाये हुए (भावों वाले) कुमारी के अन्तःकरण को कौन जान सकता है ? स्वयं आत्मभू बुद्धिमान् कामदेव, शरीर-रहित होने पर भी, अन्य सब कार्य छोड़ कर बड़े यत्नपूर्वक, कुमारी के अन्तःकरण में प्रवेश पाने के लिये, उपासना किया करता है ॥२१॥

**कलाविलासेऽप्यलसं कृशाङ्ग्याः ससञ्ज नालञ्जनरञ्जनाय ।**
**क्रीडाविनोदेषु विनोदितायाः सखीसमाजे न ससज्ज चेतः ॥२२॥**

कृशांगी कान्तिमती का चित्त, कलाविलास में भी आलस धारण करके, लोगों को प्रसन्न न कर सका और सखीसमाज में भी, क्रीडा और विनोद से सखियों द्वारा कान्तिमती को प्रसन्न करने का प्रयत्न करने पर भी, इसका चित्त प्रसन्न न हो सका ॥२२॥

**दिने दिने दूनधियो नताङ्ग्याः प्रपद्यमानं परिपाण्डिमानम् ।**
**सुवर्णपङ्केरुहकान्तिवक्त्रं बभूव दुर्वर्णसरोजवर्णम् ॥२३॥**

(विरह में) दुःखित मन वाली कृशांगी का दिन-दिन पीला पड़ने वाला मुख, जो पहले खिले हुए स्वर्ण-कमल के समान था, अव मुरझाये हुये पीले कमल के समान हो गया है ॥२३॥

**प्रतिक्षणं क्षामतरीभवन्त्या भवत्कृते पाण्डरदीर्घमस्याः ।**
**चकर्ष कृष्णप्रतिपन्मृगाङ्कबिम्बस्य कान्ति मुखमुत्पलाक्ष्याः ॥२४॥**

आपके विरह में प्रतिक्षण दुवली होने वाली कमलनयनी कान्तिमती का पीला और लटका हुआ मुख, कृष्णपक्ष की प्रतिपदा के (दिन-दिन ह्रास होने वाले) चन्द्रबिम्व के समान लग रहा है ॥२४॥

**जानौ कफोणि शिथिले कपोलं कराम्बुजन्मन्यथ नासिकायाम् ।**
**निधाय दृष्टिं त्वयि चित्तवृत्तिं निनाय दीना कतिचिद् दिनानि ॥२५॥**

घुटने पर कुहनी, ढीले और दुर्बल कर-कमल पर गाल, नाक पर दृष्टि और आप में मन रख कर बिचारी कान्तिमती किसी तरह कुछ दिन निकाल रही है ॥२५॥

**अथैकदा कन्दलितानुरागा यामे तुरीये किल यामवत्याः ।**
**स्वप्नान्तरे कञ्चन पञ्चबाणसमानकान्तिं सुमुखी ददर्श ॥२६॥**

एक बार सुमुखी कान्तिमती ने, अनुराग बढ़ जाने के कारण, रात के तीसरे पहर में स्वप्न में कामदेव के समान सुन्दर किसी पुरुष को (आपको) देखा ॥२६॥

**ततस्तदीयाननपूर्णचन्द्रविलोकनान् मानसमिन्दुमुख्याः ।**
**विमुक्तमर्यादमभूत् तरङ्गैर्गभीरमप्यम्बु यथाम्बुराशेः ॥२७॥**

तब आपके मुखरूपी पूर्णचन्द्र के दर्शन करने से चन्द्रमुखी कान्तिमती का मानसरोवर के समान गंभीर मन, पूर्णचन्द्र के दर्शन करने से ज्वार आए हुए समुद्र के गंभीर जल के समान, बड़ी-बड़ी तरंगों से उद्वेलित होकर मर्यादा छोड़ बैठा ॥२७॥

---

(२१) अनन्यजन्मा कामः ।

**कुण्ठं विवेकाङ्कुशमाशु कृत्वा व्रीडाख्यवारीं विघटय्य दूरात् ।**
**छित्वा तदन्तःस्थितिशृङ्खलाञ्च बभ्राम कन्दर्पमदद्विपेन्द्रः ॥२८॥**

कान्तिमती का मदनमद-रूपी मदोत्कट हाथी, विवेक-रूपी अंकुश को कुंठित समझ कर (कुछ न गिन कर), तथा शीघ्र लज्जा-रूपी बन्धन-स्थान को दूर से ही तोड़-फोड़ कर और पैरों में बँधी हुई शान्तभाव-रूपी लोह-शृङ्खला को आमल उखाड़ कर, निरंकुश और उच्छृंखल घूमने लगा ॥२८॥

**मृगीदृशा संसदि सङ्गिनीनां हासप्रसङ्गे विहितं तया यत् ।**
**शुष्काधरे शीर्णरुचिस्मितं तन् नालं कपोलस्य विकासनाय ॥१९॥**

सखी समाज में, हँसी मजाक के प्रसंग में, मृगनयनी कान्तिमती ने अपने सूखे होठों पर जो दिखावटी मुसकान लाने का यत्न किया, उस मुसकान से उसका गाल भी विकसित न हो पाया ॥२९॥

**कुशेशयाक्षी निशि निःशलाके यदश्रुपूरं विजहौ निषण्णा ।**
**उच्छूनशोणेक्षणमज्जनेन स्नातं तदावेदयदाननाब्जम् ॥३०॥**

कमल-नयनी कान्तिमती रात में एकान्त स्थान में बैठ कर जो आँसुओं की धारा बहाती है उसे सूजी हुई लाल आँखों के जल में स्नान करने वाला मुख-कमल बतलाता है ॥३०॥

**न्यस्तं स्तनान्ते तनुमध्यमाया बलात् सखीभिर्नलिनीपलाशम् ।**
**तदूष्मणा तत्क्षणमेव शीर्णं निःश्वासझंझापवनैर्विकीर्णम् ॥३१॥**

पतली कमर वाली कान्तिमती के स्तनों के बीच में सखियों ने जो कमल-पत्र रक्खा वह तत्काल विरह-ताप से सूख गया और गहरी साँसों के वेग से टुकड़े-टुकड़े होकर बिखर गया ॥३१॥

**मृणालजालं यदि नाम तीव्रतापेन नीयेत न नीलिमानम् ।**
**निश्चीयतां निश्चलदेहवल्ली कथं नु तस्मिन् मिलिता मृगाक्ष्याः ॥३२॥**

कमलपत्रों की सेज यदि विरह के उग्र ताप से मुरझा कर नीली न पड़ जाय तो इसका निश्चय कैसे हो कि मृगनयनी कान्तिमती की निश्चल देह-लता उस पर सोई थी ? ॥३२॥

**निर्बन्धपृष्टाऽपि न सन्दधाति प्रश्नानुरूपोत्तरमातुरा सा ।**
**बाष्पाम्बुरुद्धार्धपदं कदाचित् स्वयं गृणीते तव नाम तन्वी ॥३३॥**

प्रेमपूर्वक कुशल प्रश्न पूछे जाने पर भी व्याकुल कान्तिमती प्रश्नानुकूल उत्तर नहीं दे पाती। दुबले-पतले शरीरवाली वह कभी-कभी आपका नाम लेने का प्रयत्न करती है, किन्तु आँसुओं के जल से कंठ रुँध जाने के कारण आधा नाम ही मुख से निकल पाता है ॥३३॥

**ऋज्वी यदीन्दोश्चरमा कला स्याद् यद्युष्णभावं च भजेदभीक्ष्णम् ।**
**तदा मनोजाग्नितनूकृतायास्तनोरमुष्यास्तुलनामुपैति ॥३४॥**

यदि चन्द्रमा की अन्तिम कला सरल (सीधी) हो और सदा उष्ण बनी रहे तो वह कामाग्नि से तप्त और क्षीण कान्तिमती के शरीर की समानता कर सकती है ॥३४॥

---

(२८) वारी गजबन्धनस्थानम् ।

(३०) रात्रौ विजने निषण्णया सरोजलोचनया यद् रुदितं तस्मात् तदीय मुखकमलं शोथं प्राप्तयोर्लोहितयोर्नेत्रयोरश्रुप्रवाहे आत्मानं कृतस्नानं न्यवेदयत् ।

**सर्वेन्द्रियाणि प्रतिपत्तिशून्यान्यस्या दधत्याः सततं वयस्याः ।**
**विलोचनोन्मीलनमीलनाभ्यां प्रबोधमूर्च्छे परमुन्नयन्ति ।।३५।।**

कान्तिमती की सब इन्द्रियाँ अपने-अपने विषयों को ग्रहण करने में निश्चेष्ट हैं। इसकी सखियाँ केवल इसके नेत्रों के खुलने और बन्द होने से जागरण और मूर्छा का अनुमान लगाती हैं ।।३५।।

**अवाप्तदाहस्तनुते स्म दाहं मूर्च्छाङ्गतोऽसौ व्यतरच्च मूर्च्छाम् ।**
**मन्ये मनोभूरतनुत्वमस्यै निजं पदं दित्सति सेव्यमानः ।।३६।।**

इसकी सेवा से प्रसन्न होकर कामदेव अपनी वस्तुएँ इसे दे रहा है——कामदेव को शिवजी के तृतीय नेत्र से दाह मिला था, अतः वह कान्तिमती को (पूर्वराग) दाह दे रहा है। उसे (दाह के बाद) मूर्च्छा मिली थी, अतः वह इसे भी मूर्च्छा दे रहा है। कामदेव स्वयं शरीर-रहित है, अतः अत्यन्त प्रसन्न होकर अब वह कान्तिमती को भी अपने समान ही शरीर-रहित बनाना चाहता है ।।३६।।

**अत्रान्तरेऽरुन्तुदमन्यदेव दैवेन वैमुख्यभृतोपनीतम् ।**
**जामातरं प्रार्थयते प्रतीपो राजन्यमन्यं जनको यदस्याः ।।३७।।**

इसी बीच में विमुख विधाता ने एक मर्म-स्पर्शी घटना खड़ी कर दी है। वह यह कि कान्तिमती के पिता, इसके शत्रु बनकर, एक दूसरे राजा को अपना जामाता बनाना चाहते हैं ।।३७।।

**अथातिरेकस्रवदस्रुवर्षैराप्लावयन्ती वपुरुष्णमुष्णैः ।**
**प्रत्येकमाभाष्य सखीः कथञ्चिच्छनैर्बभाषे करुणं कुमारी ।।३८।।**

तब दुःख के आवेग से बहनेवाले गरम आँसुओं की वृष्टि से अपने गरम शरीर को सींचती हुई कान्तिमती प्रत्येक सखी को निर्दिष्ट कर किसी प्रकार धीरे-धीरे करुणस्वर से बोली ।।३८।।

**अहो महामोहजविभ्रमोऽयं व्योमस्थितेन्दोः परिशीलनाय ।**
**रसातलावस्थितपञ्जरान्तःस्थिता चकोरी कुरुते यदाशाम् ।।३९।।**

अहो ! पृथ्वी पर स्थित पिंजरे में बन्द चकोरी की आकाश में स्थित चन्द्रमा को प्राप्त करने की आशा कितने बड़े अज्ञान से उत्पन्न मूर्खता की बात है ! ।।३९।।

**असंस्तुते पुंसि नराधिनाथे हासाय सन्देशवचो वधूनाम् ।**
**तत्रापि पाणिग्रहणाय कन्यावचोविकाशोऽपि विडम्बनाय ।।४०।।**

बिना जान-पहिचान के पुरुष के लिये, और विशेष कर राजा के लिये, किसी कुमारी का प्रणय-सन्देश वचन हास्यास्पद है। फिर कन्या का अपनी ओर से विवाह का प्रस्ताव तो और भी विडम्बनापूर्ण है ।।४०।।

**अतीव दुष्प्राप्यमनोरथेऽस्मिन्नाशाङ्कुरस्यापि न मेऽवकाशः ।**
**अतः परं पञ्चशरस्य पञ्चसहस्रसङ्ख्या विशिखाः पतन्तु ।।४१।।**

मेरे अत्यन्त दुष्प्राप्य इस मनोरथ में आशा के अंकुर उगने का कोई अवकाश नहीं है। अतः अब भले ही कामदेव के पाँच क्या पाँच हजार बाण भी मुझ पर पड़ें तो भी कोई चिन्ता नहीं ।।४१।।

**इति ब्रुवाणां वरवर्णिनीं तां हृदा विनिर्णीय सखी जगाद ।**
**त्वय्येव तावद् विशिनष्टि शोभां मनोऽनुरूपो हि मनोरथस्ते ॥४२॥**

इस प्रकार कहने वाली सुन्दरी कान्तिमती से सखी ने, मन में विचार कर, कहा कि तुम्हारे मन के अनुकूल यह मनोरथ तुम्हीं को शोभा देता है ॥४२॥

**लावण्यतारुण्यगुणाभिजात्यैरनूनता ते नियतं नताङ्गि ।**
**जागर्ति योग्यद्वययोजनायां विधे विदग्धाभिमता च वृत्तिः ॥४३॥**

नतांगि ! तुम्हारे सौन्दर्य, यौवन, गुण, और कुल आदि में कोई कमी नहीं है और विधाता की चातुर्य से शोभित मनोवृत्ति दो योग्य युवक-युवती को मिलाने में प्रसिद्ध है ही ॥४३॥

**तद् धैर्यवृत्या विनिरुध्य बाधां कालं कियन्तं प्रतिपालय त्वम् ।**
**यावद् विदध्यामहमात्मबुध्या कमप्युपायं कमलायताक्षि ॥४४॥**

कमल-नयनि ! कुछ समय तक व्यथा को रोक कर धैर्य धारण करो, तब तक अपनी बुद्धि के अनुसार मैं भी कुछ न कुछ उपाय निकाल लूँगी ॥४४॥

**इत्थं समाश्वास्य सखीं सखेदं समीक्ष्य मां साश्रुमुखी जगाद ।**
**शाकम्भरीं प्राप्य पुरं समस्तं पृथ्वीपतेस्तस्य निवेदयेति ॥४५॥**

अपनी सखी कान्तिमती को इस प्रकार आश्वासन देने पर, मुझे खिन्न देख कर, रोते हुये उसने मुझसे कहा कि शाकंभरी नगरी जाकर पृथ्वीराज के समक्ष सारा हाल निवेदन करो ॥४५॥

**तदेतदावेदितमग्रतस्ते यथानुभूतं ननु भूपतीश ।**
**व्रजाम्यहं शाधि मम क्षमस्व वैयात्यमेतत् परतन्त्रवृत्तेः ॥४६॥**

राजन् ! मैंने आपके आगे सारा हाल निवेदन कर दिया है। अब मैं जाती हूँ, मुझे आज्ञा दें, और परतन्त्र होने के कारण जो कुछ मुझसे यह धृष्टता हुई उसे क्षमा करें ॥४६॥

**एवं निवेद्याऽऽनतकन्धरा सा धराभृता भूमिभुजो भुजिष्या ।**
**प्रमोदमञ्जुस्मितकौमुदीभिर्मुखेन्दुमुद्भासयता बभाषे ॥४७॥**

इस प्रकार निवेदन करके नतमस्तक खड़ी हुई कान्यकुब्जेश्वर की परिचारिका से राजा पृथ्वीराज ने, हर्ष स मनोहर मुसकान रूपी चाँदनी से अपने मुख-चन्द्र को प्रकाशित करते हुये, यह कहा ॥४७॥

**संसारकासारसरोरुहिण्यास्तस्याः स्मरस्याप्यधिदेवतायाः ।**
**पीयूषधारामधुरा गुणौघा मया मुहुः श्रोत्रपुटेन पीताः ॥४८॥**

संसार-रूपी सरोवर की सरोजिनी और कामदेव की भी स्वामिनी उस कान्तिमती के अमृत की धारा के समान मधुर गुण-समूहों को मैंने बार बार अपने कानों-रूपी दोनों से पिया है ॥४८॥

**जानीहि पाणिस्थितमेव तावन् महन् मनोराज्यफलं मृगाक्ष्याः ।**
**एवं यदि त्वत्कथनानुरूपस्तस्यामपि स्यादनुरागबन्धः ॥४९॥**

उस मृग-नयनी के महान् मनोरथ के फल को हथेली पर रक्खा हुआ ही समझो, यदि, जैसा तुम कह रही हो, उसके हृदय में भी मेरे प्रति इतना अनुराग है ॥४९॥

**कमप्युपायं समुपेत्य कुर्यां तापापनोदं मदिरेक्षणायाः ।**
**विश्राणयत्यन्यवराय तां चेत् पिता तदीयो मयि बद्धवैरः ।।५०।।**

मैं शीघ्र ही कोई न कोई उपाय ढूंढ़ कर उस मादकनयनी के सन्ताप को दूर करूँगा । यदि उसके पिता किसी अन्य वर को उसे देना चाहते हैं तो निश्चय ही वे मेरे शत्रु हैं ।।५०।।

**द्रष्टुं चिरादस्ति कुतूहलं मे तत् कान्यकुब्जं नगरं गरीयः ।**
**तत्साधु जातं सुकृतेन पुंसां कार्यद्वयं साधयति क्रियैका ।।५१।।**

उस बड़े सम्पन्न कान्यकुब्ज नगर को देखने की मेरी भी बहुत दिनों से इच्छा है । मनुष्यों के पुण्य के फल से ही एक क्रिया से दो कार्य सिद्ध होते हैं ।।५१।।

**तद् गच्छ संवर्धय सावधाना कल्याणि कान्तां मम वाचिकेन ।**
**इतीरयित्वा त्वरितं कृतज्ञः कृतप्रसादो विससर्ज दूतीम् ।।५२।।**

कल्याणि ! अब तुम जाओ और सावधानी के साथ मेरे वचनों से प्रिया को सन्तुष्ट करो । कुशल पृथ्वीराज ने यह कहकर और अपने सत्कार से दूती को प्रसन्न करके रवाना किया ।।५२।।

**स वन्दिनं नन्दितबन्धुवर्गः कृत्वा प्रधानं प्रधनाग्रयायी ।**
**प्रच्छन्नवेशोऽप्यविशत् प्रसन्नकान्तिः क्षितीशः किल कान्यकुब्जम् ।।५३।।**

बन्धु-वर्ग को आनन्द देनेवाले तथा युद्ध में आगे रहने वाले और छद्मवेश धारण करने पर भी प्रसन्न आभावाले उन राजा पृथ्वीराज ने, चारण को आगे करके, कान्यकुब्ज देश में प्रवेश किया ।।५३।।

**तस्याः पितुः साहसमाशयञ्च प्रवेशनिर्याणपथञ्च पुर्याः ।**
**पृथ्वीपतिः प्रेक्षितुमात्मवेशं विहाय वैतालिकमन्वियाय ।।५४।।**

कान्तिमती के पिता के साहस और अभिप्राय को जानने की इच्छा से एवं कान्यकुब्ज नगरी के भीतर और बाहर जाने वाले मार्गों को देख लेने की इच्छा से पृथ्वीराज अपना वेश बदलकर चारण के पीछे पीछे चले ।।५४।।

**शतेन सार्धेन महःसमृद्धैः सामन्तमुख्यैः सुमुखैः समेतः ।**
**पताकिनीं पूर्णपरिच्छदञ्च पुर्यां परित्यज्य नृपः प्रतस्थे ।।५५।।**

सेना और अस्त्र शस्त्रों को नगरी में ही छोड़ कर पृथ्वीराज केवल डेढ़ सौ सुन्दर और तेजस्वी सामन्तश्रेष्ठों को साथ लेकर चले ।।५५।।

**व्यपेतभूपालपरिच्छदोऽपि स लोभनीयोऽजनि लोचनानाम् ।**
**विनापि जाम्बूनदमुद्रणेन मनोहरत्येव मणिर्महार्हः ।।५६।।**

राजसीय वेशभूषा छोड़ देने पर भी पृथ्वीराज लोगों के नेत्रों का आकर्षण बने रहे । बहुमूल्य मणि, सोने में जड़ा हुआ न होने पर भी, मनोहर लगता ही है ।।५६।।

**व्रजेद् यदाऽयं जयचन्द्रगोष्ठीं तदाऽभवत् पार्श्वचरोऽपरस्य ।**
**स्थितः स्वकीये शिविरे स एव पृथ्वीपतिस्तावदभूदधृष्यः ।।५७।।**

जब वे राजा जयचन्द्र की सभा में जाते थे तो किसी दूसरे के अनुचर बन जाते थे और जब अपने शिविर में रहते थे तो वही दुर्धर्ष राजा पृथ्वीराज थे ।।५७।।

**पुरं समन्तादकुतोभयोऽसौ कुतूहलीकृत्य विनिर्णयाय।**
**बभ्राम तद्गोपुरतोरणाट्टशृङ्गारकाक्रीडकृतोपशोभाम् ॥५८॥**

कुतूहलवश सब कुछ अच्छी तरह देख लेने के लिये वे पृथ्वीराज, नगर के दरवाजे, महलों के बाहरी फाटक, बड़े-बड़े महल, चौराहे और उद्यान आदि से शोभित कान्यकुब्ज नगरी में घूमते रहते थे ॥५८॥

**स रोधसा सञ्चरते स्म नित्यं सुरापगायास्तुरगद्वितीयः।**
**वीचीपरीरम्भणमेदुरेण संवीज्यमानो वनमारुतेन ॥५९॥**

वे अकेले ही घोड़े पर सवार होकर प्रतिदिन गंगा के तट पर चक्कर लगाया करते थे और गंगा की लहरों के आलिंगन से गीला, वन का पवन उनका श्रम दूर किया करता था ॥५९॥

**कुमुद्वतीकामुककान्तिपूरैर्धौतान्धकारासु निशीथिनीषु।**
**कदाचिदस्याः पुलिनं जगाम तुरङ्गमं पाययितुं पयांसि ॥६०॥**

उन रातों में जिनका अन्धकार कुमुदिनी के प्रिय चन्द्रमा की चाँदनी की धाराओं से धो दिया गया था, एक बार पृथ्वीराज अपने घोड़े को गंगातट पर जल पिलाने गये ॥६०॥

**निमग्नवक्त्रं पिबतो हयस्य चलाचलस्फोणितफेनगन्धात्।**
**आपेतुरत्याकुलमुत्पलाक्षीचक्षुर्विलोलाः सहसा शफर्यः ॥६१॥**

जब घोड़ा नीची गर्दन करके जल पी रहा था तो उसके मुँह चलाने और फू-फू करने से जो झाग निकले उनकी गन्ध से आकृष्ट होकर कमल-नयनी सुन्दरियों के नेत्रों के समान चंचल मछलियाँ सहसा दौड़-दौड़ कर आने लगीं ॥६१॥

**विलोक्य ताः कौतुकमग्नचेताश्चिक्षेप मुक्ताः क्षितिपः स्वकण्ठात्।**
**लाजाशया तत्र जलाशयान्तःस्थिताः समुत्पेतुरनेकशस्ताः ॥६२॥**

उनको देख कर कुतूहल में मग्न चित्त वाले पृथ्वीराज ने अपने कंठ से मोतियों का हार निकाल कर उसके मोती थोड़े-थोड़े करके जल में फेंकना शुरु किया और जल के अन्दर स्थित वे मछलियाँ भी उन मोतियों को लावा समझ कर एक के ऊपर एक टूट पड़ीं ॥६२॥

**क्रीडन्तमेवं तुरगद्वितीयं विलोकयामास विशालसत्वम्।**
**तं कान्यकुब्जेश्वरकन्यका सा प्रासादवातायनगा सखीभिः ॥६३॥**

घोड़े के उस पराक्रमी साथी को इस प्रकार खेल करते हुए, महल की खिड़की से, सखियों के साथ कान्यकुब्जेश्वर की कन्या ने देखा ॥६३॥

**रूपेण गम्भीरमनोरमेण लोकोत्तरेणापि विचेष्टितेन।**
**पर्याकुला विस्मयकौतुकाभ्यां स्वैरं बभाषे क्षितिपात्मजा सा ॥६४॥**

उसके गंभीर और सुन्दर रूप को तथा लोकोत्तर क्रीड़ा को देखकर कान्तिमती विस्मय और कुतूहल से भर गई और स्वच्छन्द होकर बोली ॥६४॥

**कोऽयं कलानाथ इवामृतानि किरन् दृशोः कन्दलयन्ननङ्गम् ।**
**एकोऽप्यनेकावृतवत् प्रभावाद् व्यपेतशङ्को विजरीहरीति ॥६५॥**

चन्द्रमा के समान अमृत की वर्षा करने वाले, नेत्रों में कामदेव को जगाने वाले, अकेले होते हुए भी अपने प्रभाव के कारण अनेकों से घिरे हुए से लगने वाले, ये कौन हैं जो इस प्रकार निःशंक होकर विहार कर रहे हैं ? ॥६५॥

**लाजानिवाऽऽजानुभुजोऽनुवेलं क्षिपत्यसौ पाथसि मौक्तिकानि ।**
**सत्वेन रूपेण जनातिगेन मन्ये भुवः कोपि भवेदधीशः ॥६६॥**

ये आजानुबाहु हैं और लगातार जल में लावे जैसे मोती फेंक रहे हैं। इनके अलौकिक बल और रूप से पता चलता है कि कोई पृथ्वीपति हैं ॥६६॥

**निमज्जयन्ती हृदयं मृगाक्ष्याः सुधाम्बुराशौ मधुरैर्वचोभिः ।**
**जगाद तां बुद्धिमती भुजिष्या शाकम्भरीं या नगरीं गतासीत् ॥६७॥**

अपने मधुर वचनों से मृगनयनी कान्तिमती का हृदय अमृत के समुद्र में डुबाती हुई वह बुद्धिमती परिचारिका, जो पहले शाकंभरी नगरी गई थी, यों बोली ॥६७॥

**असंशयं सोऽयमशीर्णसत्वः सोमेश्वरस्य प्रथमस्तनूजः ।**
**आकारतो वा गुणवैभवाद् वा कस्तेन तुल्यो जगति द्वितीयः ॥६८॥**

निःसन्देह ये सोमेश्वर के महाप्रतापी बड़े पुत्र हैं। रूप और गुण में इनके बराबर संसार में और कौन है ? ॥६८॥

**प्रत्येषि नो चेन् मम शंसितेन कृशाङ्गि सन्देहविनोदनाय ।**
**अस्यान्तिकं प्रेषय कान्तिराशेः काञ्चित् तदा प्रत्ययितां भुजिष्याम् ॥६९॥**

कृशांगि ! यदि आपको मेरे कथन में विश्वास नहीं हो तो अपने सन्देह के निवारण के लिये आप इन कान्तिपुञ्ज के पास किसी विश्वस्त परिचारिका को भेज कर देख लीजिए ॥६९॥

**स्वभाव एवायमधीश्वराणां छायाद्वितीया अपि कौतुकेन ।**
**परीतमात्मानमुदारभृत्यवर्गैरिवायत्तधियो विदन्ति ॥७०॥**

राजाओं का यह स्वभाव है कि अकेले होने पर भी कौतुकवश वे अपने आपको उदार अनुचरों के समूहों से घिरे हुए समझते हैं ॥७०॥

**समापिते सम्प्रति हाररत्ने जिघृक्षुरन्यान्यपि मौक्तिकानि ।**
**पश्चात्स्थितं कञ्चन मन्यमानः प्रसारयिष्यत्ययमग्रपाणिम् ॥७१॥**

अभी जब यह हार समाप्त हो जायगा तो और मोतियों की इच्छा से ये, अपने पीछे किसी अनुचर को खड़ा हुआ समझकर, अपना हाथ बढ़ा देंगे ॥७१॥

**प्रियां निशम्येति गिरं तदीयां कुतूहलेनाकुलिता कुमारी ।**
**समर्प्य मुक्ताफलजालकानि जवेन काञ्चित् प्रजिघाय दूतीम् ॥७२॥**

उसके ये प्रिय वचन सुन कर कुमारी ने कुतूहलवश एक दूती को मोतियों के समूह देकर जल्दी से भेजा ॥७२॥

**आदेशतोऽस्याः सविधं जगाम दूती मनोवृत्तिरिव द्वितीया।**
**मीनावलीरिङ्गणलोलदृष्टेर्मीनाङ्कमानं हरतो नृपस्य ।।७३।।**

कुमारी की दूसरी मनोवृत्ति के समान वह दूती, आज्ञा पाकर, पृथ्वीराज के समीप गई जो चंचल नेत्रों से मछलियों का तैरना देख रहे थे और अपने सौन्दर्य से कामदेव का अभिमान दूर कर रहे थे ।।७३।।

**अधृष्यरूपस्य धराभृतोऽस्य भीताप्यसौ साहसबद्धधैर्या।**
**समीपमासाद्य शनैर्नयज्ञा छायेव पश्चादवतिष्ठते स्म ।।७४।।**

राजा के प्रतापी रूप को देखकर वह भयभीत हो गई, किन्तु साहस करके धैर्य धारण किया और नीतिकुशल होने के कारण धीरे से पास जाकर छाया के समान पीछे खड़ी हो गई ।।७४।।

**कौतूहलक्षिप्तहृदा नृपेण क्षिप्ते समस्ते सरिति स्वहारे।**
**प्रसारिते पाणितलेऽस्य पश्चादुपानयन् मौक्तिकजालकं सा ।।७५।।**

कुतूहलवश राजा ने अपना सारा हार गंगा में फेंक देने पर पीछे हाथ बढ़ाया और परिचारिका ने मोती का जाल उस पर रख दिया ।।७५।।

**क्रमेण मीनास्यमुपागतासु मुक्तासु तास्वग्रथितासु तन्वी।**
**आच्छिद्य सद्यो निजकण्ठदेशादकुण्ठसत्वा विततार हारम् ।।७६।।**

उन खुले हुए मोतियों के धीरे-धीरे मछलियों के मुँह में पहुँच जाने पर, परिचारिका ने झट उत्साहपूर्वक अपने गले से हार उतार कर राजा के हाथ में धर दिया ।।७६।।

**अथाङ्गनाकण्ठविभूषणं तद् विलोक्य विस्मेरमना मनीषी।**
**विवर्त्य वक्त्रं विततप्रभावो विलोकयंस्तामबलां बभाषे ।।७७।।**

बुद्धिमान् और विख्यात प्रभाव वाले राजा ने उस स्त्री के कंठ के हार को देखकर आश्चर्यचकित होकर मुँह पीछे फेरा और उस अवला की ओर देखते हुए बोले ।।७७।।

**का त्वं कुतस्त्यासि निशाचरीव घने निशीथे विजने भ्रमन्ती।**
**त्वया किमर्थं व्ययितानि तावन् महार्घमुक्ताफलजालकानि ।।७८।।**

तुम कौन हो ? कहाँ की हो ? इस घनी आधी रात में राक्षसी की तरह जंगल में क्यों घूम रही हो ? और अपने बहुमूल्य मोतियों के समूह तुमने किसलिये खर्च कर दिए ? ।।७८।।

**तथा प्रगल्भाऽपि नृपप्रभावात् सा साध्वसोत्कम्पितचित्तवृत्तिः।**
**प्रणम्य सङ्कोचितगात्रयष्टिः सगद्गदं प्रत्यवदत् कथञ्चित् ।।७९।।**

यह सुन कर उस प्रौढ परिचारिका की चित्तवृत्ति, राजा के प्रभाव के कारण, भय से कम्पित हो उठी। राजा को प्रणाम करके, अपने पतले शरीर को सिकोड़ती हुई गद्गद कण्ठ से किसी प्रकार यों बोली ।।७९।।

**अहं महाभाग ! महीश्वरस्य कुमारिकायाः परिचारिकाऽस्मि।**
**प्रमाणयन्ती नियमेन तस्या निदेशमस्यां निशि बंभ्रमीमि ।।८०।।**

महाभाग ! मैं कान्यकुब्जेश्वर की राजकुमारी की परिचारिका हूँ और नियमपूर्वक उन कुमारी की आज्ञा का पालन करने के कारण इस रात्रि में भी यहाँ आई हूँ ।।८०।।

**मया पराधीनतया विमुक्ता स्वाभाविकी भीतिरपि त्रपापि ।**
**प्रभोर्निदेशस्य नितान्तवश्या गुणाऽगुणं नैव विचारयन्ति ।।८१।।**

पराधीन होने के कारण मैंने स्वाभाविक (स्त्री-सुलभ) भय और लज्जा दोनों छोड़ दिये हैं। स्वामी की आज्ञा के अत्यन्त परवश अनुचरगण गुण और दोष का विचार नहीं करते ।।८१।।

**एकं भवन्तं विहरन्तमत्र स्वतन्त्रमत्यन्तमगाधसत्वम् ।**
**अन्तःपुरस्था ददृशुः कृशाङ्ग्यो वातायनालम्बिदृगम्बुजान्ताः ।।८२।।**

अत्यन्त पराक्रमी आपको यहाँ अकेले ही स्वतन्त्र-रूप से विहार करते हुये, अन्तःपुर की स्त्रियों ने, खिड़की की जालियों में अपने नयन-कमल झुका कर देखा ।।८२।।

**आरूढसौधोच्छ्रितचन्द्रशाला बाला च सा त्वामवलोकयन्ती ।**
**अपृच्छदच्छाशयमायताक्षी पुनः पुनः पार्श्वचरीसमाजम् ।।८३।।**

महल की ऊँची चन्द्रशाला पर चढ़कर राजकुमारी ने शुद्ध हृदय वाले आपको देखा और विस्मय से आँखें चौड़ी करके बार बार अनुचरियों के समाज से यों पूछा ।।८३।।

**सख्यः समक्षीक्रियते पुरस्तात् कोऽयं विलासायुधवद् विलासी ।**
**धरावतीर्णः किमु रोहिणीशो हिनस्ति धैर्यस्थितिमङ्गनानाम् ।।८४।।**

सखियों ! कामदेव के समान विलासी ये कौन सामने दिखाई दे रहे हैं ? क्या स्वयं चन्द्रमा धरती पर उतर कर रमणियों के धैर्य को दूर कर रहे हैं ? ।।८४।।

**निशम्य तद् बुद्धिमती भुजिष्या शाकम्भरीं या नगरीं गतासीत् ।**
**आचष्ट सा स्पष्टमयं स पृथ्वीराजो मया तत्र हि दृष्टपूर्वः ।।८५।।**

यह सुनकर वह बुद्धिमती परिचारिका, जो पहले शाकंभरी नगरी गई थी, स्पष्ट बोली कि ये तो राजा पृथ्वीराज हैं जिनको मैंने पहले शाकंभरी में देखा था ।।८५।।

**अन्या जगाद ग्रहिला स्वपक्षे साक्षेपमस्या विनिगृह्य वाचम् ।**
**असावसम्भावितभाषितेन यते मनस्तोषयितुं भवत्याः ।।८६।।**

तब दूसरी सखी अपने पक्ष में आग्रह रखती हुई, आक्षेपपूर्वक पहली परिचारिका का खंडन करती हुई कहने लगी कि यह तो असंभव बात बना कर आपके मन को बहलाने का यत्न कर रही है ।।८६।।

**यत्प्रस्थितौ वारणवाजिपत्तिभरेण दोलायितमेति भूमिः ।**
**एकाकिनोऽस्य भ्रमणं निशायां प्रत्येतु कोऽस्मिन् परराष्ट्रचक्रे ।।८७।।**

जिन पृथ्वीराज के प्रस्थान के समय हाथियों, घोड़ों और पदातियों के भार से भूमि काँप उठती है, वे यहाँ दूसरे राज्य में रात के समय अकेले घूमेंगे—यह कौन मान सकता है ? ।।८७।।

**भवन्ति तुल्याकृतयोऽप्यनेके लोकेऽत्र का विप्रतिपत्तिशङ्का ।**
**कल्याणि तुल्यासि यथा रतेस्त्वं मुखेन तुल्यश्च यथा तवेन्दुः ।।८८।।**

इस संसार में बहुत से लोग हैं जिनकी आकृति आपस में मिलती है। इसमें कौन-सी विरोध वाली बात या शंका हो सकती है ? कल्याणि ! जैसे आप स्वयं रति के समान हैं या जैसे चन्द्रमा आपके मुख के समान है ।।८८।।

**तस्योपमानं यदि मानवेषु न वेत्सि रूपेण गुणैश्च तैस्तैः ।**
**विद्याधरो वा धरणीं विहर्तुं वृन्दारकः कश्चन वाऽवतीर्णः ॥८९॥**

और यदि आप यही समझती हैं कि मनुष्यों में कोई भी रूप में और विविध गुणों में पृथ्वीराज के समान नहीं है, तो हो सकता है कि यह कोई विद्याधर या कोई देवता पृथ्वी पर विहार करने के लिये आया हो ॥८९॥

**एवं ब्रुवाणां स्मयपूर्वमेनां भूयोऽपि सा सस्मितमाबभाषे ।**
**प्रत्यक्षदृष्टं किमियं पदार्थं वितण्डया खण्डयितुं प्रवृत्ता ॥९०॥**

इस प्रकार गर्वपूर्वक कहनेवाली सखी से पहली सखी फिर हँस कर बोली, प्रत्यक्ष दिखाइ देनेवाले पदार्थ को तुम झूठमूठ अपनी वितण्डा से खंडन करने का क्यों प्रयत्न कर रही हो ? ॥९०॥

**प्रतिश्रुतं विष्टपविश्रुतेन पुरो ममाऽत्राऽऽगमनाय येन ।**
**अभ्यागतो निह्नुतराजलक्ष्मा स क्ष्माधिनाथ : किल पक्ष्मलाक्षि ॥९१॥**

राजकुमारि ! ये वे ही विश्वविख्यात राजा पृथ्वीराज हैं जिन्होंने मेरे सामने यहाँ आने का वादा किया था और अब अपना राजसीय वेश छिपा कर छद्मवेश में यहाँ आए हैं ॥९१॥

**इत्थं तयोरत्र चिराय वादद्यूतं प्रवृत्तं कुतुकेन सख्यो : ।**
**नृपात्मजा सुन्दर ! सन्दिहाना मां प्राहिणोत् तत्त्वविनिर्णयाय ॥९२॥**

इस प्रकार उन दोनों सखियों में कुतूहलवश बहुत देर तक शर्त के साथ वाद-विवाद चलता रहा। हे सुन्दर ! तब सन्देह करनेवाली राजकुमारी ने तत्त्वनिर्णय के लिए मुझे यहाँ भेजा ॥९२॥

**उदीरयित्वेदमुपात्तमौनां मनाग् विहस्येति बभाण भूप : ।**
**बाले तवानेन गवेषणेन फलं न किञ्चित् प्रविलोकयामि ॥९३॥**

इस प्रकार कहकर मौन हो जाने वाली परिचारिका से राजा ने जरा मुस्कुरा कर कहा, 'बाले ! तुम्हारी इस खोज का मैं कुछ भी फल नहीं देखता ॥९३॥

**प्रत्येष्यति त्वद्वचनादियञ्चेत् सन्देग्धि किं बुद्धिमती वचोभि : ।**
**जनः कुतर्कापहृतप्रतीतिर्नहि प्रमाणीकुरुतेऽन्यवाणीम् ॥९४॥**

यदि राजकुमारी तुम्हारे बचनों का विश्वास कर लेगी तो फिर बुद्धिमती होने पर भी वह सन्देह क्यों करती है ? कुतर्क के कारण जिनका विश्वास डगमगा जाता है वे लोग दूसरे के वचनों को प्रमाण नहीं मानते ॥९४॥

**तां मद्वचोभिर्वद सन्दिहानामागामिनी कामिनि यामिनीयम् ।**
**सनिर्णयं ते हृदयं विधात्री सन्धेहि धैर्यं कियतोपि यामान् ॥९५।**

उन सन्देह करनेवाली राजकुमारी से तुम मेरी ओर से कहना कि हे कामिनि ! आगामिनी रात्रि तुम्हारे सन्देह का निवारण करके तुम्हारे हृदय को निर्णय वाला बना देगी । कुछ पहरों तक और धैर्य धारण करो' ॥९५॥

**इत्युक्तवान् मुक्तसरित्प्रतीरः प्रत्यागमत् स्वं शिविरं स वीरः ।**
**सापि प्रविष्टा सुमनाः पुरान्तः प्रमोदयामास मनः कुमार्याः ॥९६॥**

यह कहकर वीर पृथ्वीराज गंगा के तट को छोड़कर अपने शिविर में चले गए और वह परिचारिका भी प्रसन्न मन से अन्तःपुर में प्रवेश करके राजकुमारी के हृदय को प्रमोद देने लगी ॥९६॥

**आकर्ण्य सन्देशहरोपनीतं सन्देहहारि प्रियभाषितं तत् ।**
**आसन्नसङ्गं तमुदीक्षमाणा क्षणं मृगाक्षी युगवद् विवेद ॥९७॥**

संदेश लानेवाली परिचारिका के संदेह को हरनेवाले उन प्रियतम के प्रिय वचनों को सुन कर और प्रियतम का संग समीप जानकर मृगनयनी राजकुमारी के लिये एक क्षण भी युग के समान बीतने लगा ॥९७॥

**अन्येद्युरुन्निद्रकुमुद्वतीके काले कलाविद् विहिताभ्युपायः ।**
**अलक्ष्यमाणः प्रतिहारपालैः पुरं कुमार्याः प्रमना विवेश ॥९८॥**

दूसरे दिन रात में जब कुमुदिनी खिल रही थी, कला-निपुण राजा पृथ्वीराज, उपाय करके, द्वारपालों की आँखें बचाकर, राजकुमारी के अन्तःपुर में प्रसन्न चित्त होकर प्रवेश कर गये ॥९८॥

**आयान्तमेतं कथितं सखीभिः सितेक्षणा सत्यतया न मेने ।**
**उपेयुषि प्रेयसि पार्श्वमक्ष्णोः सम्भावयामास निजभ्रमं सा ॥९९॥**

जब सखियों ने कहा कि पृथ्वीराज आ गए तो बिना काजल के नेत्रवाली कान्तिमती ने उस कथन को सत्य नहीं माना। और जब प्रियतम बिलकुल पास आ गए, तो उसने अपनी आँखों का भ्रम समझा ॥९९॥

**प्रस्वेदकम्पाकुलदेहवल्ली कर्तव्यवस्तुन्यतिमूढचेताः ।**
**अभ्यागतस्याभिमतस्य पत्युः प्रत्युद्गमे नालमभून्मृगाक्षी ॥१००॥**

मृगनयनी की देह-लता पसीने और कम्प से आकुल हो उठी और वह कर्तव्य-विमूढ़ हो गई, यहाँ तक कि मनोनीत पति के समीप आ जाने पर भी वह आदर प्रदर्शन के लिए उठ न सकी ॥१००॥

**स्पन्देन शंसन् प्रियसङ्गमूरुर्वामोऽपि यो दक्षिणतां बभार ।**
**स्तम्भं दधद् भर्तुरथोपचारे वाम्यं पुनर्वामदृशः स भेजे ॥१०१॥**

सुनयना कुमारी की बाँईं जाँघ ने फड़ककर प्रियतम के संग की सूचना दी । इस कारण 'वाम' (बाँईं; प्रतिकूल) होने पर भी वह 'दक्षिण' (दाहिनी; अनुकूल) बन गई। किन्तु फड़कने के कारण पति के सत्कार के लिए उठने में उसने रुकावट डाली और इसलिए वह फिर 'वाम' (प्रतिकूल) बन गई ॥१०१॥

**अथोपनीते रभसोत्थिताभिर्वरासने कान्तिमतीसखीभिः ।**
**सुखोपविष्टो विशदस्मितार्द्रैः सम्भावयामास वचोभिरेताः ॥१०२॥**

कान्तिमती की जल्दी से उठनेवाली सखियों द्वारा लाए गए सुन्दर आसन पर आराम से बैठकर राजा ने स्वच्छ मुसकान से सिक्त वचनों से उनसे कुशल-प्रश्न पूछे ॥१०२॥

**अयोजयत् तन् मिथुनं मनोज्ञं योग्यद्वयीयोजनविद् विधाता ।**
**प्राज्योदितस्नेहसमिद्धमन्तर्मनोभवाग्निं विनिधाय साक्ष्ये ॥१०३॥**

योग्य वर-वधू को मिलाने में दक्ष विधाता ने, अत्यन्त उत्कृष्ट स्नेह से परिवर्धित, हृदय में स्थित, कामदेव रूपी अग्नि को साक्षी करके उस मनोहर वर-वधू के मिथुन को मिला दिया ॥१०३॥

**मनोनुवृत्तिं मदनस्य तन्वन् प्रमाणयन् प्रेम नवं प्रियायाः ।**
**स विस्मृतान्यव्यसनप्रसङ्गो निनाय कान्तः कतिचित् त्रियामाः ॥१०४॥**

कामदेव के मनोनुकूल व्यवहार करनेवाले और प्रिया के नवीन प्रेम को प्रमाणित करने वाले प्रिय पृथ्वीराज ने अन्य सब कुछ भूल कर कुछ रातें वहीं बिता दीं ॥१०४॥

**वधूस्वभावान् नमितं मुखाब्जं समुन्नमय्य प्रणयात् प्रियायाः ।**
**प्रयातुकामः शिविरं स विज्ञः शनैरथाभाषत नीरजाक्षीम् ॥१०५॥**

अपने शिविर में जाने की इच्छा रखनेवाले बुद्धिमान् राजा ने कमल-नयनी प्रिया के, नवोढ़ा के स्वभाव के कारण लज्जावश झुकाए गए मुख-कमल को प्रेमपूर्वक उठाकर, धीरे-धीरे उससे ये वचन कहे ॥१०५॥

**न मां समायातमिहायताक्षि ! कश्चिद् विजानाति जनो मदीयः ।**
**अतो ममादर्शनजातखेदः कर्ता कुतर्काननुजीविलोकः ॥१०६॥**

विशालनेत्रे ! मेरे अनुचरों में से कोई यह नहीं जानता कि मैं यहाँ आया हुआ हूँ । अतः मुझे न देखने के कारण दुखी हुए वे लोग नाना प्रकार के कुतर्क कर रहे होंगे ॥१०६॥

**मया विनाऽसौ विषयं विषादी नूनं व्रजेद् वीरजनो मदीयः ।**
**अनन्तरैरन्तरमेत्य भूपैस्ततो विलुप्येत बलेन राष्ट्रम् ॥१०७॥**

मेरे वीर लोग मेरे बिना दुखी होकर देश लौट जायँगे और फिर अन्य राजाओं से मिलकर इस राज्य को बलपूर्वक नष्ट-भ्रष्ट कर देंगे ॥१०७॥

**न चोत्सहे सोढुमहं मुहूर्तमपि त्वदीयं विरहं वरोरु ।**
**संभाव्य सामन्तजनं समस्तं समग्रयिष्यामि मनोरथं ते ॥१०८॥**

वरोरु ! मैं क्षण भर भी तुम्हारा विरह नहीं सह सकता । अतः मैं शीघ्र अपने सब सामन्तों से परामर्श करके तुम्हारे मनोरथ को पूर्ण करूँगा ॥१०८॥

**इतीरिता रीतिविदा प्रियेण तरङ्गितान्तःकरणा कृशाङ्गी ।**
**निश्वस्य वाष्पाम्बुभरेण पूर्णां दृशं दधे दीनतमां सखीषु ॥१०९॥**

रीति कुशल प्रिय से इस प्रकार सम्बोधित की गई कृशांगी का मन उद्वेलित हो उठा और उसने गहरी साँस लेकर अपनी आँसुओं से पूरी भरी हुई अत्यन्त दीन दृष्टि सखियों पर डाली ॥१०९॥

**ततो भविष्यद्विरहोपतप्तं मुखेन्दुमालोक्य स कान्तिमत्याः ।**
**पाणौ समादाय दयालुरेनां निशान्तमध्यान् निशि निर्जगाम ॥११०॥**

दयालु पृथ्वीराज कान्तिमती के, भावी विरह की कल्पना से सन्तप्त मुख-चन्द्र को देखकर, उसे अपने हाथों का सहारा देते हुए साथ लेकर, रात में, अन्तःपुर के बीच से रवाना हो गए ॥११०॥

**अतीत्य कक्षाः सुतरां स दक्षो द्वारि स्थितानां तुरगोत्तमानाम् ।**
**आच्छिद्य कञ्चिज्जविनं प्रवीणं समं कलत्रेण समारुरोह ॥१११॥**

अत्यन्त दक्ष राजा, अन्तःपुर के कमरों को पार करके, बाहर द्वार पर बँधे हुए उत्तम घोड़ों में से किसी वेगशाली सधे हुए घोड़े को खोल कर अपनी स्त्री के साथ उस पर चढ़ गए ॥१११॥

**द्वारि स्थितैरस्फुरितस्वकृत्यैः सविस्मयत्रासमुदीक्ष्यमाणः ।**
**जगाम तेनैव तुरङ्गमेण निजं निवेशं धरणीवतंसः॥ ११२॥**

किंकर्तव्यविमूढ़ द्वारपालों के भय और विस्मय से देखते देखते राजा पृथ्वीराज उसी घोड़े पर चढ़े हुए अपने शिविर में चले गए ॥११२॥

**सामन्तमुख्यः समुपेत्य कश्चिन् मुदाऽथ भूपालमुदाजहार ।**
**ससाधनः साधय तावदिन्द्रप्रस्थोन्मुखस्त्वं सुमनाः सदारः॥११३॥**

फिर एक सामन्तश्रेष्ठ ने उनके पास आकर प्रसन्नतापूर्वक निवेदन किया कि आप प्रसन्न मन से साधनसहित सपत्नीक इन्द्रप्रस्थ (दिल्ली) की ओर प्रस्थान कर दीजिये ॥११३॥

**चत्वारि यावत् किल योजनानि व्रजस्यतिक्रम्य जनाधिनाथ ।**
**तव प्रसादादहमेक एव निवारिष्यामि विरोधिसैन्यम् ॥११४॥**

नरनाथ ! जब तक आप चार योजन (बत्तीस मील) न चले जायँगे तब तक आपकी कृपा से मैं अकेला ही शत्रु सेना को रोक रक्खूँगा ॥११४॥

**अन्योऽब्रवीद् वीरवरः सगर्वं गव्यूतिषट्कावधियाप्तियावत् ।**
**तावन् महीशाऽहितवाहिनीनामहं निरोत्स्यामि रयं यथाद्रिः ॥११५॥**

दूसरे वीर सामन्तश्रेष्ठ ने सगर्व कहा—राजन् ! जब तक आप छ गव्यूति (चौबीस मील) न चले जायँगे तब तक मैं शत्रुसेना के वेग को, नदी के वेग को पर्वत के समान, रोकूँगा ॥११५॥

**एवं हरिप्रस्थगमे यथेच्छं भवन्ति यावन्त्यपि योजनानि ।**
**विभज्य तान्येव गृहीतवन्तो युद्धाय सर्वे कृतसत्यबन्धाः॥११६॥**

इस प्रकार इन्द्रप्रस्थ तक जितने भी योजन होते थे उन सब योजनों को आपस में बाँटकर वे वीर सामन्त युद्ध के लिए दृढ़प्रतिज्ञ हो गए ॥११६॥

**रिङ्गत्तुरङ्गं विलसच्छताङ्गमुत्तुङ्गमातङ्गमुपात्तपत्ति ।**
**स्फुरत्पताकं घनघोषघोरं सैन्यं रिपोः सन्निदधे तदानीम् ॥११७॥**

इसके बाद दौड़ते हुए घोड़ों से और रथों से शोभित, बड़े-बड़े हाथियों से युक्त और सैनिकों से लसी हुई, शत्रु सेना पताका फहराती हुई और भयंकर शब्द करती हुई समीप आ गई ॥११७॥

**धैर्यातिरेकादवधीर्य तत्तु पृथ्वीपतिः पूर्णमनाः प्रतस्थे ।**
**अव्यग्रचेताः पुनरग्रतोऽस्य सामन्त एकः समराय तस्थौ ॥११८॥**

उत्कृष्ट धैर्य के कारण उस सेना की अवहेलना करके पृथ्वीराज पूर्ण उत्साह से इन्द्रप्रस्थ की ओर चल दिए और एक धीर चित्त वीर सामन्त युद्ध के लिए तैयार हो गए ॥११८॥

---

(११४–११५) योजनं क्रोशचतुष्टयं, गव्यूतिः क्रोशद्वयम् ।

**अथापतत् तत् प्रतिपक्षसैन्यं व्यग्रीचकारोग्ररयः स एकः ।**
**प्रतीपवातः प्रबलः खगानां व्यूहं यथा व्योमनि सञ्चरन्तम् ॥११९॥**

आगे बढ़ने वाली उस शत्रुसेना को उग्रवेग वाले उन एक सामन्त ने व्यग्र कर दिया जिस प्रकार प्रबल प्रतिकूल वायु का तूफान आकाश में उड़ने वाले पक्षि-समूह को व्याकुल कर देता है ॥११९॥

**प्रजह्रुरेनं युगपन् निवृत्ताः सपत्नसेनापतयोऽतिदृप्ताः ।**
**शरद्व्यपाये शतपत्रखण्डं यथा पुनः प्राणहरास्तुषाराः ॥१२०॥**

अत्यन्त अभिमानी शत्रु सेनापतियों ने एक साथ मिलकर उन वीर सामन्त पर वार किया, जिस प्रकार शरद् के बीत जाने पर शीत ऋतु में फिर प्राणघातक तुषार (पाले) कमलपत्र पर प्रहार करते हैं ॥१२०॥

**तस्यात्यये सत्वरमापपात पताकिनी सा जयचन्द्रगुप्ता ।**
**पीनस्तनीस्तेन उदस्तभीतिर्यया दिशा सञ्चरते स्म राजा ॥१२१॥**

उन सामन्त के वीरगति प्राप्त करने पर जयचन्द्र द्वारा रक्षित सेना फिर वेग से शीघ्र उसी मार्ग पर बढ़ी जिस मार्ग से राजा पृथ्वीराज सुडौल स्तन वाली कान्तिमती को चुराकर निर्भय लिए जा रहे थे ॥१२१॥

**एकैकशः क्लेशितशात्रवास्ते संहृत्य सैन्यानि पुरोगतानि ।**
**तीर्णप्रतिज्ञासरितः कृतज्ञा जग्मुर्गतिं वीरजनोपदिष्टाम् ॥१२२॥**

इस प्रकार एक-एक करके उन स्वामिभक्त सामन्त वीरों ने शत्रुओं को कष्ट देकर और सामने आने वाली शत्रु सेना को मार कर तथा अपनी प्रतिज्ञा-रूपी नदी पार करके वीरगति प्राप्त की ॥१२२॥

**एवं प्रवृत्ते पथि सम्पराये नृपो हरिप्रस्थमुपैति यावत् ।**
**क्रमेण तावत् पृथुविक्रमास्ते स्तोकावशेषाः सुभटा बभूवुः ॥१२३॥**

इस प्रकार मार्ग भर युद्ध के चलते रहने के कारण जब तक राजा पृथ्वीराज इन्द्रप्रस्थ पहुँचे तब तक उनके अत्यन्त पराक्रमी वीरगण इने-गिने बच रहे ॥१२३॥

**पुरं तदासाद्य ततः समृद्धं सोमेश्वरस्यान्वयमण्डनोऽसौ ।**
**अमित्रसेनामथनाय चक्रे मनः स्वयं मन्युरयेण दीप्तः ॥१२४॥**

राजा सोमेश्वर के कुल-भूषण पुत्र पृथ्वीराज ने अपने समृद्ध इन्द्रप्रस्थ नगर में पहुँच कर, क्रोध के वेग से प्रज्वलित मन में शत्रु सेना को मथ डालने की सोची ॥१२४॥

**स कान्यकुब्जाधिपतिः सुघोरं सङ्ग्राममासाद्य समाप्तसत्वः ।**
**शाकम्भरीशेन वितीर्णभङ्गो यमानुजाया निममज्ज नीरे ॥१२५॥**

कान्यकुब्जेश्वर जयचन्द्र का बल, पृथ्वीराज के साथ घोर युद्ध करने के कारण, समाप्त हो गया और शाकंभरी के स्वामी से हार कर वे यमुना के पानी में डूब गए ॥१२५॥

**इति प्रतीतः प्रतिपद्य जायामनन्यलभ्यां विजयश्रियञ्च ।**
**तस्मिन् पुरे पूर्णमनोरथोऽसौ चक्रे स्थितिं कत्यपि वासराणि ।।१२६।।**

इस प्रकार प्रसिद्ध वीर पृथ्वीराज ने अपनी पत्नी कान्तिमती और दूसरे के द्वारा अप्राप्य विजय-लक्ष्मी प्राप्त करके, अपने मनोरथों को पूर्ण करते हुए, कुछ दिन इन्द्रप्रस्थ में व्यतीत किए ।।१२६।।

**कालेऽथ कल्पाग्निसमप्रतापो विजित्य सर्वाः स दिशः क्रमेण ।**
**शहाबुदीनाह्वयमाहवेषु महाबलं म्लेच्छपतिं बबन्ध ।।१२७।।**

कल्पाग्नि के समान प्रतापी पृथ्वीराज ने धीरे-धीरे क्रमशः सब दिशाओं को जीतकर, युद्ध में, महावलवान् शहाबुद्दीन मुहम्मद ग़ोरी नामक म्लेच्छपति को पराजित कर बाँध लिया ।।१२७।।

**तिग्मस्वभावं खलु राजनीतेर्दयार्द्रभावादवधीर्य धीरः ।**
**त्रिःसप्तकृत्वोऽपि निबध्य शत्रुं कारातिथीकृत्य विमुञ्चति स्म ।।१२८।।**

अत्यन्त दयालु होने के कारण, धीर पृथ्वीराज ने, राजनीति के कठोर स्वभाव की अवहेलना करके, इक्कीस बार शत्रु को बाँध कर कैद किया और छोड़ दिया ।।१२८।।

**तथोपकर्तारममुं कृतघ्नः कृत्वा सदम्भं यवनः प्रबन्धम् ।**
**नियम्य देशं निजमानिनाय किमस्त्यकार्यं बत दुर्जनानाम् ।।१२९।।**

कृतघ्न शहाबुद्दीन यवन ने अपने इतने बड़े उपकारक पृथ्वीराज को छलपूर्वक पकड़ लिया और कैद करके अपने देश में ले गया। दुर्जनों के लिये कोई बात अकरणीय नहीं ।।१२९।।

**तं यन्त्रितं मन्त्रितमन्दनीतिर्व्यपेतशस्त्रं विपरीतचेताः ।**
**प्रणोदितः प्राणहरेण धात्रा वियोजयामास विलोचनाभ्याम् ।।१३०।।**

मन्दनीति वाले विपरीतबुद्धि शहाबुद्दीन ने, अपने प्राण हरनेवाले विधाता से प्रेरित होकर, कैद किये हुए निःशस्त्र पृथ्वीराज की दोनों आँखें निकलवा लीं ।।१३०।।

**विधेः कृपारोधि विचेष्टितेन मर्मच्छिदा तेन मनस्विनोऽस्य ।**
**स्वयं निरेष्यन् नियतं नियत्या जीवोऽस्य वैरोद्धरणाय रुद्धः ।।१३१।।**

विधाता की मर्मान्तक पीड़ा देने वाली उस निर्दय चेष्टा के कारण मनस्वी पृथ्वीराज के प्राण स्वयं निकलने वाले ही थे कि उनको अवश्य विधाता ने ही, शत्रु से बदला लेकर वैर शुद्धि करने के लिए रोक दिया ।।१३१।।

**असौ विदूरस्थितमित्रबन्धुरन्धः स्वयं शत्रुमुखान्तरस्थः ।**
**पारं विपद्वारिनिधेरपश्यन् प्रायोपवेशाय बबन्ध चेतः ।।१३२।।**

पृथ्वीराज ने, जिनके मित्रगण और बन्धु-वर्ग बहुत दूर थे और जो स्वयं शत्रु के मुँह के अन्दर थे तथा अन्ध बना दिये गये थे, विपत्ति के समुद्र को पार करने का कोई उपाय न देख कर, अनशन करने का विचार किया ।।१३२।।

**अथ भ्रमन् भूवलयं विवृण्वन् भोगावलीं भाग्यविलासभाजाम् ।**
**चन्दाभिधः पूर्वमनेन वित्तैर्मित्रीकृतस्तत्र जगाम बन्दी ।।१३३।।**

भाग्यशील पुरुषों की ऐश्वर्य-परम्परा का वर्णन करते हुए भूमण्डल पर घूमनेवाले चन्द नामक चारण, जिनको पृथ्वीराज ने पहले ही धन इत्यादि देकर अपना मित्र बना रक्खा था, सौभाग्य से वहाँ आए ।।१३३।।

**निमग्नमेनं व्यसनाम्बुराशौ विलोक्य बन्दी स विदीर्णचेताः**
**रहः समभ्येत्य समाहितात्मा स्वनामजाती प्रथयाञ्चकार ॥१३४॥**

पृथ्वीराज को उस कष्ट-समुद्र में डूबा हुआ देखकर चन्द वरदाई का हृदय फट गया। साव-धानी से एकान्त में उनके पास जाकर चन्द ने अपना नाम और जाति प्रकट की ॥१३४॥

**निरुद्धधैर्यातिशयेन वाष्पप्रवाहमव्याहततीव्रवेगम् ।**
**कण्ठस्खलद्‌गद्‌गदभाषितेन स बोधयामास कथञ्चिदेनम् ॥१३५॥**

निरन्तर और तीव्र वेग वाले अश्रु-प्रवाह को अपने अतिशय धैर्य से रोकने का प्रयत्न करते हुए, गद्‌गद्‌कण्ठ से किसी प्रकार चन्द वरदाई ने उनसे यह निवेदन किया ॥१३५॥

**योग्यं जगत्यामथवाप्ययोग्यं संभावितं वाप्यथवा तदन्यत् ।**
**नास्त्येव तद्वस्तु विचार्यमाणं न यत् स्वतन्त्रस्य विधेर्विधेयम् ॥१३६॥**

योग्य हो अथवा अयोग्य , संभव हो अथवा असंभव, वास्तव में इस संसार में विचार किए जाने योग्य ऐसी कोई बात नहीं है जो स्वतन्त्र विधाता द्वारा न की जा सके ॥१३६॥

**आयोधनाग्रे बहवो हि योधा जयं लभन्तेऽत्र विपर्ययञ्च ।**
**एतादृशी दुःसहदुर्दशा तु न जातु दृक्‌श्रोत्रपथं विवेश ॥१३७॥**

युद्धों में अनेक योद्धा या तो जय प्राप्त करते हैं या पराजय यह रीति तो सदा से चली आई है, किन्तु इस प्रकार की घोर दुःसह दुर्दशा न तो पहले कभी देखी और न सुनी ॥१३७॥

**वैरायितं वैरिणि तावदेव यावन् न स स्यादपनीतदर्पः ।**
**वशीकृते तत्र तु विक्रमेण कारुण्यमेवोचितमुत्तमानाम् ॥१३८॥**

शत्रु से उसी समय तक वैर रहता है जब तक उसका अभिमान चूर न हो जाय। पराक्रम से शत्रु को अभिभूत कर लेने पर उत्तम पुरुषों को शत्रु के प्रति भी करुणा ही शोभा देती है ॥१३८॥

**जिह्मस्वभावाद् यदि नाम केचिन् न मोक्तुमेवापकृतिं सहन्ते ।**
**प्राणान् परं हन्त हरन्ति शत्रोर्नैतादृशं वैकृतमावहन्ति ॥१३९॥**

अपने कुटिल स्वभाव के कारण यदि कोई बिना बदला लिए शत्रुकृत अपकार को भूलने में असमर्थ हैं तो अधिक से अधिक, शत्रु के प्राण हर सकते हैं, इस प्रकार की (आँखें निकलवा लेने की) विकृति तो नहीं करते ॥१३९॥

**ईदृश्यपारे व्यसनान्धकारे त्रपाकरं जीवनमेव शल्यम् ।**
**साधारणस्यापि भवेज्जनस्य जनातिगानां किमु तत्प्रभूणाम् ॥१४०॥**

साधारण पुरुष को भी इस प्रकार के अपार दुःखान्धकार में अपना लज्जाजनक जीवन शल्य की तरह चुभता है, फिर असाधारण नरपतियों की तो बात ही क्या ॥१४०॥

**तथापि वैरं विरतान्यकृत्यो निर्यातयिष्यन् निजयैव शक्त्या ।**
**कालं कियन्तं किल यंत्रितोऽपि कलेवरं रक्ष निजं सहिष्णुः ॥१४१॥**

फिर भी अन्य सब कार्य छोड़कर केवल अपनी ही शक्ति से वैर का बदला लेने के लिए ही आप जेल में सब दुःख सहते हुए भी कुछ समय के लिए अपने शरीर की रक्षा करें ॥१४१॥

**संभावनीयेपि नृणामपाये तदागमाय त्वरितो नहि स्यात् ।**
**कुत्रापि दैवस्य विपर्ययेण पराजयः स्याद् विजयस्य हेतुः ॥१४२॥**

विनाश की संभावना होने पर भी उसे बुलाने के लिए जल्दी नहीं करना चाहिये। हो सकता है कि विधाता की इच्छा से पराजय ही विजय का कारण बन जाय ॥१४२॥

**वदन्तमेवं मृदु बन्दिनं तं प्रीत्या च नीत्या च नितान्तरम्यम् ।**
**प्रत्याहताशेषमनोरथोऽसौ प्रत्याह कृच्छ्रेण पतिः प्रजानाम् ॥१४३॥**

इस प्रकार प्रीति और नीति से अत्यन्त मनोहर एवं मधुर वचन बोलनेवाले चारण को पृथ्वीराज ने, जिनकी सारी इच्छाएँ मर चुकी थीं, बड़ी कठिनाई से यह उत्तर दिया ॥१४३॥

**मग्ने निकारायतनीरराशौ प्रेमानुबन्धं मयि सन्दधानः ।**
**भवानभाणीद् यदिदं विचार्य श्रद्धालुतां तत्र भजेन्न मेऽन्तः ॥१४४॥**

अपमान के इस विस्तृत समुद्र में निमग्न मुझ पर उत्कट प्रेम दिखाते हुए आपने जो कुछ विचार पूर्वक कहा उसके प्रति मेरे मन में श्रद्धा उत्पन्न नहीं हो पा रही है ॥१४४॥

**सैन्याः सुहृद्बन्धुजनाः सहाया धनान्यथान्यान्यपि साधनानि ।**
**कार्यानुबन्धीनि भवन्ति यानि मय्येकमप्यस्ति किमङ्ग ! तेषाम् ? ॥१४५॥**

प्रिय मित्र ! कार्य को सफल करने के लिए सेना, मित्रगण, बन्धु-वर्ग, सहायक, धन तथा अन्य जिन-जिन साधनों की अपेक्षा होती है उनमें से एक भी इस समय मेरे पास नहीं है ॥१४५॥

**आस्तामनास्थावसतिः क्रियासु साधारणी विप्रतिपत्तिरन्या ।**
**स्वभावसिद्धं बत देहिनां यत् तदप्यपास्तं नयनद्वयं नः ॥१४६॥**

अस्तु, इन बातों में सन्देह न भी हो, तो भी एक और साधारण शंका है। वह यह कि लोगों के जो स्वाभाविक दो नेत्र होते हैं मुझ अभागे के तो वे भी नष्ट कर दिए गए हैं ॥१४६॥

**यथा विपाणेरिह शिल्पकार्ये यथा कदर्यस्य यशोऽर्जनेषु ।**
**तथा ममान्धस्य मनोरथोऽयं वीरोचितायां बत ! वैरशुद्धौ ॥१४७॥**

अतः मुझ जैसे अन्धे के लिए वीरोचित वैर शुद्धि की इच्छा करना वैसा ही असंभव है जैसा कि हस्तहीन पुरुष के लिये शिल्पकार्य करना अथवा कापुरुष के लिये यश प्राप्त करना ॥१४७॥

**ज्ञातप्रभावः पुनराह बन्दी मन्दीकरिष्यन् नृपतेरनास्थाम् ।**
**मतं मदीयं मतिमन् निशम्य रोचेत चेत् तत् त्वरितं विधेयम् ॥१४८॥**

पृथ्वीराज के प्रभाव को जाननेवाले चारण ने राजा के अविश्वास को कम करने के लिए फिर यों कहा—बुद्धिमान् नरेश ! मेरी बात सुनें और यदि पसन्द आ जाय तो उसे शीघ्र पूरा करें ॥१४८॥

**अनन्यसाध्यः किल शब्दवेधी बाणस्तवाधीनतरस्तरस्वी ।**
**तेनैव मन्मन्त्रसमेधितेन समीहितं साधय सावधानः ॥१४९॥**

आपके पास वह वेगशाली शब्दवेधी बाण है जो औरों के पास नहीं है। मेरी बुद्धि द्वारा रचे गए जाल से परिवर्धित शक्ति वाले उस बाण से आप, सावधान होकर अपनी इच्छा पूर्ण कीजिये ॥१४९॥

**निर्माय कञ्चित् कपटप्रबन्धमहं करिष्यामि तथाभ्युपायम् ।**
**यथा करस्थं तव कार्मुकं स्याच्छरव्यतां याति यथा सपत्नः ॥१५०॥**

मैं कुछ न कुछ कपट जाल रचकर ऐसा उपाय करूँगा जिससे आपके हाथ में धनुष-बाण आ जाय और शत्रु निशाना बन जाय ॥१५०॥

**इत्थं स निर्णीय समं नृपेण जगाम गोष्ठीं यवनाधिपस्य ।**
**दिनैः कियद्भिर्निजविद्ययाऽसावरञ्जयत् तं सह मन्त्रिमुख्यैः ॥१५१॥**

राजा से इस प्रकार निर्णय करके चन्दवरदाई यवनपति शहाबुद्दीन की सभा में गए और कुछ दिनों में ही उन्होंने अपनी विद्या के कौशल से मुख्यमंत्रियों के साथ साथ शहाबुद्दीन को प्रसन्न कर लिया ॥१५१॥

**अथैकदा चित्रकथाप्रसङ्गे शाहाबुदीसंसदि स प्रगल्भः ।**
**कुतूहलाद् भर्तरि सावधाने स्फीतां मुदा वाचमुदाजहार ॥१५२॥**

इसके बाद एक दिन शहाबुद्दीन की सभा में जब विचित्रकथा का प्रसंग चल रहा था तब चतुर चारण ने सावधान होकर सुनने वाले शहाबुद्दीन से कुतूहलवश ये प्रसन्न वचन कहे ॥१५२॥

**योऽसौ महाराज मृधे निरुध्य विनीतनेत्रो भवता निबद्धः ।**
**अयःकटाहान् बिशिखेन विध्येदेकेन सोऽतीक्ष्णमुखेन सप्त ॥१५३॥**

महाराज ! युद्ध में पकड़ा गया यह पृथ्वीराज, जिसे आपने अन्धा बनाकर कैद कर रक्खा है, एक कुंठित बाण से सात लोहे के कड़ाह भेद सकता है ॥१५३॥

**इतीरितः कालसमीरितोऽसौ तत्कालमाकारितवीरलोकः ।**
**पुराद्बहिः कौतुकरङ्गभूमिं विशालमञ्चां रचयाञ्चकार ॥१५४॥**

यह सुनकर काल से प्रेरित शहाबुद्दीन ने तुरन्त अपने वीर वर्ग को बुलाकर नगर के बाहर विशाल मंच वाली एक क्रीडाशाला बनवाई ॥१५४॥

**प्रतन्यमानप्रतिनादभिन्नप्रभिन्नदिग्वारणकर्णरन्ध्रे ।**
**निरुन्धति व्योमदरीमुदग्रध्वनौ मुदा ताडितदुन्दुभीनाम् ॥१५५॥**
**समीरणासङ्गतरङ्गिताभिर्लसत्पताकाभिरलङ्कृताग्रे ।**
**अयःकटाहेषु निवेशितेषु स्तम्भे समुत्तम्भितहेमकुम्भे ॥१५६॥**
**सुखोपविष्टेषु यथानिवेशं प्रवीरवर्गेषु कुतूहलेन ।**
**आह्वापयामास शहाबुदीनः सहाऽवनीन्द्रेण स बन्दिनं तम् ॥१५७॥**

जब आनन्दपूर्वक जोरों से बजाए गए नगाड़ों की उग्र ध्वनि दिग्गजों के कर्ण कुहरों को अपनी फैलती हुई प्रतिध्वनि के साथ मानों छिन्न-भिन्न करते हुये आकाश में व्याप्त हो रही थी, और जब सोने के कलश से शोभित तथा अपने ऊपर वायु के संग से फहराती हुई पताका से विलसित खम्भे पर लोहे के कड़ाह रख दिए गए थे तथा जब सब वीर गण अपने अपने स्थानों पर आराम से बैठ गए थे, तब कुतूहल के कारण शहाबुद्दीन ने एक राजा को भेज कर उस कैदी (पृथ्वीराज) को बुलाया ॥१५५–१५७॥

---

(१५७) अवनीन्द्रेण सह केनचित् राज्ञा सह। बन्दिनं बन्दीकृतं पृथ्वीराजम्।

**ज्वलन्तमन्तर्व्यसनस्य तापाच्छ्वसन्तमुच्चैरनुवेलमुष्णम् ।**
**विशीर्णसर्वव्यवसायसत्वं दृष्टिं विना दृष्टिविषं यथैकम् ॥१५८॥**

**प्रतिद्विपास्कन्दनभिन्नदन्तं द्विपं यथा क्षीणमदप्रवाहम् ।**
**स्वर्भानुसंभिन्नमिवार्कबिम्बमार्द्रेन्धनेनेव विरुग्णमग्निम् ॥१५९॥**

पकड़े हुये साँप के समान अपमान की भयंकर वेदना के सन्ताप से अन्दर ही अन्दर जलता हुआ, लगातार लम्बी और गरम साँसें लेता हुआ, नेत्रों के बिना जिसकी सब कार्य-प्रवृत्ति सुधबुध हीन हो गई थी ऐसा वह कैदी, प्रतिद्वन्द्वी हाथी के प्रहारों से जिसके दाँत टूट गए हों और पराजय के दु:ख से जिसका मद-प्रवाह क्षीण हो गया हो ऐसे हाथी के समान, राहु से ग्रस्त चन्द्रविम्व के समान और गीले ईंधन के कारण धुँआ दे-देकर रो-रोकर जलने वाली आग के समान लग रहा था ॥१५८-१५९॥

**जयश्रियः कार्मणमन्यवीरैर्दुरानमं कार्मुकमस्य पाणौ ।**
**निवेशितं पार्श्वचरैः शनैश्च शहाबुदीनस्य तदा निदेशात् ॥१६०॥**

अन्य वीरों से न झुकाये जानेवाले तथा जय-लक्ष्मी को प्राप्त करने में कुशल धनुष को शहाबुद्दीन के आदेश से उसके अनुचरों ने पृथ्वीराज के हाथ में दे दिया ॥१६०॥

**अनादरारोपितशिञ्जिनीके संयोजिते तत्र शरेण चापे ।**
**बन्दी बभाषे बहुलीकृतेन स्वरेण शृण्वत्यधिपे धरित्र्याः ॥१६१॥**

जब पृथ्वीराज अनादर से उस धनुष को झुकाकर उस पर प्रत्यंचा चढ़ा चुके और उस पर बाण रख चुके तब चारण ने पृथ्वीराज तक सुनाई देने वाले उच्चस्वर से कहा ॥१६१॥

**उच्चैर्महाराज यदा निदेशं वारत्रयं श्रोष्यति युष्मदीयम् ।**
**शरेण कुण्ठेन धनुर्धरोऽयं लक्ष्यं तदा भेत्स्यति वः समक्षम् ॥१६२॥**

महाराज ! उच्च स्वर में दिये गये आपके आदेश को जब यह तीन वार सुन लेगा तब यह धनुर्धर आपके सामने ही कुंठित बाण से निशाना भेद देगा ॥१६२॥

**तथेति तस्य प्रहरेति वक्तुं व्यात्ताननस्य क्षततालुमूलः ।**
**प्राणैः सहान्धङ्करणस्य शत्रोर्जवान् नियन्तुर्निरियाय बाणः ॥१६३॥**

तब ज्योंही शहाबुद्दीन ने "बाण चलाओ" यह कहने के लिए मुँह खोला त्यों ही धनुर्धर पृथ्वी-राज का शब्दवेधी बाण उन्हें अन्धा कर देनेवाले शत्रु के प्राणों को साथ लेकर उसके कण्ठतालु को फोड़ता हुआ वेग से पार निकल गया ॥१६३॥

---

(१५९) विरुग्णं विशेषेण रुग्णमतिधूमान्धमित्यर्थः ।
(१६०) कार्मणं वशीकरणम् ।

**निपीतयन् वैरमतीव तीव्रं यशो वितन्वन् विशदं जगत्याम् ।**
**फलेन हीनोऽपि महाफलोऽभूत् पृथ्वीपतेस्तस्य तदा पृषत्कः ॥१६४॥**

पृथ्वीराज का वह वाण यद्यपि फल (वाण का नोकीला सिरा) से हीन अर्थात् कुंठित था तो भी अत्यन्त उग्र वैर का बदला लेने के कारण और संसार में शुभ्र यश फैलाने के कारण वह महान् फल देने वाला सिद्ध हुआ ॥१६४॥

**भयविस्मयशोकसङ्कुलान्तःकरणैर्वीरगणैरलक्ष्यमाणः ।**
**अधिरोप्य वनायुजं स बन्दी क्षितिपालं कुरुजाङ्गलं निनाय ॥१६५॥**

भय, आश्चर्य और दुःख से व्याकुल चित्त वाले यवन वीरों की नजर बचा कर चन्द वरदाई पृथ्वीराज को अरवी घोड़े पर बैठाकर कुरुजांगल देश ले आये ॥१६५॥

**पुण्यक्षेत्रे तत्र सत्क्षत्रियाणां दत्तानन्दे शौर्यशौटीर्यभाजाम् ।**
**पृथ्वीलोकं पूरयित्वा यशोभिः पृथ्वीराजः प्रार्थितं प्राप लोकम् ॥१६६॥**

शूरवीरों को आनन्द देनेवाले और श्रेष्ठ क्षत्रियों के पुण्यक्षेत्र कुरुक्षेत्र में, पृथ्वीराज, अपने यश को पृथ्वीलोक में फैलाकर, अपने वांछित लोक (स्वर्ग) को चले गए ॥१६६॥

इति श्री सुर्जनचरितमहाकाव्ये दशमः सर्गः ।

# एकादशः सर्गः

**तस्मिन् गतिं पुण्यकृतां प्रयाते प्रह्लादनामा तनयस्तदीयः ।**
**प्रह्लादयन् मानसमानतानां समुद्रकाञ्चीं सुमनाः शशास ॥ १ ॥**

पृथ्वीराज के पुण्यात्मा पुरुषों की गति (स्वर्गलोक) प्राप्त करने पर उनके पुत्र **प्रह्लाद**, विनीत जनों के मनों को आह्लाद देते हुए, समुद्ररशना पृथ्वी पर शासन करने लगे ॥ १ ॥

**नितान्तभक्त्या भगवत्युपेन्द्रे सत्वप्रधानैश्च गुणैरगण्यैः ।**
**मनीषिणोऽमंसत मर्त्यमूर्तिं प्रह्लादमेव क्षितिपालमेनम् ॥ २ ॥**

असंख्य सत्वगुण प्रधान गुणों से और भगवान् विष्णु में आत्यन्तिक भक्ति होने से राजा प्रह्लाद को बुद्धिमान् लोग मनुष्य-शरीरधारी प्रह्लाद ही मानते थे ॥ २ ॥

**गोविन्दराजं रजसोज्झितात्मा तनूजमात्मीयपदेऽभिषिच्य ।**
**यशोवदातैः सुकृतैरुपात्तैः पौरन्दरे धाम्नि स निर्ववार ॥ ३ ॥**

रजोगुण से विमुक्त मनवाले प्रह्लाद ने, राज्य-पद पर अपने पुत्र **गोविन्दराज** को प्रतिष्ठित करके, अपने अर्जित यशःशुभ्र पुण्यों के कारण इन्द्रपद प्राप्त किया ॥ ३ ॥

**गोविन्दराजादजनि प्रवीरः स वीरनारायणनामधेयः ।**
**जनातिगैर्यं जनताः प्रतापैर्नारायणांशं नररूपमाहुः ॥ ४ ॥**

गोविन्दराज के वीर **वीरनारायण** नामक पुत्र हुए जिनको लोग अलौकिक प्रताप के कारण नारायण के अंश नर रूप मानते थे ॥ ४ ॥

**द्विषद्भटस्यारभटीकुठारस्तस्मादभूद् वाग्भट उद्भटश्रीः ।**
**प्रत्याहरद् यो यवनान् निगृह्य रणे रणस्तम्भपुरं प्रवीरः ॥ ५ ॥**

वीरनारायण के अत्यन्त वीर और उत्कृष्ट लक्ष्मीवाले **वाग्भट** नामक पुत्र हुए जिन्होंने युद्ध में यवनों को परास्त करके रणस्तम्भपुर (रणथम्भौर का दुर्ग और नगर) वापस लिया ॥ ५ ॥

**जैत्रो रिपूणां समराङ्गणेषु तस्मात् सुतोऽजायत जैत्रसिंहः ।**
**सुरेन्द्रलोकादपि लोभनीयाञ्चकार यः सिंहपुरीं नृसिंहः ॥ ६ ॥**

वाग्भट के, युद्धक्षेत्र में शत्रुओं को जीतनेवाले पुत्र नर-सिंह **जैत्रसिंह** हुए जिन्होंने स्वर्गपुरी से भी सुन्दर सिंहपुरी बसाई ॥ ६ ॥

**सम्यग्विवेकादिव शुद्धबोधः सत्वप्रकर्षादिव हृत्प्रसादः ।**
**जगत्त्रयोद्गीतयशःप्रशस्ति र्हम्मीरदेवोऽजनि जैत्रसिंहात् ॥ ७ ॥**

जिस प्रकार सम्यग् ज्ञान से विशुद्ध आत्म-बोध उत्पन्न होता है और सत्वगुण के आधिक्य से चित्त-प्रसाद उत्पन्न होता है, उसी प्रकार जैत्रसिंह से **हम्मीरदेव** उत्पन्न हुए जिनके यश की प्रशंसा आज भी तीनों लोकों में गाई जाती है ॥ ७ ॥

---

(५) आरभटी औद्धत्यम् ।

**आयोधनेष्वेव धनञ्जयाद्या विश्राणनेष्वेव दधीचिमुख्याः ।**
**धर्मात्मजाद्याः खलु धर्ममात्रे सर्वत्र वीरः स तु भूरिसत्त्वः ॥ ८ ॥**

अर्जुन आदि केवल युद्धवीर थे। दधीचि आदि केवल दानवीर थे। युधिष्ठिर आदि केवल धर्मवीर थे। किन्तु महान् पराक्रमी हम्मीरदेव एक साथ युद्धवीर, दानवीर और धर्मवीर थे ॥ ८ ॥

**चित्रैश्चरित्रैः प्रथितस्य यस्य सम्भावितस्यापि विशालशीलैः ।**
**गुणोच्चयं वर्णयतां कवीनां वाणी न सत्यव्रतमुज्झति स्म ॥ ९ ॥**

(प्रायः कवियों के वर्णन में थोड़ी बहुत अत्युक्ति होती ही है, किन्तु) नाना प्रकार के श्लाघ्य चरित्रों के कारण विख्यात और विशाल शील वाले तथा महापुरुषों द्वारा भी सम्मानित हम्मीरदेव के गुण-समूह का वर्णन करने वाले कवियों की वाणी सत्यव्रत को जरा भी नहीं छोड़ती ॥ ९ ॥

**आश्चर्यमस्याऽवनिनायकस्य ज्वलत्प्रतापज्वलनोऽनुवेलम् ।**
**विपक्षनारीनयनाम्बुपूरैः प्रपूर्यमाणः परिवृद्धिमाप ॥१०॥**

आश्चर्य है कि राजा हम्मीर की देदीप्यमान प्रतापाग्नि, शत्रु-स्त्रियों की अश्रुधारा द्वारा सिक्त होने पर भी, निरन्तर प्रज्वलित ही होती गई ! ॥१०॥

**उच्चैस्तया संस्तुतमेत्य दूराद् यशःपताकाभिरलङ्कृतश्च ।**
**स्थितिं दधानः क्षमयोपरुद्धामसौ स्ववंशध्वजवच्चकाशे ॥११॥**

अत्यन्त उन्नत पद प्राप्त करके, यश-रूपी पताका से सुशोभित होकर और दयार्द्र अन्तःकरण से युक्त होकर हम्मीरदेव, अत्यन्त उन्नत, पताका से शोभित और पृथ्वी के भीतर स्थित मूल-भाग वाले अपने वंश के ध्वज-दंड के समान सुशोभित हुए ॥११॥

**फलन्ति चिन्तामणिकामधेनुकल्पद्रुमाः काममर्त्यलोके ।**
**मनुष्यलोके तु मनीषितानि हम्मीर एकः फलति स्म नित्यम् ॥१२॥**

चिन्तामणि रत्न, कामधेनु और कल्पवृक्ष तो स्वर्गलोक में ही वाञ्छित फल देते होंगे; मनुष्य लोक में तो अकेले हम्मीरदेव ही नित्य लोगों की इच्छाओं को पूर्ण करते थे ॥१२॥

**उभौ प्रतापेन पतङ्गवह्नी जितौ विलोक्य स्फुटमस्य कीर्तिः ।**
**एकं विजित्य प्रतिपक्षमिन्दुमन्वेषयन्ती भ्रमति द्वितीयम् ॥१३॥**

सूर्य और अग्नि इन दोनों को हम्मीर के प्रताप द्वारा विजित देखकर हम्मीर की शुभ्र कीर्ति अपने प्रतिपक्षी एक चन्द्रमा को जीतकर दूसरे चन्द्रमा की खोज में सर्वत्र घूम रही है ॥१३॥

**हम्मीरदेवस्य गुरुप्रतापज्वालाभिरायातु ननु द्रवत्वम् ।**
**इतीव हैमं जगदण्डमप्सु निवेशितं बुद्धिमता विधात्रा ॥१४॥**

कहीं हम्मीरदेव के तीव्र प्रताप के ताप से यह ब्रह्माण्ड पिघल न जाय, यह सोचकर बुद्धिमान् विधाता ने इस सुवर्णमय ब्रह्माण्ड को जल में रख छोड़ा (ब्रह्मा ने पहले जल का निर्माण किया और फिर उसमें बीज छोड़ा जिससे सुवर्णमय ब्रह्माण्ड बना) ॥१४॥

---

(१४) 'अप एव ससर्जादौ तासु बीजमवासृजत्। तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥' इति मनुः।

**समुद्रनेमिं स विजित्य वीरः कृत्वाऽवनीशान् करदान् क्रमेण ।**
**उपाद्रवद् वाजिबलेन दृप्यद्वरूथिनीकांस्तरसा तुरुष्कान् ।।१५।।**

वीर हम्मीरदेव ने समुद्र-रशना पृथ्वी को जीतकर क्रमशः राजाओं को कर देनेवाला बनाया और अपनी अश्व-सेना द्वारा गर्वयुक्त सेना वाले यवनों को वेग से खदेड़ भगाया ।।१५।।

**शकान् निराकृत्य बकानुकारान् स्वपौरुषेणैव स राजहंसः ।**
**पद्माकरं शीलितसाधुचक्रं सुखेन दिल्लीनगरं जगाहे ।।१६।।**

जिस प्रकार राजहंस बगुलों को भगा कर साधु पुरुषों द्वारा सेवित तथा कमलों से सुशोभित सरोवर में विहार करता है, उसी प्रकार हम्मीर रूपी राजहंस ने अपने पराक्रम से यवन-रूपी बगुलों को भगा कर साधु पुरुषों के समूह से सेवित और लक्ष्मी से सुशोभित दिल्ली नगर पर अधिकार कर लिया ।।१६।।

**सैन्यानि विद्राव्य स यावनानि दूरन्तमांसीव समुद्धतानि ।**
**निजां रणस्तम्भपुरीं नृदेवो दिवं दिवानाथ इवारुरोह ।।१७।।**

जैसे सूर्य अन्धकार को दूर करके आकाश में चढ़ता है, वैसे ही नरदेव हम्मीरदेव, यवनों की सेनाओं को भगाकर, अपनी रणस्तम्भपुरी में लौट आए ।।१७।।

**नाना दिगन्ताहृतरत्नकूटैस्तेनापि शक्रप्रतिमेन भर्त्रा ।**
**विडम्बयामास कुबेरगुप्तां पुरीं ततोऽसावमरावतीञ्च ।।१८।।**

रणस्तम्भपुरी, नाना दिशाओं से लाए गये रत्नशिखरों से शोभित होने के कारण कुबेर की अलकापुरी का, और इन्द्र के समान प्रतापी स्वामी होने के कारण इन्द्र की स्वर्गपुरी का उपहास करती थी ।।१८।।

**नियोचितस्तेन सदाऽधिकारी सदाधिकारी ववृते न कश्चित् ।**
**अनीतयस्तेन सुनीतिभाजा प्रजाः प्रकामं प्रभुणा बभूवुः ।।१९।।**

हम्मीरदेव ने सदा जिस अधिकारी को नियुक्त किया वह कभी भी सज्जनों को कष्ट देने वाला सिद्ध नहीं हुआ । सुनीति को अपनाने वाले स्वामी के कारण प्रजा को कभी अकाल का भय नहीं हुआ ।।१९।।

**करावलम्बं वितरन् प्रजानां करग्रहं नाम करोतु सम्यक् ।**
**इदं त्वयोग्यं जगतीपतिर्यद् बबन्ध मित्रं रिपुवद् गुणेन ।।२०।।**

हम्मीरदेव प्रजा को सदा अपने कर का अवलम्बन (हाथ का सहारा) देते थे अर्थात् प्रजा की सहायता के लिये सदा तत्पर रहते थे अतः यदि वे प्रजा से भी कर ग्रहण करते थे तो यह उचित ही था । किन्तु यह अनुचित था कि राजा हम्मीर ने मित्र (मित्र; सूर्य) को भी अपने गुणों (गुण; रस्सी) से शत्रु के समान बाँध लिया । (हम्मीर मित्रों को अपने प्रेम-पाश में बाँधे रखते थे । जिस प्रकार हम्मीर प्रजा को करावलम्ब देते थे और प्रजा से कर-ग्रहण करते थे,

---

(१९) सदा अधिकारी, सतामाधिकारी । अनीतयः ईतिरहिताः ।

उसी प्रकार सूर्य भी दिन पर प्रजा को अपने करों (किरणों) का सहारा देकर सायंकाल करों को समेट लेते थे। अतः सूर्य हम्मीर के प्रतिद्वन्द्वी हुए। इसलिये हम्मीर के प्रताप ने मित्र (सूर्य) को प्रतिपक्षी होने के कारण शत्रु के समान अपने गुणों (रस्सों) मे बाँध लिया अर्थात् हम्मीर के प्रताप के आगे सूर्य भी फीका पड़ गया) ॥२०॥

**समाप्तकृत्यः प्रशमादरीणां नृपः स्वपुर्यामनयन् नयज्ञः ।**
**कालं कियन्तं किल यन्त्रितोऽसौ समुत्सुकानां प्रणयात् प्रियाणाम् ॥२१॥**

शत्रुओं का दमन कर देने के कारण कार्य से निवृत्त नीति-कुशल राजा ने, अत्यन्त उत्सुक प्रियाओं के प्रेम-वन्धन के कारण, कुछ समय अपनी नगरी में विताया ॥२१॥

**पुरो हितेन स्वपुरोहितेन पुरस्कृतैर्भूमिसुरैः परीतः ।**
**नृपः प्रतस्थे सहपट्टराज्ञ्या स पट्टनाख्यं पुटभेदनं तत् ॥२२॥**

सदा हित करने वाले राजपुरोहित जिनके प्रमुख थे ऐसे ब्राह्मणों से घिरे हुए राजा हम्मीरदेव ने अपनी पटरानी के साथ पट्टन (केशवराय पाटन) नामक नगर की ओर प्रस्थान किया ॥२२॥

**ययुश्च तस्यानुपदं सदस्याः सदीशितुश्चित्तविदो वयस्याः ।**
**मन्त्रप्रधानाः सचिवास्तथान्ये नियोजिताः कोशगृहाधिकारे ॥२३॥**

उनके पीछे-पीछे सभासद, श्रेष्ठ स्वामी की चित्तवृत्ति को जाननेवाले मित्र, मन्त्रकुशल मन्त्रीगण और कोषाधिकारीगण चले ॥२३॥

**निरामया नीरधितीरजाताः समीरिता वल्लभपालमुख्यैः ।**
**जग्मुर्युवानः शतशो विनीता जवेन वाहा जितवैनतेयाः ॥२४॥**

समुद्रतट पर उत्पन्न होने वाले और अपने वेग से गरुड़ को भी जीतनेवाले सैकड़ों जवान और निरोगी घोड़े अपने प्रिय सवारों से प्रेरित होकर विनयपूर्वक चले ॥२४॥

**उत्तुङ्गतार्तजितशैलशृङ्गं मातङ्गसैन्यं शनकैः प्रतस्थे ।**
**कलिङ्गराजेन कलिप्रशान्त्यै बलीयसोऽमुष्य बलीकृतं यत् ॥२५॥**

अपनी ऊँचाई से पर्वतों के शिखरों को मात करनेवाली हाथियों की सेना, जिसे कलिंग देश के राजा ने कलह (युद्ध) की शान्ति (सन्धि) के लिए बलवान् हम्मीरदेव को भेंट किया था, धीरे-धीरे चली ॥२५॥

**अथापतत् पत्त्रिजवैः स वाहैस्तीरं तिलद्रोणितरङ्गवत्याः ।**
**तरङ्गसङ्गत्वरगन्धवाहस्निग्धीकृतच्छायतमालमालम् ॥२६॥**

पक्षियों के समान वेग से हवा में उड़ने वाले घोड़ों से युक्त राजा हम्मीरदेव तिलद्रोणि (दूणी) नदी के, लहरों का आलिंगन करने वाले वायु के कारण स्निग्धच्छाया वाले तमाल वृक्षों की पंक्ति से शोभित तीर पर पहुँचे ॥२६॥

---

(२५) कलिः कलहः। बलीकृतमुपहारीकृतम्।

**नदीं तिलद्रोणिमदीनसत्वः स तां जगाहे गहनप्रवाहाम् ।**
**यस्याः स्पृशन् पावनमम्बुबिन्दुं पापोऽपि तापत्रितयं जहाति ॥२७॥**

पराक्रमी राजा ने गहरे प्रवाह वाली तिलद्रोणि नदी में स्नान किया, जिस नदी के पवित्र जलबिन्दु का स्पर्श करके पापी भी त्रिविध ताप (आध्यात्मिक, आधिभौतिक और आधिदैविक) से मुक्त हो जाता है ॥२७॥

**स्फुरन्महानीलमणीमनोज्ञं कदम्बमालाकलितोपकण्ठम् ।**
**सुपर्णसम्पादितसौम्यपादच्छायं मयूरच्छदचित्रमौलिम् ॥२८॥**
**उपात्तरत्नैः कटकैरशून्यं पीताम्बरोत्तुङ्गकलेवराढ्यम् ।**
**मुखानिलापूरितवेणुरन्ध्रनिनादसंमोहितवन्यरामम् ॥२९॥**
**श्रियं दधानं भृगुपादजानां हिरण्यगर्भं दधतं तथान्तः ।**
**विलोकयामास स पारियात्रं गिरिं मुरारातिमिवाऽवनीशः ॥३०॥**

देदीप्यमान नीलम मणियों से मनोहर अथवा देदीप्यमान नीलमणि के समान श्याम कान्ति से शोभित ('नीलमणि' भगवान् कृष्ण का नाम भी है), कदम्वमाला से शोभित कण्ठ वाले, अपने वाहन गरुड़ में प्रतिविम्बित सुन्दर पैरों की कान्ति वाले, मयूरपंख की शोभा को मस्तक पर धारण करने वाले, हाथों में रत्नजड़ित कड़े पहनने वाले, उन्नत शरीर में पीताम्वर (पीला रेशमी वस्त्र) धारण करने वाले, मुख की वायु से बजाई गई मुरली के छेदों से निकलनेवाली ध्वनि से गोपियों का मन मोहित करने वाले, महर्षि भृगु के पादप्रहार जन्य चिह्न को लक्ष्मी के समान वक्षःस्थल पर धारण करने वाले और हिरण्यगर्भ ब्रह्मा को अपने नाभि-कमल के अन्दर धारण करने वाले भगवान् कृष्ण के समान, देदीप्यमान नीलम मणियों से मनोहर, कदम्ब वृक्षों की पंक्ति से शोभित उपत्यका वाले, सुन्दर पत्तों वाले वृक्षों की घनी छाया से शोभित, अपने शिखर पर नाचने वाले मयूरों के रंग-विरंगे पंखों से सुन्दर, रत्नों की खान वाले मध्यभाग से युक्त, उच्च शिखरों पर छाये हुए पीले आकाश से शोभित, गुफाओं से निकलने वाले वायु से वजाये गये बाँसों के छेदों से निकलने वाली ध्वनि से वन की स्त्रियों को मोहित करने वाले, तटहीन प्रताप के पास उगने वाले वृक्षों की शोभा को धारण करने वाले और अपने गर्भ में सोने की खान को धारण करने वाले पारियात्र (अरावली) पर्वत को हम्मीरदेव ने देखा ॥२८–३०॥

**सात्राजितीसौहृदभङ्गभीरोः प्राक् पारिजातं हरतो मुरारेः ।**
**पुलोमजावर्धितमत्सरेण वृत्रद्विषा यत्र रणः प्रवृत्तः ॥३१॥**

प्राचीन काल में, सत्राजित् की पुत्री सत्यभामा के प्रणयभंग के भय से, स्वर्ग से पारिजात हर लाने वाले भगवान् कृष्ण से, अपनी पत्नी शची द्वारा बढ़ाये गये क्रोध वाले इन्द्र ने इस पारियात्र पर्वत पर युद्ध छेड़ा था ॥३१॥

---

(२८) सुपर्णानि सुन्दराणि वृक्षपत्राणि । सुपर्णः गरुत्मान् ।
(२९) कटकं कराभूषणमद्रिनितम्बश्च । अम्वरमाकाशं वस्त्रञ्च ।
(३०) भृगुः महर्षिभृगुः अतटप्रपातश्च ।
(३१) सात्राजिती सत्राजितस्य कन्या कृष्णपत्नी सत्यभामा ।

**ताक्ष्यस्य पक्षातिरयात् पतिष्णोः सुरेन्द्रनागस्य शरीरभारात् ।**
**अवाप्तभङ्गानि यदस्य शृङ्गाण्यतोऽरुणन्नारुणवर्त्म शैलः ॥३२॥**

झपटने वाले गरुड़ के पंखों के वेग से और इन्द्र के ऐरावत हाथी के शरीर के बोझ से इस पारियात्र पर्वत के शिखर टूट गये थे, यही कारण था कि इस पर्वत ने सूर्य के मार्ग को नहीं रोका ॥३२॥

**हृत्वा यशोभिः सह वृत्रशत्रोः सुरद्रुमालीं सुरभिं सभार्यः ।**
**यस्मिन् विशश्राम भवश्रमार्तविश्रामभूमिर्भगवान् मुकुन्दः ॥३३॥**

वृत्रशत्रु इन्द्र के यश के साथ-साथ उसके सुगन्धित पारिजात वृक्ष को हर कर, सत्यभामा के साथ भगवान् कृष्ण ने, जो स्वयं मुकुन्द (मोक्षदाता) होने के कारण संसारदुःख से पीड़ित मनुष्यों की विश्रामभूमि हैं, इस पारियात्र पर्वत पर विश्राम किया था ॥३३॥

**स भूभृतं भूमिभृतां वरीयान् निषेवितं नाकसदां निकायैः ।**
**बभ्राम बिभ्राणमनल्पतीव्रतपोजुषां पावनपर्णशालाः ॥३४॥**

राजाओं में श्रेष्ठ हम्मीरदेव, देव-वृन्दों से सेवित तथा उग्र तप करने वाले ऋषियों की पवित्र पर्णकुटियों को धारण करने वाले उस पारियात्र पर्वत पर घूमे ॥३४॥

**तस्यान्तरे शान्तरजाः स राजा सुदुर्लभालोकनमन्यलोकैः ।**
**व्यलोकयद् बिल्वपलाशिमूले बिल्वेश्वरं वल्लभमीश्वरायाः ॥३५॥**

तत्पश्चात् रजोगुण को जीतने वाले राजा हम्मीर ने, अन्य पुरुषों के लिये दुर्लभ-दर्शन पार्वती-प्रिय बिल्वेश्वर महादेव के, जो एक बिल्ववृक्ष की जड़ के पास, विराजमान थे, दर्शन किये ॥३५॥

**बिडौजसं वीर्यवता विजित्य महं महीध्रस्य महामहिम्नः ।**
**विधित्समानेन सनातनेन यः स्थापितः पावितविश्वलोकः ॥३६॥**

महा बलवान् सनातन पुरुष भगवान् कृष्ण ने , इन्द्र को जीत कर, विजयोत्सव द्वारा महान् महिमा वाले पारियात्र पर्वत का गौरव बढ़ाने के निमित्त, विश्व को पवित्र करने वाले बिल्वेश्वर महादेव को वहाँ स्थापित किया था ॥३६॥

**विधाय भक्त्या विधिवत् सपर्यां प्रजेश्वरः पञ्चमुखस्य तस्य ।**
**वितीर्य तीर्थोचितभूरिदानमानन्दयद् ब्राह्मणवर्गमग्र्यम् ॥३७॥**

राजा हम्मीरदेव ने उन विल्वेश्वर महादेव की भक्तिपूर्वक विधिवत् पूजा की और तीर्थोचित विपुल दान देकर प्रथमवर्ण ब्राह्मण-वर्ग को आनन्दित किया ॥३७॥

**ततः पुरं षट्पुरनामधेयमध्यास्त विध्वस्ततमोविकारः ।**
**यदाश्रयाद् बुद्धिभृतां नराणां षड्वैरिणो न स्वपुरं विशन्ति ॥३८॥**

तत्पश्चात् अपने तमोगुण (और अज्ञान) के विकार को नष्ट कर देने वाले हम्मीरदेव षट्पुर (खटकड़) नामक नगर में पहुँचे जहाँ रहने वाले बुद्धिमान् पुरुषों के शरीर में षड् वैरी (काम, क्रोध, लोभ, मोह, मद और मात्सर्य रूपी छ शत्रु) प्रवेश नहीं कर पाते ॥३८॥

**स पट्टनाख्यं नगरं पटीयः फलप्रकर्षे विहितक्रियाणाम् ।**
**अलञ्चकाराशु हृतान्तरायः सुनीतिवर्त्मेव मनःप्रसादः ॥३९॥**

जिस प्रकार (सत्वगुण जन्य) मनःप्रसाद विघ्नों को दूर करके सुनीतिमार्ग को अलंकृत करता है, उसी प्रकार विघ्नों को दूर करने वाले एवं सत्वगुणसम्पन्न राजा हम्मीर ने विहित कर्मों का उत्तम फल देने में निपुण पट्टन (केशवराय पाटन) नामक नगर को शीघ्र ही अलंकृत किया ॥३९॥

**सुराङ्गनावर्जितपारिजातप्रसूनपर्याप्ततरङ्गशोभा ।**
**चर्मण्वती शर्ममयप्रवेणी प्रवीणयामास यशांसि यस्य ॥४०॥**

(स्नान करने के लिये आई हुई) स्वर्ग की देवियों द्वारा लाये गये पारिजात पुष्पों से जिसकी लहरों की शोभा बढ़ रही है ऐसी मंगलमय प्रवाह वाली चर्मण्वती (चम्बल) नदी हम्मीरदेव के यश को अपने कल-कल शब्दों द्वारा मानों वीणा बजा कर गाया करती है ॥४०॥

**चर्मण्वतीवारिणि धर्मपत्न्या समं समाप्याऽभिषवं स वीरः ।**
**संसिद्धिदात्रीं विमलोपचारैरानर्च मृत्युञ्जयमञ्जुमूर्तिम् ॥४१॥**

वीर हम्मीर ने अपनी धर्मपत्नी के साथ चर्मण्वती के जल में स्नान करके उत्तम सिद्धि देने वाली मृत्युंजय महादेव की सुन्दर मूर्ति की शुद्ध उपचारों से पूजा की ॥४१॥

**भासामथो भर्तरि सोपरागे विश्राणनेषु प्रथितानुरागः ।**
**अन्यैरतुल्योऽपि तुलामुदारः सधर्मदारः सुखमारुरोह ॥४२॥**

उस समय सूर्यग्रहण होने पर, दान देने में अत्यन्त अनुरागी उदार हम्मीरदेव, अन्य पुरुषों से अतुलनीय होने पर भी, अपनी धर्मपत्नी के साथ सुख से तुला पर चढ़े ॥४२॥

**स्वच्छत्वसाद्‌गुण्यसुवृत्तताभिर्मुक्तामणीनां गुरुवंशजानाम् ।**
**साम्यं समीचीनमनेन तावत् परन्तु नाऽसौ नृपतिः सरन्ध्रः ॥४३॥**

स्वच्छता, सद्‌गुणता (मोती उत्तम गुण अर्थात् सूत्र में पिरोये जाते हैं; हम्मीर में उत्तम गुण थे), सुवृत्तता (मोतियों में सुन्दर गोलाई होती है; हम्मीर में सच्चरित्रता थी) आदि के कारण उत्तम वंश में उत्पन्न होने वाले मोतियों में (जो तुला के दूसरे पलड़े में चढ़ाये गये थे) और उत्तम वंश में उत्पन्न हम्मीरदेव में तुलना के लिये समानता उचित थी, किन्तु केवल एक अन्तर था—वह यह कि मोती 'सरन्ध्र' (छेद वाले) थे और हम्मीर के राज्य में कोई 'रन्ध्र' (छेद या कमी) नहीं था ॥४३॥

**कामं महार्घैरपि गौरवाढ्यैर्वज्रैः समग्रा तुलना न राज्ञः ।**
**स केवलं वैरिणि वज्रतुल्यो मित्रेऽतिमात्रं मृदुलस्वभावः ॥४४॥**

(तुला के दूसरे पलड़े पर जो हीरे चढ़ाये गये थे उन) बहुमूल्य और भारी वज्रों (हीरों) में और अमूल्य एवं गौरवान्वित हम्मीर में सम्पूर्ण समानता नहीं थी क्योंकि हम्मीर केवल शत्रुओं के लिये ही वज्रतुल्य थे, किन्तु मित्रों के लिये अत्यन्त कोमल थे ॥४४॥

---

(४२) उपरागो ग्रहणम् ।
(४४) वज्रमिन्द्रायुधं हीरकञ्च ।

**आरोप्यमाणानि तुलां धनानि यथा यथा वृद्धिमवापुरस्य ।**
**तथा तथा चेतसि वैदिकानां मनोरथा नैव मर्मुर्द्विजानाम् ।।४५।।**

तुला के दूसरे पलड़े पर चढ़ाये जाने वाले हीरे, मोती, सुवर्ण आदि धन जैसे-जैसे बढ़ते गये वैसे-वैसे ही वैदिक कर्मकाण्डी ब्राह्मणों के चित्तों में बढ़ने वाले मनोरथ नहीं समाये ।।४५।।

**विश्वम्भरोऽस्मिन् निवसन्नजस्रं देहेऽपि तावद् गुरुतां निधत्ताम् ।**
**भूयिष्ठमित्थं मिलिताः सभायामाशासते स्म क्षितिदेवमुख्याः ।।४६।।**

सभा में एकत्रित अनेक ब्राह्मण-श्रेष्ठ यह प्रार्थना कर रहे थे कि विश्वंभर भगवान् विष्णु जो राजा में निरन्तर निवास करते हैं कृपया इनके शरीर को भी भारी बना दें। (राजा को भगवान् का अंश माना गया है। अथवा हम्मीर भगवान् के भक्त थे अतः वे निरन्तर उनके हृदय में निवास करते थे) ।।४६।।

**स स्थूललक्षः सुमनास्तदानीं स्थूलं वपुः स्वं बहुमन्यते स्म ।**
**व्यायामलीलाविभवान् निकामं कुक्षिं कृशं केवलमन्वशोचत् ।।४७।।**

दानवीर महात्मा हम्मीर ने उस समय अपने स्थूल शरीर को बहुत अच्छा माना। केवल व्यायाम करने के कारण पतली कमर के लिये ही उन्हें सोच हुआ ।।४७।।

**उच्चैस्तरोऽभून् नृपतिस्तदानीं भरातिनम्रात् किल रत्नराशेः ।**
**तत्तादृगुच्चैःशिरसां जनानामुच्चैःपदारोहणमेव युक्तम् ।।४८।।**

उस समय तुला के दूसरे पलड़े के, रत्नसमूह के भार के कारण, नीचे हो जाने से राजा हम्मीर ऊँचे उठ गये। उन जैसे उन्नत शिर वाले महापुरुषों के लिये उच्च पद प्राप्त करना ठीक ही था।४८।।

**नीता नितम्बस्तनभारभाजा मुदं कृशेनापि शरीरकेण ।**
**आरोपितास्तत्र तुलां सुरत्नैरन्या महिष्योऽपि महीश्वरेण ।।४९।।**

राजा हम्मीर ने, कृश शरीर होने पर भी नितम्ब और स्तनों के भार के कारण प्रसन्न होने वाली अन्य रानियों को भी उत्तम रत्नों से तुलवाया ।।४९।।

**रत्नानि यत्नेन तुलाधृतानि कुलागतेभ्यः प्रथमं द्विजेभ्यः ।**
**विभज्य सम्प्राप्तवतो दिगन्तात् सम्भावयामास यथार्हमन्यान् ।।५०।।**

तुलादान के उन रत्नों को (एवं मोती, स्वर्ण आदि को) बाँट कर राजा ने पहले कुलपरम्परागत ब्राह्मणों का और फिर अन्य देशों से आये हुये ब्राह्मणों का यथोचित सत्कार किया ।।५०।।

**शुभौ वसूनामधिपौ तदानीं तुलाधिरूढौ तरणिर्नृपश्च ।**
**सङ्कोचयामास करं तमोन्धः पूर्वस्तयोर्मुक्तकरः परोऽभूत् ।।५१।।**

उस समय वसु (आदित्य देवता; धन) के स्वामी एवं कल्याणकारी, सूर्य और राजा हम्मीर ये दोनों ही तुला (तुलाराशि; तराजू) पर अधिरूढ़ हुये। उनमें से प्रथम ने (सूर्य ने) तम (राहु)

---

(४७) स्थूललक्षः दानशौण्डः।
(५१) वसूनां देवानां धनानाञ्च। तुलायां तुलाराशौ तुलायाञ्च। तमोऽन्धस्तमसा राहुणा अन्धो ग्रस्तः।

से अन्ध (ग्रस्त) होकर (अज्ञानान्ध तामसी कंजूस की तरह) अपने करों (किरणों; हाथों) को खींच लिया, किन्तु दूसरे ने (हम्मीर ने) मुक्तकर होकर (हाथ खोलकर) दान दिया (अथवा कर माफ़ कर दिया) ।।५१।।

**हम्मीरदेवेन वितीर्यमाणाः पयः सुरभ्यः करिणो मदाम्भः ।**
**यत् तत्यजुस्तेन सरित्समूहः शरत्कृतं कार्श्यमपोहति स्म ।।५२।।**

हम्मीरदेव द्वारा दान दी गई गायों से और दान दिये गये हाथियों से, क्रमशः जो दूध की और मद-जल की धारायें वहीं उनके कारण नदियों की, शरद्-ऋतु में होने वाली जल की कमी, दूर हो गई ।।५२।।

**उपप्लवोऽभूत् स कृतोपकारः कुर्वन् शरीरावरणं खरांशोः ।**
**तुरङ्गदानावसरे न यस्मात् सस्मार देवोऽयममुष्यरथ्यान् ।।५३।।**

ग्रहण के समय राहु ने सूर्यविम्ब को ढक लिया था, किन्तु सूर्य ने इसे अपना उपकार समझा क्योंकि इस आवरण के कारण घोड़ों के दान के समय हम्मीरदेव को सूर्य के घोड़े याद नहीं आये ।।५३।।

**गजाधिपाः केऽपि हयाधिपत्यमन्ये गता भूपतयः परे च ।**
**किमन्यदस्मिन् वितरत्यभीक्ष्णं वित्तेशतां विप्रगणाः प्रपन्नाः ।।५४।।**

हम्मीर देव के निरन्तर दान देते रहने के कारण कोई गजपति, कोई अश्वपति और कोई भूपतिं बन गये; अधिक क्या कहें, विप्र लोग भी वित्तेश (कुबेर) बन गये ।।५४।।

**मुक्ताकलापे पतिता द्विजानां प्रसूनदामभ्रमतो द्विरेफाः ।**
**विलेपनामोदविलीनचित्ता नोत्पेतुरुच्चैरपि वार्यमाणाः ।।५५।।**

ब्राह्मणों के मोतियों के हार पर पुष्पमाला के भ्रम से भ्रमर टूट पड़े और चन्दन के तिलक की सुगन्ध से मस्त होकर ज़ोरों से हटाने पर भी नहीं हटे ।।५५।।

**कस्यापि कुत्रापि कदाचिदेव याल्पं प्रसूते स्म वसु प्रसन्ना ।**
**वनीयकानामवनिस्तदानीं सा रत्नसूः सर्वत एव जाता ।।५६।।**

जो भूमि प्रसन्न होने पर किसी किसी के लिये कहीं-कहीं कभी-कभी थोड़ा सा धन उत्पन्न करती है वह भूमि उस समय याचकों के लिये भी सदा और सर्वत्र रत्नों को उत्पन्न करने लगी ।।५६।।

**अशेषदानानि स दीनबन्धुरशेषयित्वा स्वयमेव विज्ञः ।**
**न्यवेदयद् वेदविदोऽवदातानुपक्रमायाऽद्भुतसप्ततन्तोः ।।५७।।**

बुद्धिमान् और दीनवत्सल हम्मीरदेव ने, जब सब प्रकार के दान दिये जा चुके तब वेदज्ञ और पुण्यात्मा ब्राह्मणों से अद्भुत यज्ञ का आयोजन करने की प्रार्थना की ।।५७।।

---

(५३) उपप्लवो ग्रहणम् ।

**कुण्डान्यखण्डानि समेखलानि समानि सम्यग् विरचय्य विप्राः ।**
**आरेभिरे कोटिमखं कृतज्ञा मुहूर्तमासाद्य मनोऽनुकूलम् ॥५८॥**

वेदविधि में निपुण ब्राह्मणों ने अपने मन के अनुकूल शुभ मुहूर्त में अखण्ड, बराबर और मेखला युक्त यज्ञ-कुण्ड बनाकर कोटियज्ञ (वह यज्ञ जिसमें एक करोड़ आहुतियाँ दी जाती हैं) प्रारम्भ किया ॥५८॥

**विशुद्धवर्णोज्वलसामिधेनीसंस्कारमासाद्य समेधमानः ।**
**समिद्भिराज्यैरपि हूयमानः स सप्तजिह्वोऽपि सहस्रजिह्वः ॥५९॥**

वेद की विशुद्ध वर्णों से उज्वल 'सामिधेनी' नामक ऋचाओं से (वे ऋचायें जिनका पाठ करके समिधाओं की आहुतियाँ दी जाती हैं) संस्कृत होकर समिधाओं के हवन से प्रवृद्ध एवं हव्य पदार्थ और घृत की आहुतियों से प्रज्वलित यज्ञ के अग्निदेव 'सप्तजिह्व' कहलाने पर भी 'सहस्र-जिह्व' होकर (सहस्र ज्वालाओं के साथ) प्रकट हुए ॥५९॥

**विशुद्धमन्त्रेरितहव्यगन्धं घ्राणोपयुक्तं हरितां दधानः ।**
**वितानवैश्वानरगन्धवाहः सुधाभुजां संसदमाचकर्ष ॥६०॥**

विशुद्ध वेदमन्त्रों द्वारा यज्ञाग्नि में हवन किये गये हव्य की दिशाओं की नासिका को अत्यन्त प्रिय लगनेवाली सुगन्ध को धारण करने वाला यज्ञाग्नि का हव्यगन्धित वायु देवताओं की सभा को (आहुतियाँ ग्रहण करने के लिये) खींच लाया ॥६०॥

**तस्मिन् मखे मेध्यतमोऽन्तरिक्षे समन्ततो यः समियाय धूमः ।**
**तमङ्कपालीकृतमिन्दुनाङ्कनाम्ना प्रसिद्धिं जनता निनाय ॥६१॥**

उस यज्ञ में यज्ञाग्नि का जो अत्यन्त पवित्र धूम आकाश में चारों ओर फैला उसे चन्द्रमा ने अपनी गोद में समेट लिया। जनता ने उसे चन्द्रबिम्ब के 'अंक' (चिह्न) के नाम से प्रसिद्ध किया ॥६१॥

**ते वीतविघ्नं विरचय्य वह्नेर्वषट्कृतैः प्रीणनमाप्तविप्राः ।**
**समापितं संसदि सप्ततन्तुं प्रदक्षिणीचक्रुरपेतशङ्काः ॥६२॥**

सत्यवादी ब्राह्मणों ने निर्विघ्न आहुतियों से अग्निदेव को प्रसन्न करके यज्ञ समाप्त हो जाने पर निःशंक होकर यज्ञकुण्ड की प्रदक्षिणा की ॥६२॥

**एवं स दाने विविधेऽध्वरे च निविष्टचेता विरतान्यकृत्यः ।**
**गतान्यनेकान्यपि वासराणि विशालकीर्तिर्न विदाञ्चकार ॥६३॥**

इस प्रकार विविध दान देने में और यज्ञ कराने में चित्त लगाने के कारण महा यशस्वी हम्मीरदेव अन्य सब कार्य भूल गये और अनेक दिन व्यतीत हो जाने का भी उन्हें ध्यान नहीं रहा ॥६३॥

---

(५९) समित्प्रक्षेपेण वह्निप्रज्वलने या ऋक् प्रयुज्यते सा सामिधेनी।

**ज्ञात्वा रणस्तम्भपुरं तदानीं विप्रोषितस्वामिकमिद्धवैरः ।**
**सहाऽश्ववारैरतिदुर्निवारैरलावुदीनस्त्वरितं प्रतस्थे ॥६४॥**

उस समय हम्मीरदेव को रणस्तम्भपुर से वाहर गया हुआ जानकर प्रवृद्ध वैर वाला अलाउद्दीन शीघ्र दुर्निवार घुड़सवारों के साथ रणस्तम्भपुर की ओर रवाना हुआ ॥६४॥

**पञ्चाशद्भिः सैन्धवानां सहस्त्रैरग्रस्कन्धे गन्धवाहस्यदानाम् ।**
**उलूग्खानः प्राणतुल्यो नृपस्य भ्राता भीमः शात्रवाणाञ्चचाल ॥६५॥**

आगे-आगे पचास हज़ार वायु के समान वेग वाले घोड़ों के साथ अलाउद्दीन का प्राणप्रिय भाई उलूगखाँ, जो शत्रुओं के लिये भयंकर था, रवाना हुआ ॥६५॥

**हम्मीरदेवनृपतेरपि मन्त्रिमुख्या विद्याभटप्रभृतयः सुचिरं विचार्य ।**
**माद्यन्मतङ्गजतुरङ्गमसङ्कुलानि निन्युः सपत्नपृतनाभिमुखं बलानि ॥६६॥**

राजा हम्मीरदेव के विद्याभट आदि मुख्य मंत्री भी अच्छी तरह सोच-विचार कर अपनी मदोत्कट हाथी तथा घोड़ों से युक्त सेना को शत्रुसेना के सामने ले गए ॥६६॥

**दिशि दिशि विनिवेशिताश्ववारः स्वयमपि सर्वत एव जागरूकः ।**
**यवनपतिसहोदरस्तदानीं जगरपुरे शिविरञ्चकार चारु ॥६७॥**

यवनों के स्वामी अलाउद्दीन के भाई ने जिसने सब दिशाओं में अपने घुड़सवार तैनात कर रक्खे थे और जो स्वयं भी सब ओर से सावधान था, जगरपुर में अपना सुन्दर शिविर बनाया ॥६७॥

**सैन्ययोर्मिलितयोः परस्परं सङ्गरः प्रववृते निरन्तरः ।**
**मार्गणैरुभयतो विनिर्गतैः पीयमानहरिदम्बरान्तरः ॥६८॥**

जब दोनों सेनायें आपस में मिलीं तब उनमें निरन्तर युद्ध होने लगा और दोनों ओर से चलाये गये बाणों ने दिशाओं के आकाश को पी लिया (ढक दिया) ॥६८॥

**सेनापतिः पृथुयशाः किल जैत्रसूनोर्बभ्राम सङ्गरभुवं रणरङ्गमल्लः ।**
**दानान्धगन्धगजगर्जिततर्जितेन विद्रावयन् यवननाथवरूथिनीशान् ॥६९॥**

दानजल की गन्ध से मत्त हाथियों की गर्जना के भय से म्लेच्छपति के सेनापतियों को भगा देनेवाले, जैत्रसिंह के पुत्र हम्मीरदेव के महान् यशस्वी सेनापति रणमल्ल, युद्धस्थल में, रणभूमि के मल्ल के समान निर्भय घूम रहे थे ॥६९॥

**उलूग्खाने प्राप्तभङ्गेऽयमाने सङ्ग्रामान्तं वीरवर्गप्रधाने ।**
**उत्तस्थेऽसौ सार्वभौमः शकानां सैन्येनान्तर्मन्युना हन्यमानः ॥७०॥**

वीर लोगों में प्रधान उलूगखाँ के युद्ध में हार कर भाग जाने पर म्लेच्छ-चक्रवर्ती अलाउद्दीन क्रोध से पीड़ित होकर आगे बढ़े ॥७०॥

**द्रुततरमतिरौद्रः पारसीकस्य भर्तुः प्रबलबलसमूहः सूचयन् भाव्यनर्थम् ।**
**परिधिरिव गरीयान् मण्डलञ्चण्डभानो र्नगरमरमरौत्सीच्चाहुवाणान्वयस्य ।।**

म्लेच्छपति अलाउद्दीन के अत्यन्त भयंकर और प्रवल सेनासमूह ने, भावी अनर्थ की सूचना देते हुए, चौहाण वंश के हम्मीरदेव के रणस्तम्भपुर नामक नगर को शीघ्र घेर लिया, जिस प्रकार एक वड़ी भारी परिधि सूर्यविम्व को घेर लेती है (सूर्य के चारों ओर घेरा सा दिखाई देना अशुभ माना जाता है) ।।७१।।

**अवनिः स्वयमीयुषी प्रकम्पं निजभर्तुर्व्यसनागमं समीक्ष्य ।**
**जनता यवनेशसैन्यभारे भृशमारोपयति स्म दूषणानि ।।७२।।**

स्वयं पृथ्वी भी, अपने स्वामी हम्मीर के भावी व्यसन का विचार करके हिल उठी (भूकम्प आना भी अशुभ माना जाता है) ; लोगों ने व्यर्थ ही में यवनपति की सेना पर यह दोष दिया कि यवनसेना के चलने से पृथ्वी हिल रही है ।।७२।।

**निर्घातोग्रस्वानमिश्रः समन्तादुल्कादण्डः प्रादुरासीत् प्रचण्डः ।**
**आग्नेयास्त्रं गोलकारावमिश्रं दुर्गान्तस्थैर्द्वेषिणां मन्यते स्म ।।७३।।**

चारों ओर भीषण शब्द करता हुआ एक प्रचण्ड तारा आकाश से टूट गिरा ( तारा टूटना भी अशुभ माना जाता है) ; किन्तु दुर्ग में रहनेवाले लोगों ने उसे शत्रुओं की विकट ध्वनि के साथ गोले छोड़ने वाले तोप की चमक और गर्जना समझा ।।७३।।

**जैत्रात्मजोऽपि जितभीतिरनन्यचेता निर्वर्त्य कृत्यमखिलं विधिनोपनीतम् ।**
**श्रुत्वापि दुर्गमुपरुद्धममित्रसैन्यैर्नातित्वरो निववृते निजपत्तनाय ।।७४।।**

जैत्रसिंह के पुत्र निर्भय हम्मीरदेव, अनन्यचित्त से सम्पूर्ण कार्य को विधिपूर्वक समाप्त करवा कर, अपने रणस्तम्भपुर दुर्ग को शत्रुओं की सेना से घिरा हुआ जानकर भी, नगर की ओर बहुत अधिक व्यग्रता से नहीं लौटे ।।७४।।

इति श्री सुर्जनचरितमहाकाव्ये एकादशः सर्गः ।

---

# द्वादशः सर्गः

**अथ वीक्ष्य पुरं परोपरुद्धं कुलभूपालपरम्परोपनीतम् ।**
**न जहौ निजमाननप्रसादं विमनाः सन्नपि मानवाधिनाथः ।। १ ।।**

इसके बाद, कुल-परम्परागत रणस्तम्भपुर को शत्रुओं से घिरा हुआ देखकर राजा हम्मीर-देव ने, दुःखी होकर भी, अपने मुख की प्रसन्नमुद्रा को नहीं छोड़ा ।। १ ।।

**अनुगृह्य वचोऽमृतेन पौरान् भृशमार्तानपि मर्त्यलोकभर्ता ।**
**स चिरात् सचिवैरुपास्यमानः समये संसदमाससाद शस्ते ।। २ ।।**

मर्त्यलोक के राजा हम्मीर ने अत्यन्त पीड़ित पुरवासियों को अपने वचनामृत से अनुगृहीत किया और फिर मुख्य मंत्रियों के साथ प्रशस्त समय में सभा में गये ।।२।।

**उपविष्टममुं निवेद्य तत्र प्रतिहारैरुपलम्भितप्रवेशः ।**
**अवदद् गिरमेत्य गाढगर्वामिथ सन्देशहरः शकाधिपस्य ।। ३ ।।**

सभा में आसीन राजा हम्मीर को निवेदन करके और उनकी आज्ञा पाकर प्रतिहारों ने म्लेच्छपति अलाउद्दीन के सन्देशवाहक राजदूत को सभा में प्रविष्ट किया और उसने हम्मीरदेव से इस प्रकार अत्यन्त गर्वपूर्ण वचन कहे ।। ३ ।।

**प्रथितः पृथुविक्रमः पृथिव्यां यवनानामधिभूरलावुदीनः ।**
**प्रहितोऽत्र हितोपदेशकारी भवतोऽहं भुवनस्य तेन भर्त्रा ।। ४ ।।**

अपने महान् पराक्रम के कारण पृथ्वी में विख्यात लोकपति म्लेच्छों के स्वामी अलाउद्दीन ने मुझे आपको हितकारक उपदेश देने के लिये आपके पास भेजा है ।। ४ ।।

**उदयं चरमाद्रिमन्तराऽस्यां वसुमत्यां निवसन्ति येऽवनीशाः ।**
**वितरन्ति कृषीबला इवास्य प्रसभास्कन्दनभीरवः करं ते ।। ५ ।।**

उदयाचल से लेकर अस्ताचल तक इस पृथ्वी में जितने राजा हैं वे सब, अलाउद्दीन के प्रबल आक्रमण से डरकर, किसानों के समान, इनको कर देते हैं ।। ५ ।।

**इह कश्चन योऽभिमानशाली नहि दित्सेत नराधिपोऽस्य दण्डम् ।**
**भवति स्वयमेव तस्य मूर्ध्नि प्रबलो दण्डधरो धराधिनाथः ।। ६ ।।**

जो कोई अभिमानी राजा सुलतान को कर नहीं देता उसके मस्तक पर स्वयं पृथ्वीपति अला-उद्दीन का प्रबल दण्ड पड़ता है ।। ६ ।।

**अविमर्शवशेन गर्वतो वा किमु भाविव्यसनस्य शासनाद् वा ।**
**मतिमानपि मूढधीरिव त्वं नृप जानासि हिताहिते न किञ्चित् ।। ७ ।।**

राजन् ! बुद्धिमान् होते हुये भी आप, अविवेक के कारण अथवा अभिमान के कारण अथवा भावी विपत्ति की प्रेरणा के कारण, मूर्ख के समान, अपने हिताहित के ज्ञान से क्यों शून्य हो गये हैं ? ।। ७ ।।

**अखिलामपि शासतो धरित्रीं समतीताः शरदोऽस्य सप्तसङ्ख्याः ।**
**न करैर्न च सेवयापि तावद् भवता तस्य कृता मनोनुवृत्तिः ॥ ८ ॥**

सारी पृथ्वी पर शासन करते हुए सुलतान को सात वर्ष हो चुके हैं, किन्तु आपने अभी तक न तो कर देकर और न अपनी सेवा से सुलतान को प्रसन्न किया ॥ ८ ॥

**कृपयाप्यवधीरणेन वाऽसौ हृदि नाधत्त नृपस्तवापराधम् ।**
**भवतोऽजनि दुर्मदो महीयानथ तेनात्मविनाशहेतुरेषः ॥ ९ ॥**

अपनी कृपा के कारण अथवा अवज्ञा के कारण सुल्तान ने आपके अपराध पर ध्यान नहीं दिया, किन्तु इससे आपका मिथ्याभिमान अत्यन्त बढ़ गया। जान लीजिये कि यह आपके विनाश का कारण सिद्ध होगा ॥ ९ ॥

**बहुशः कृतविक्रियान् महीशे महिमाशाहमुखांस्तुरुष्कमुख्यान् ।**
**दधता निजसैनिकाधिपत्ये भवताऽयं विहितोऽपरोऽपराधः ॥१०॥**

सुलतान अलाउद्दीन के अनेक अपकार करने वाले महिमाशाह (मीर मुहम्मद शाह) आदि यवन-श्रेष्ठों को अपने सेनापति पद पर नियुक्त करके आपने यह दूसरा अपराध किया है ॥१०॥

**बहुभिर्बत शंसितैः किमन्यैर्जगराख्यं पुरमेव यद् व्यभाङ्क्षीः ।**
**यवनेश्वरसोदरेण यस्मिन् निजसामन्तनिवेशनं वितेने ॥ ११ ॥**

आपके अन्य अनेक अपराधों को कहाँ तक कहूँ, और तो और, आपने यवनेश्वर अलाउद्दीन के सगे भाई उलूग खाँ के, अपने सामन्तों के लिये, जगरपुर में बनाये गये शिविर तक को नष्ट भ्रष्ट कर दिया ॥११॥

**चतुरम्बुधिमेखलान्तरे यः सहते न स्वनिदेशनस्य भङ्गम् ।**
**पुरभङ्गमभङ्गुरप्रतापः स कथं हन्त सहेत सोदरस्य ॥१२॥**

चारों समुद्र-रूपी रशना से सुशोभित पृथ्वी में जो अक्षुण्ण प्रताप वाला सुलतान अपनी आज्ञा का भंग नहीं सहता वह अपने सगे भाई के नगर का भंग किस प्रकार सह सकता है? ॥१२॥

**बलवत्यपि बालबुद्धितोऽयं गमितो वैरतरुस्त्वयाऽभिवृद्धिम् ।**
**उपनेष्यति निश्चयेन राजन्नचिरेणैव पचेलिमं फलं ते ॥१३॥**

राजन्! आपने अपनी मूर्खता के कारण, शत्रु के बलवान् होने पर भी, इस वैर-वृक्ष को खूब सींच कर बढ़ाया है और अब बहुत शीघ्र ही निश्चित रूप से आपको इसका पका फल मिलेगा ॥१३॥

**सहजेतरकर्मणि प्रवृत्ताश्चपलत्वाल्लघवः प्रयान्ति नाशम् ।**
**गगनोत्पतने धृतप्रयत्ना बिलसंस्था इव कीटकाः सपक्षाः ॥१४॥**

क्षुद्र पुरुष चपलता के कारण सामर्थ्य से बाहर अस्वाभाविक कार्य में प्रवृत्त होकर नष्ट हो जाते हैं, जिस प्रकार बिल में रहने वाले छोटे-छोटे कीड़े अपने पंखों से आकाश को नापने का प्रयत्न करके नष्ट हो जाते हैं ॥१४॥

**अधुनापि गताऽऽग्रहो यदि स्याः क्षणमन्धङ्करणं मदं निगृह्य ।**
**नियतं त्वयि धास्यति प्रसादं करुणार्द्रो हि महान् ममावनीशः ॥१५॥**

अन्धा बनाने वाले मद को क्षण भर के लिये रोक कर यदि आप अब भी अपने दुराग्रह को छोड़ दें, तो सुलतान अवश्य ही आप पर प्रसन्न हो जायँगे क्योंकि मेरे स्वामी अत्यन्त दयालु हैं ॥१५॥

**घनशृङ्खलया निबध्य कण्ठं पशुमालभ्यमिवाशु पञ्जरस्थम् ।**
**प्रथमं सह तैस्तुरुष्कमुख्यै र्महिमाशाहमुपायनीकुरुष्व ॥१६॥**

सुलतान के भय से भागकर आये उन यवन-श्रेष्ठों के साथ पहले महिमाशाह (मीर मुहम्मद शाह) को पिंजरे में बन्द करके और कंठ में मोटी साँकल से बाँधकर, यज्ञ में वलिदान किये जाने वाले पशु के समान, सुलतान अलाउद्दीन की सेवा में शीघ्र उपस्थित कीजिये ॥१६॥

**उपदीकृतमानतैः पुरा यत् तव वंश्यैः शकभूभृतेऽनुवर्षम् ।**
**समुपाहर सप्तसङ्ख्यया तद् गुणितं सद्गुणशालिने नृपाय ॥१७॥**

आपके पूर्वज विनीत होकर जो कर सुलतानों को प्रतिवर्ष दिया करते थे उसका सात गुना कर सद्‌गुणसम्पन्न सुलतान अलाउद्दीन की सेवा में पेश कीजिये ॥१७॥

**तव सन्ति च दन्तिनो मदाग्र्या गिरिकल्पा गिरिसंभवाः कियन्तः ।**
**प्रतिपादय तानपेतमोहः शिवमिच्छन् महते महीश्वराय ॥१८॥**

आपके पास जो पर्वत में उत्पन्न होने वाले, पर्वत के समान विशाल, मदोत्कट हाथी हैं उनको, मोह छोड़कर, अपने कल्याण की इच्छा से, महान् सुलतान को भेंट दीजिये ॥१८॥

**सकलासु कलासु लब्धपारा नवतारुण्यविशेषिताङ्गभङ्गीः ।**
**शतमर्पय नर्तकीः स्वकीया विहितागःपरिमार्जनाय राजन् ॥१९॥**

राजन्! अपने किये हुये अपराधों की शान्ति के लिये, सम्पूर्ण कलाओं में पारंगत और नव-यौवन से सुन्दर अंग विभ्रम वालीं अपनी सौ नर्तकियों को भी अर्पण कीजिये ॥१९॥

**भवदिष्टमिदं मयोपदिष्टं सममेतैरनुमन्त्र्य मन्त्रिमुख्यैः ।**
**कुरु सन्धिमनेन राज्यमृद्धं परिरक्ष श्रियमात्मजीवितञ्च ॥२०॥**

आपके हित के लिये मैंने यह उपदेश आपको दिया है। अब आप अपने मुख्यमंत्रियों से परामर्श करके सुलतान से सन्धि कर लीजिये और अपने समृद्ध राज्य की, अपनी लक्ष्मी की तथा अपने प्राणों की रक्षा कीजिये ॥२०॥

**अथ चेदभिमानतः प्रमाणीकुरुषे नैव सुभाषितं मदीयम् ।**
**अचिराद् भवितासि तत्र पान्थः स पथा येन गतो जलालुदीनः ॥२१॥**

और यदि आप अपने दुरभिमान के कारण मेरे सुन्दर वचनों को नहीं मानेंगे तो समझ लीजिये कि आप भी शीघ्र ही उस पथ के पथिक बन जायँगे जिस पथ से जलालुद्दीन गया है। (अर्थात् जलालुद्दीन की तरह आप भी मारे जायँगे। अलाउद्दीन अपने चाचा और ससुर जलालुद्दीन को छल से मरवा कर राजा बना था) ॥२१॥

**गिरमित्थमुदीर्य मुद्रितास्ये रिपुसन्देशहरे नरेन्द्रवर्यः ।**
**वदति स्म नवाम्बुदोपमानस्वरसंभेदसमुद्धुरां स वाणीम् ॥२२॥**

इस प्रकार के वचन कह कर शत्रुसन्देशहारी दूत के चुप हो जाने पर राजश्रेष्ठ हम्मीरदेव नवीन मेघ के स्वर के समान गंभीर स्वर से शोभित वचन बोले ॥२२॥

**बहुशोऽद्भुतपौरुषप्रपञ्चं भवता वर्णयता निजस्य भर्तुः ।**
**प्रतिपादित एव दूतयोग्यः प्रभुभक्तिप्रगुणीकृतो गुणौघः ॥२३॥**

आपने अपने स्वामी सुलतान अलाउद्दीन के अद्भुत पराक्रम का विस्तृत वर्णन करने में, एक कुशल दूत के समान, अपने स्वामी के गुण-समूह को, प्रभुभक्ति के कारण, कई गुना बढ़ा-चढ़ा कर कहा है ॥२३॥

**असतोऽपि समर्थयन्ति केचित् परदोषात्मगुणानतिप्रगल्भाः ।**
**प्रकटानपि तान् प्रवक्तुमन्ये विनयाधीनधियो न शक्नुवन्ति ॥२४॥**

कोई-कोई अत्यन्त चतुर पुरुष दूसरे के दोषों का और अपने गुणों का, उनके वस्तुतः अविद्यमान होने पर भी, समर्थन करते हैं; किन्तु विनय से शोभित बुद्धि वाले पुरुष दूसरे के दोषों को को और अपने गुणों को, उनके प्रकट होने पर भी, अपने मुख से उन्हें कहना नहीं चाहते ॥२४॥

**बहवो यवनेषु सार्वभौमाः श्रुतपूर्वाः प्रततीकृतप्रतापाः ।**
**विजिताः कतिचित् कृतोपकारा मिलिताः केचन पूर्वजैर्मदीयैः ॥ २५॥**

बहुत से विस्तृत प्रताप वाले यवन राजाओं का वर्णन हमने सुना है। उनमें से बहुतों को तो हमारे पूर्वजों ने जीत लिया था और बहुत से हमारे पूर्वजों द्वारा कृत उपकार के कारण उनसे मिल गये थे ॥२५॥

**रिपुमण्डलमर्कमण्डलं वा तरसोच्चैःपदलब्धये भिनत्ति ।**
**तनुते प्रणते करावलम्बं करदानं नहि चाहुवाणवंशः ॥२६॥**

चौहाणवंश, उच्च पद को प्राप्त करने के लिये, वेग से या तो शत्रुमंडल को भेदता है या सूर्य मंडल को। (अर्थात् या तो शत्रुओं के मंडल को नष्ट करके राज्य-पद पर आरूढ रहता है और या युद्ध में काम आकर सूर्यमंडल को भेदकर स्वर्ग-पद प्राप्त करता है। युद्ध में मरने वाले वीर आदित्यमार्ग से स्वर्ग जाते हैं।) चौहाणवंश, (अपने चरणों में) झुकने वाले पुरुष को करावलम्बन (हाथ का सहारा) देता है अर्थात् अपने हाथ के सहारे उसे उठाता है; वह (अन्य राजाओं को) कभी कर नहीं देता ॥२६॥

**मम पूर्वभवः पुरा प्रवीरान् हरिराजः परिभूय पारसीकान् ।**
**उपयोधपुरं दुरन्तदुर्गं रचयामास चिराय चारुकीर्तिः ॥२७॥**

हमारे पूर्वज हरिराज ने प्राचीन काल में वीर यवनों को परास्त करके जोधपुर के समीप दुर्धर्ष दुर्ग बनवाया था जिससे उनकी सुन्दर कीर्ति आज भी अमर है ॥२७॥

---

(२६) युद्धे निहता वीराः सूर्यमण्डलं भित्वा स्वर्गं गच्छन्ति। तदुक्तं—'द्वाविमौ पुरुषौ लोके सूर्यमण्डलभेदिनौ। परिव्राड् योगयुक्तश्च रणे चाभिमुखो हतः॥' इति।

**अपरः परवीरचक्रहन्ता भुवि चामुण्डसमाख्यया प्रतीतः ।**
**समरे शकचक्रवर्तिनं तं विनियम्य स्वपुरं समानिनाय ॥२८॥**

शत्रुवीरों के समुदाय को मारने वाले, चामुण्डराज नाम से विख्यात, हमारे एक और पूर्वज हुये हैं जो यवनों के चक्रवर्ती राजा को युद्ध में कैद करके अपने नगर में ले आये थे ॥२८॥

**पुरुहूतदिशं जलालुदीने चलिते दूरमनन्तरैर्निरुद्धम् ।**
**पुरमस्य च योगिनीपुराख्यं निजशौर्येण ररक्ष जैत्रसिंहः ॥२९॥**

सुलतान जलालुद्दीन के पूर्व दिशा में दूर तक चले जाने पर जब उनके योगिनीपुर नामक नगर को सीमावर्ती शत्रुओं ने घेर लिया था तब हमारे पिता जैत्रसिह ने अपने पराक्रम से उस नगर की रक्षा की थी ॥२९॥

**मम सैनिकपूरणं कियद् वा महिमाशाहमुखाः शका विदध्युः ।**
**तव भूमिपते भयात् प्रपन्नाः शरणं मामिति रक्षिताः स्वदेशे ॥३०॥**

महिमाशाह आदि यवनश्रेष्ठ हमारी सेना की क्या पूर्ति करेंगे ? तुम्हारे सुलतान के भय से ये लोग हमारी शरण में आये हैं इसलिये हम अपने देश में इनकी रक्षा कर रहे हैं ॥३०॥

**निजजीवनमप्युपेक्षमाणैः शरणार्थी न विमुच्यते महद्भिः ।**
**शिविरे यदि विप्रतिष्ठमानः प्रथमोदाहरणं बभूव तत्र ॥३१॥**

महान् पुरुष अपने जीवन तक की उपेक्षा कर देते हैं, किन्तु शरणार्थी को नहीं छोड़ते । फिर यदि (वीर और कृतज्ञ) महिमाशाह हमारे शिविर में (सेनापति पद पर) प्रतिष्ठित हैं, तो यह (शरणार्थियों की रक्षा और सम्मान का) पहला उदाहरण है ॥३१॥

**जगराख्यपुरस्य यद् विमर्दोऽजनि तत्राप्यपरस्य कोऽस्ति दोषः ।**
**यदिहाल्पतरेऽपि सम्पराये तदुलूग्खानपलायनं निदानम् ॥३२॥**

जगरपुर नामक नगर यदि नष्टभ्रष्ट हुआ तो इसमें भी हमारा क्या दोष है ? इसका कारण तो जरा सा युद्ध छिड़ते ही उलूगखाँ का भाग जाना है ॥३२॥

**समराङ्गसीम्नि दत्तभङ्गे स्वयमेवाधिपतौ पताकिनीनाम् ।**
**शिविरं द्रविणाढ्यमप्रवीरं किमु लुण्टाकगणः क्षमेत मोक्तुम् ॥३३॥**

युद्धक्षेत्र में सेनाओं के स्वामी को परास्त करके भगा देने पर यदि हमारी सेना ने विपुल धन राशि से युक्त और वीर रक्षकों से रहित शिविर को अधिकृत कर लिया तो इसमें कौन-सी बुरी बात है; अरक्षित और धनयुक्त स्थान को तो लुटेरे लोग भी नहीं छोड़ते ॥३३॥

**निहतः कपटाज्जलालुदीनो यदि दीनो ननु सोऽस्ति वीरगोष्ठ्याम् ।**
**सुभटा हि निजक्षताङ्गजास्रैरभिषिञ्चन्ति यशोमयं शरीरम् ॥३४॥**

तुम्हारे सुलतान अलाउद्दीन ने यदि छलपूर्वक (अपने चाचा और ससुर) बिचारे सुलतान

---

(३३) लुण्टाकगणो दस्युसमूहः ।

(३४) अलाउद्दीनः स्वस्य पितृव्यं श्वसुरं जलालुद्दीनं कपटेन घातयित्वा राजा बभूव ।

जलालुद्दीन को मरवा दिया तो इसमें अभिमान की कौन बात है ? जलालुद्दीन ने तो वीर पद ही प्राप्त किया, क्योंकि वीर-पुरुष अपने घावों से बहने वाले रक्त से अपने यशः शरीर को सींचते हैं ॥३४॥

**इयती कियती विकत्थना वा यदि रुद्धं पुरमङ्ग मत्परोक्षम् ।**
**सदनं यदि शून्यतामुपेतं प्रविशेत् तत्र जवेन जम्बुकोऽपि ॥३५॥**

दूत ! यदि तुम्हारे सुलतान ने, मेरे यहाँ न रहने पर, इस रणस्तम्भपुर को घेर लिया तो इसमें इतनी बड़ी डींग हाँकने की क्या बात है ? शून्य घर में तो गीदड़ भी वेग से घुस जाता है ॥३५॥

**उपरुध्य पुरं ममाऽसमक्षं स्वयमुद्गीर्णमनोमलस्तवेशः ।**
**मयि सन्दिशति स्म सन्धिवार्तां विपरीतं चतुरत्वमेतदीयम् ॥३६॥**

हमारे यहाँ न रहने पर रणस्तम्भपुर को घेर कर तुम्हारे स्वामी ने अपने मन का कपट-विष उगल दिया है और अब वे हमारे पास सन्धि का सन्देश भेजते हैं ! उनकी चतुरता विचित्र है ! ॥३६॥

**शरवत् समरान्तरे प्रवीराः सुखमाविष्कृतनादमापतन्ति ।**
**भुजगा इव सञ्चरन्ति चौराः पररन्ध्रं परितो गवेषयन्तः ॥३७॥**

वीर लोग बाण के समान गरजते हुये युद्धभूमि में कूदते हैं और चोर, साँपों की तरह, दूसरे के छेद को (बिल को; कमी को) ढूँढते हुये चारों ओर रेंगते हैं ॥३७॥

**अकरोन् मम पामरः परोक्षं पुररोधं यदि पौरुषं कियद् वा ।**
**प्रकटीकुरुतां पुनः स्वशक्ति स पुरः सम्प्रति सम्परायसीम्नि ॥३८॥**

हमारे परोक्ष में यदि उस नीच सुलतान ने हमारे नगर को घेर लिया तो इसमें क्या पराक्रम किया ! अब वह हमारे आगे युद्धक्षेत्र में अपनी शक्ति दिखलावे ! ॥३८॥

**इतिवादिनि शत्रुवर्गजैत्रे तनये जैत्रमहीपते : स दूतः ।**
**विरहय्य निजासनं यियासुः प्रखरो वाग्विषमुज्जगार घोरम् ॥३९॥**

शत्रुवर्ग को जीतने वाले, जैत्रसिंह के पुत्र हम्मीरदेव के इस प्रकार कहने पर वह दूत अपने आसन को छोड़कर खड़ा हो गया और जाते-जाते उसने इस प्रकार के घोर वाग्विष को उगला ॥३९॥

**निजकालनिदेशभाजि मृत्यौ भृशमास्कन्दितमूर्ध्नि मानवानाम् ।**
**सुहृदोऽपि गिरो विशन्ति नान्तः किमुताऽरातिवचोहरोपनीताः ॥४०॥**

जब अपने काल के आदेश से युक्त मृत्यु मनुष्यों के मस्तक पर अच्छी तरह मँडराने लगती है तब मित्रों की बाणी भी उनके हृदय में नहीं उतरती, फिर शत्रु के सन्देश लाने वाले दूत की वाणी की तो बात ही क्या ! ॥४०॥

**सह सर्वबलेन तीर्णसिन्धुः प्रथितस्ते सविभीषणो विपक्षः ।**
**उपलम्भयिता भवन्तमिद्धं न चिरेणैव दशां दशाननस्य ।।४१।।**

अपनी सारी सेना के साथ नदी पार करके यहाँ आने वाले आपके भयंकर शत्रु वे विख्यात अलाउद्दीन, जिनके साथ आपके घर का भेदी (आपका सेनापति रणमल्ल) जा मिला है, आपको शीघ्र ही उस दशा में पहुँचाने वाले हैं जिस दशा में विख्यात भगवान् राम ने, अपनी सारी सेना के साथ समुद्र पार करके, विभीषण को अपनी ओर मिला कर, रावण को पहुँचा दिया था ।।४१।।

**घनसैनिकजालके हि तावद् विनिरुद्धोऽसि न निर्गमावकाशः ।**
**अलमुत्फलनेन मोक्ष्यसे त्वं नियतं मीनवदाशु जीवनेन ।।४२।।**

आप चारों ओर से हमारे सैनिकों के घने जाल में घिर रहे हैं और आपके लिये बाहर निकल भागने का भी कोई मार्ग नहीं है। आपका उछल कूद मचाना वेकार है। निश्चित है कि आप अब शीघ्र ही जाल में फंसी हुई मछली के समान अपने जीवन से (प्राणों से ; पानी से) अलग कर दिये जावेंगे ।।४२।।

**अथ दुर्वचसं निरस्य दूतं नरनाथः परवाहिनीनिवेशम् ।**
**अभिवीक्षितुमाप्तमन्त्रिमुख्यैः सह दुर्गाग्रशिरः समारुरोह ।।४३।।**

इस प्रकार के दुर्वचन बोलने वाले दूत को बाहर निकाल कर राजा हम्मीरदेव शत्रुसेना को देखने के लिये अपने मुख्य मंत्रियों के साथ दुर्ग के ऊपर चढ़े ।।४३।।

**इदमाह च पश्यताऽश्वभर्तुर्विनिवेशं विपुलं वरूथिनीनाम् ।**
**अविभावितपारमम्बुराशेः प्रलयप्रेरितवारिपूरतुल्यम् ।।४४।।**

और अपने मंत्रियों से इस प्रकार बोले—घुड़सवारों के स्वामी अलाउद्दीन की सेनाओं के, प्रलय वायु से प्रेरित समुद्र के जलसमूह के समान अपार, इस समूह को देखिये ।।४४।।

**अनुवेलमियं सपत्नसेना मम सेनाभिरुपेयुषी विवृद्धिम् ।**
**गिरिनिर्झरिणीभिरुक्षिताया हरते हन्त रुचिं महाह्लदिन्याः ।।४५।।**

हमारी सेनाओं के मिल जाने से निरन्तर बढ़ती हुई यह शत्रुसेना, पर्वतीय नदियों के संगम से निरन्तर बढ़ती हुई महानदी के समान लग रही है ।।४५।।

**धनलालसया नवीनभृत्या यवनाऽऽपातभयेन चाभिजाताः ।**
**चिरकालनिरोधयन्त्रितत्वादिह निर्विण्णहृदः परे निरीयुः ।।४६।।**

हमारी नगरी के कुछ नौजवान सैनिक धन के लोभ से उधर जा मिले हैं। नगरी के कुलीन लोग यवनों के आक्रमण के भय से और अन्य लोग बहुत दिनों से घेरा पड़े रहने के कारण दुखी होकर नगरी को छोड़-छोड़ कर जा रहे हैं ।।४६।।

---

(४१) स विभीषणो भयंकरो विभीषणसहितः रामश्च। विभीषणेनेव स्वपक्षविद्रोहिणा रणमल्लेन सहित इत्यपि गम्यते ।

**दिवसैरपरैः कियद्भिरेवं परिशून्या नियतं पुरी भवित्री ।**
**समरश्रममन्तरेण माभूत् करलभ्यं यवनस्य दुर्गमेतत् ।। ४७।।**

इस तरह अवश्य ही कुछ दिनों में हमारी नगरी जनशून्य हो जावेगी । फिर भी हमारी इ छा है कि विना युद्ध के यह दुर्ग यवन शत्रु के हाथ में नहीं पड़ने पावे ।।४७।।

**न मुहूर्तविवेचनावकाशः पतितः संमुखमुल्वणः प्रतीपः ।**
**सदने सहसैव दह्यमाने जलशुद्धेर्नहि युज्यते विचारः ।।४८।।**

उग्र शत्रु सामने उपस्थित है। अव क्षण भर भी सोचने-विचारने का अवकाश नहीं है। जव घर में सहसा चारों ओर प्रज्वलित आग लग जाय तो जल से बुझाने का विचार भी नहीं उठता ।।४८।।

**समरे शमयन्ति वैरिवर्गानथवा जीवनमेव यापयन्ति ।**
**इह काचन चाहुवाणवंशे विदिता नैव हि पद्धतिस्तृतीया ।।४९।।**

चौहाण वीर या तो युद्ध में शत्रु समुदायों को नष्ट कर देते हैं या स्वयं ही काम आ जाते हैं । इस चौहाणवंश के लिये और कोई तीसरा मार्ग नहीं है ।।४९।।

**समयस्य नृशंसतां समीक्ष्य स्फुटचारित्र्यविभूषणा भवत्यः ।**
**यशसः सरणीषु वीरपत्नीव्रतचर्यासु भवन्तु सावधानाः ।।५०।।**
**अवरोधगणानधोमुखः सन्निति सन्दिश्य रहोगतः स राजा ।**
**विससर्ज पुरोहितं प्रणम्य प्रणयामन्त्रणयन्त्रितान्तरङ्गम् ।।५१।।**

फिर राजा हम्मीरदेव ने अन्तःपुर में जाकर नीचा मुँहकरके रानियों से इस प्रकार कहा— शुद्ध चरित्र ही आप लोगों का आभूषण है, अतः आप समय की क्रूरता और प्रतिकूलता को देखकर, वीरपत्नियों की व्रतचर्याओं के लिये, जो यश (रूपी प्रासाद तक पहुँचने) की सीढ़ियाँ हैं, तैयार हो जाइये। रानियों से यह कहकर राजा ने प्रेमनिवेदन से जकड़े हुये हृदय वाले पुरोहित को प्रणाम करके (जौहर की तैयारी के लिये) भेजा ।।५०—५१।।

**वितरन् स वसूपमानविप्रप्रवरेभ्यः प्रचुराणि काञ्चनानि ।**
**प्रसभस्रुतमश्रुपूरमेव स्वकरस्थं कुरुते स्म दानतोयम् ।।५२।।**

अग्नि के समान तेजस्वी श्रेष्ठ ब्राह्मणों को प्रचुर सुवर्ण दान देते समय हम्मीरदेव ने वेग से बहने वाले आँसुओं के प्रवाह को अपने हाथ में लेकर उसी को दान का संकल्पजल बनाया ।।५२।।

**समरोत्सुकवैरिसिंहनादैरथ निर्भिन्नमनाः सनादमुच्चैः ।**
**नवनीरदगर्जितेन नुन्नः प्रतिगर्जन्निव केसरी चचाल ।।५३।।**

फिर युद्ध के लिये उत्सुक शत्रुओं के सिंहनादों को सुनने सेआवेश में आकर, नवीन मेघ के गंभीरगर्जन से उत्तेजित होकर जोरों की गर्जना करने वाले सिंह के समान, गरजते हुये वीर हम्मीरदेव युद्ध में कूद पड़े ।।५३।।

**यवनाः सवनायुजास्तदानीं महिमाशाहसुमीरखेब्रुमध्ये ।**
**नृपतिं प्रथमं प्रतिष्ठमानं परितस्तं परिचक्रुरक्रमन्तम् ॥५४॥**

उस समय अरबी घोड़ों पर सवार यवन, हम्मीरदेव को महिमाशाह और उनके भाई श्रेष्ठ मीर खेब्रु के बीच में विराजमान देखकर क्रम का ध्यान न रखकर पहले उन्हीं पर टूट पड़े ॥५४॥

**अवतीर्णममुं च दुर्गमध्यादवधार्य प्रयतान्तरा महिष्यः ।**
**हुतहव्यसमेधिते हुताशे जुहवामासुरवारिता वपूंषि ॥५५॥**

इधर रानियों ने, हम्मीरदेव को दुर्ग से उतर कर युद्ध में गये हुये जानकर, स्थिर मन से, बे रोकटोक, हवन की गई सामग्री से प्रज्वलित यज्ञाग्नि में अपने शरीरों की आहुतियाँ दे दीं (जौहर किया) ॥५५॥

× × × × ×
× × × × × ॥५६॥

**धारासारैरुद्धुराणां शराणां धूलिव्रातैर्बद्धभीमान्धकारे ।**
**विद्युत्प्रायैर्मुक्तकोशैः कृपाणैस्तत्राकाले विभ्रमः प्रावृषोऽभूत् ॥५७॥**

(सेना से उड़ने वाले) धूल के बादलों से चारों ओर अन्धकार छा जाने से, वेग से चलाये गये बाणों की घनघोर वर्षा से और म्यान से निकाली गईं तलवारों की बिजली जैसी चमक से उस युद्ध में असमय में ही वर्षाऋतु का विभ्रम उपस्थित हो रहा था ॥५७॥

**रेणुव्रातैर्ग्रस्तभास्वद्गभस्तौ सान्द्रीभूतध्वान्तसन्दोहभाजि ।**
**दिव्यस्त्रीणां व्योम्नि वैमानिकीनां ताराकारा रेजिरे रत्नहाराः ॥५८॥**

आकाश में, जहाँ देदीप्यमान सूर्य भी (सेना से उत्थित) धूल-समूह से ढक गया था और जहाँ चारों ओर गहरा अन्धकार छा गया था, विमान में बैठी हुईं (युद्ध में हत वीरों के स्वागतार्थ आईं हुईं) स्वर्ग की अप्सराओं के रत्नहार तारों के समान चमक रहे थे ॥५८॥

**आलोक्यास्यच्छत्रमिन्दुप्रकाशं दूरादेव व्यद्रवच्छत्रुसैन्यम् ।**
**गन्धेभानां दानगन्धाद् यथास्य भ्रष्टारोहा वैरिणां वारणेन्द्राः ॥५९॥**

हम्मीरदेव के चन्द्रबिम्ब के समान उज्वल छत्र को दूर से ही देखकर शत्रु सेना भाग गई, जैसे हम्मीर के मदोत्कट हाथियों के मद जल की गन्ध को सूँघकर वैरियों के हाथी, अपने महावतों को पटक कर, भाग गये ॥५९॥

**मूर्धाकम्पैरङ्कुशग्राहकाणां शश्वत् तीव्रं वन्ध्ययन्तः प्रयत्नम् ।**
**मातङ्गास्ते विद्रवन्तः पराञ्चः स्वीयान्येव द्रागमृद्नन्बलानि ॥६०॥**

महावतों के अंकुश प्रहारों के तीव्र प्रयत्न को भी अपने सिर हिलाकर विफल कर देनेवाले शत्रु के हाथी भाग खड़े हुए और शीघ्र ही उन्होंने अपनी ही सेना को रौंद दिया ॥६०॥

---

(५५) दुर्वारघोरचरित्रसंकटे समुपस्थिते राजस्थानेषु पतिव्रताः पतिप्राणा महिलाः सविधि वह्नि प्रज्वाल्य समर्च्य परिक्रम्य हविरादिभिर्हुत्वा अन्ते देहरूपाभिरेवाहुतिभिर्वह्नि तर्पयन्ति स्मति महाव्रतं 'जौहर' नाम्ना प्रसिद्धम् ।

**संत्रस्तांस्तान् सन्निवर्त्य स्वसैन्यानूलूग्खानेनाऽनुजेनाऽनुयातः ।**
**अव्यग्रात्मा सम्पराये समागाद् वर्षन् भल्लांस्तूर्णमल्लावुदीनः ॥६१॥**

अलाउद्दीन, जिसके पीछे उसका भाई उलूगखाँ चल रहा था, अपनी भयभीत सेना को (आश्वासन देकर) रणक्षेत्र में लौटाता हुआ और स्थिरतापूर्वक शीघ्रता से वाणों की वर्षा करता हुआ, युद्धस्थल में आया ॥६१॥

**शस्त्राशस्त्रि व्यापृतानां भटानां साहङ्कारैः सङ्गतानां रणान्तः ।**
**द्रागुद्भूता रक्तधाराः क्षतोत्था नाऽदुः खेदं स्वेदवत् संस्रवन्त्यः ॥६२॥**

युद्धस्थल में आये हुये अभिमानी वीरों को, परस्पर शस्त्रप्रहार के कारण घावों से पसीने की तरह वहने वाली रक्त की धाराओं ने भी कष्ट नहीं दिया ॥६२॥

**उत्क्षिप्योच्चैः प्रेरितस्तीक्ष्णखड्गो नालं भेत्तुं वैरिणो वारवाणम् ।**
**तत्संघट्टादुत्थितोऽङ्के कृशानुर्निन्ये मूर्च्छां लम्बकूर्चावलम्बी ॥६३॥**

किसी वीर ने अपनी तलवार उठाकर वड़े जोर से शत्रु पर जो प्रहार किया वह प्रहार शत्रु का कवच नहीं भेद सका, किन्तु तलवार और कवच के संघर्ष से शत्रु के वक्षःस्थल में जो आग निकल पड़ी वह शत्रु की लम्बी दाढ़ी में जा लगी और उसने शत्रु को मूर्च्छित कर दिया ॥६३॥

**क्रोधान्मुक्ता धन्विभिस्तीव्रवेगैरग्रे लूनं वैरिणां वक्त्रपद्मम् ।**
**संबिभ्राणा व्योमकासारमध्ये बाणास्तिर्यग्नाललक्ष्मीमवापुः ॥६४॥**

तीव्र वेग वाले धनुर्धरों ने क्रोध से जो बाण छोड़े वे शत्रुओं के मुख-कमलों को काटकर आकाश में ले उड़े और उन्होंने आकाश-सरोवर में शत्रुओं के मुख-कमलों के नीचे टेढ़े कमल-नाल की शोभा को प्राप्त किया ॥६४॥

**सङ्ग्रामान्ते पातितानां भटानां भूषारत्नज्योतिषाऽत्युज्वलाभैः ।**
**अस्रापूरैर्लम्भिताः पावकाभैर्धूमच्छायामुच्छ्रिता दन्तिदेहाः ॥६५॥**

युद्धक्षेत्र में काम आये हुये वीरों के रत्नाभूषणों की चमक से जिनकी आभा वढ़ गई थी ऐसे, अग्नि के समान प्रज्वलित रक्त-समूहों ने, मारे गये हाथियों के काले और उन्नत शरीरों को धुयें की शोभा प्राप्त करा दी ॥६५॥

**उत्तानस्थं त्रस्तमुत्कृत्तहस्तादध्यारूढाः खेटकं बद्धकेल्यः ।**
**तत्राजस्रप्रस्रुतास्रस्रवन्तीः फेत्कारिण्यः फेरुकान्ताः प्रतेरुः ॥६६॥**

खेल करने वालीं और 'फेत् फेत्' शब्द करने वालीं गीदड़ों की मादाओं ने, युद्धक्षेत्र में निरन्तर बहने वाले रक्त की नदियों को, किसी वीर के कटे हुए हाथ से गिरे हुए और सीधे खड़े हुए खेटक नामक शस्त्र पर चढ़कर (वहाँ से कूदकर) पार किया ॥६६॥

---

(६६) खेटकमायुधविशेषम् । 'फेत् फेत्' इति अपशब्दं कुर्वन्त्यः । फेरुकान्ताः शृगाल्यः ।

**वीक्ष्य स्वीयं सैनिकं शीर्यमाणं मत्वा शत्रोः शौर्यमानन्त्यभाजः ।**
**अध्यारूढः कुञ्जरेन्द्रं नरेन्द्रः प्रायाद् यस्मिन् पारसीकक्षितीशः ॥६७॥**

अपनी थोड़ी सी सेना को भी क्षीण होते हुये देख कर और शत्रु की अनन्त सेना को देख कर हम्मीरदेव, हाथी पर बैठे हुए, उधर गये जिस ओर सुलतान अलाउद्दीन था ॥६७॥

**तं तेजोभिः प्रज्वलन्तं दुरन्तैरावव्रुस्ते यौगपद्येन योधाः ।**
**कल्पापाये क्रूररूपं यथोच्चैर्बिम्बं पूष्णः पुष्कराद्याः पयोदाः ॥६८॥**

दुर्धर्ष तेज से प्रज्वलित वीर हम्मीरदेव को शत्रु सैनिकों ने एक साथ उस प्रकार घेर लिया जिस प्रकार पुष्कर आदि बादल, प्रलय के समय, सूर्य के भयानक तेजस्वी विम्व को वेग से ढक लेते हैं ॥६८॥

**तान् दुर्वारान् वारयन् बाणवर्षे म्लेच्छव्रातानब्रवीत् तीव्रकर्मा ।**
**क्षुद्राः क्षुद्रासन्निभाः केऽत्र यूयं जाग्रत्युग्रे चाहुवाणप्रतापे ॥६९॥**

उग्र कर्म में निपुण राजा हम्मीर, उन दुर्धर्ष म्लेच्छों के समूहों को अपने बाणों की वर्षा से हटाकर, यों बोले—तुच्छ बर्रों के समान (डंक मारने वाले) क्षुद्र पुरुषों! उग्र प्रतापी चौहाण के प्रज्वलित रहते तुम क्या कर सकते हो? ॥६९॥

**उलूग्खानोलूकमूकोऽत्र भूयः प्रागेव त्वं ज्ञातसारः परोक्षम् ।**
**क्षुद्रैरेव द्रावितः सङ्गरान्तात् सौरं तेजः सोढुमेवाक्षमोऽसि ॥७०॥**

उल्लू की तरह चुप रहने वाले उलूग खाँ! तू फिर यहाँ आया है। तेरी शक्ति का पता तो हमारे परोक्ष में ही लग गया था जब हमारे साधारण सैनिकों ने ही तुझे हरा कर युद्धक्षेत्र से भगा दिया था। जैसे उल्लू सूर्य का तेज नहीं सह सकता, उसी प्रकार तू भी सूर्यवंशी चौहाण का तेज नहीं सह सकता ॥७०॥

**शंसन्नित्थं सन्निपत्य प्रवीरान् सर्वारम्भैर्बाधमानानरातीन् ।**
**अह्नायाऽसौ प्रत्यगृह्णान्नरेन्द्रो नागानन्यान् यूथनाथो यथैकः ॥७१॥**

इस प्रकार कह कर वीर हम्मीर ने आगे बढ़कर अपनी शक्ति से वीर शत्रुओं को बाधित करके उन पर शीघ्र उसी प्रकार आक्रमण किया जिस प्रकार यूथनायक हाथी अकेला ही अन्य हाथियों पर आक्रमण करता है ॥७१॥

**सर्वेष्वेव प्रेषितास्तुल्यकालं चापात्तस्य प्रापतन्तः पृषत्काः ।**
**स्थूलां मूर्तिं बुद्धिमप्याशु सूक्ष्मां भित्वा मोहं द्विप्रकारं वितेनुः ॥७२॥**

हम्मीरदेव के धनुष से छूटे हुये बाण एक साथ सब शत्रुओं पर गिरे और उनके स्थूल शरीर को तथा सूक्ष्म बुद्धि को भेदकर उन्हें दोनों प्रकार से मूर्च्छित कर दिया ॥७२॥

---

(६९) क्षुद्राः वरटाः भ्रमर्यः।

**नालक्ष्यन्त क्षिप्रकर्तुः पृषत्काश्चिच्छन्दन्तस्ते वातवेगा अरातीन् ।**
**उन्नीयन्ते पात्यमानैः शरीरैः स्फारां धारां रौधिरीमुद्वमद्भिः ॥७३॥**

अत्यन्त शीघ्रता से बाण चलाने वाले हम्मीरदेव के वायु के समान गतिशील बाण शत्रुओं को काटते हुये दिखाई नहीं देते थे; रक्त की विस्तृत धारा को उगलने वाले गिरते हुए शरीरों द्वारा उन बाणों का अनुमान किया जाता था ॥७३॥

**म्लेच्छाधीशोऽप्यस्य मूर्च्छत्प्रतापः पत्रिव्रातैरातुदत् कुञ्जरेन्द्रान् ।**
**तैरत्यर्थं मर्मविद्धोऽपि युद्धे तस्थौ पक्षे रोद्धुराधोरणस्य ॥७४॥**

म्लेच्छपति अलाउद्दीन भी हम्मीरदेव के बाण-समूहों के कारण मूर्छित प्रताप वाला बन गया और उसने अपने हाथियों को हम्मीर की सेना पर आक्रमण के लिये प्रेरित किया। किन्तु जब वह स्वयं हम्मीर के बाणों से युद्ध में मर्मविद्ध होने लगा तो उसे आक्रमण रोकने वाले महावत के पीछे छिपना पड़ा ॥७४॥

**विश्राम्यन्ती तत्र शुभ्रातपत्रच्छायासीना स्वैरमेवोभयत्र ।**
**भूयो भूयो भूभृतोः सञ्चरन्ती पार्श्वं प्रापन्नैव खेदं जयश्रीः ॥७५॥**

युद्धस्थल में, वीर हम्मीरदेव और अलाउद्दीन इन दोनों राजाओं के शुभ्र छत्रों की छाया में यथेच्छ बैठने वाली विजय-लक्ष्मी कभी हम्मीरदेव के और कभी अलाउद्दीन के पास जाती हुई खिन्न नहीं होती थी ॥७५॥

**नागात् तस्मात् पातितात् यावदन्यं नाऽगाद् वेगाद् वाहनं चाहुवाणः ।**
**तावद् भिन्दन् भिन्दिपालेन वक्षश्चिक्षेपैनं वीरतल्पे विपक्षः ॥७६॥**

अपने मारे गये हाथी को छोड़कर ज्यों ही हम्मीरदेव चौहाण दूसरे हाथी पर चढ़ने लगे उसी समय शत्रु ने भिन्दिपाल (बन्दूक ?) नामक शस्त्र से उनका वक्षःस्थल भेद कर उन्हें वीर-शय्या पर सुला दिया ॥७६॥

**सुचिरमथविपक्षक्षोणिपानीकिनीनां क्षतजमयनदीभिः क्षोणिमाप्लाव्य कृत्स्नाम् ।**
**तनुमनुपमरूपां स्थेयसीं कीर्तिरूपामविशदसमतेजा वीरहम्मीरदेवः ॥७७॥**

इस प्रकार सम्पूर्ण युद्धभूमि को बहुत देर तक शत्रु राजा की सेनाओं के घावों से बहने वाली रुधिर की नदियों से पाट कर, अद्वितीय तेजस्वी वीर हम्मीरदेव ने (अपने क्षणभंगुर पार्थिव शरीर को छोड़कर) अनुपम शोभायुक्त चिरस्थायी यशःशरीर में प्रवेश किया ॥७७॥

इति सुर्जनचरितमहाकाव्ये द्वादशः सर्गः

---

(७६) भिन्दिपालः प्रायेण 'गुलेल' इति ख्यातः परन्तु नालिकास्त्रेऽपि अस्य शब्दस्य प्रयोगो दृश्यते। अत्र तु औचित्यवशात् नालिकास्त्रं 'बन्दूक' इति ख्यातमेव प्रतीयते।

# त्रयोदशः सर्गः

**पूर्वो हम्मीरदेवस्य सप्तमः शत्रुमर्दनः।**
**शहाबुद्दीनमन्धोऽपि कुण्ठबाणेन योऽवधीत्॥ १॥**
**पृथ्वीराजस्य तस्यैव समो भ्राता जयत्यजः।**
**माणिक्यराजो मतिमानंशेन बुभुजे महीम्॥ २॥**

हम्मीरदेव के शत्रु को रौंदने वाले सातवें पूर्वज पृथ्वीराज के, जिन्होंने अन्धे होने पर भी कुण्ठित बाण से शहाबुद्दीन को मार दिया था, छोटे भाई बुद्धिमान् **माणिक्यराज**, जो अपने भाई के समान थे, अपने भाग की पृथ्वी पर शासन करते रहे॥१–२॥

**सदाऽरुणदरातीनां स दारुणधियां पुरम्।**
**तमाऽऽहितधियः साधु तमाऽहितकरं विदुः॥ ३॥**

माणिक्यराज दारुण बुद्धिवाले शत्रुओं के नगरों को सदा नष्ट-भ्रष्ट करते रहे। बुद्धिमान् लोग उनको अन्धकार को नष्ट करने वाले सूर्य के समान अथवा राहु के शत्रु भगवान् विष्णु के समान मानते थे॥ ३॥

**नित्यमाश्रित्य नृत्यन्ती सद्वंशालम्बिनो गुणान्।**
**खेलति स्म निरालम्बे रङ्गे यत्कीर्तिनर्तकी॥ ४॥**

उत्तम वंश में उत्पन्न राजा माणिक्यराज के गुणों का आश्रय लेकर नाचती हुई उनकी कीर्ति रूपी नर्तकी आकाश में खेल किया करती थी, जैसे उत्तम बाँस में बाँधे हुये रस्सों का सहारा लेकर नाचती हुई नटी आकाश में अपने खेल दिखाया करती है॥ ४॥

**चक्रे न पात्रमालिन्यं पतङ्गे मित्रतामधात्।**
**अतः प्रतापदीपोऽस्य जगदुत्तरतां गतः॥ ५॥**

(दीपक अपने पात्र को मलिन बना देता है और सूर्य से उसकी शत्रुता है क्योंकि सूर्योदय होते ही वह बुझ जाता है, किन्तु) माणिक्यराज का प्रताप-रूपी दीपक अलौकिक है क्योंकि वह कभी पात्रमालिन्य नहीं करता (अर्थात् सुपात्र पुरुषों के हृदयों को कभी मलिन नहीं करता) और सूर्य से उसकी मित्रता है (अर्थात् वह सूर्य के समान तेजस्वी है)॥ ५॥

**चण्डराजस्तनूजोऽस्य चण्डभानुसमप्रभः।**
**चण्डराजकपद्मानामचण्डकिरणोऽभवत्॥ ६॥**

माणिक्यराज के प्रचण्ड सूर्य के समान तेजस्वी **चण्डराज** नामक पुत्र हुये जो शत्रुराजाओं रूपी कमलों के लिये अचण्डकिरण चन्द्रमा के समान थे (जैसे चन्द्रोदय के समय कमल मुकुलित हो जाते हैं वैसे ही इनको दखकर शत्रु मुरझा जाते थे)॥ ६॥

**स पुत्रं भीमविक्रान्तं भीमराजमजीजनत्।**
**भीमसेनसमः स्थाम्ना भीमसेनासमृद्धिमान्॥ ७॥**

उनके भयंकर पराक्रमी **भीमराज** नामक पुत्र हुये जो भीमसेन के समान पुष्ट थे और बलवती सेना की समृद्धि से युक्त थे॥ ७॥

**असौ विजयराजाख्यं राजा विजयशालिनम्।**
**तनयं जनयामास जनरञ्जनचेष्टितम् ॥ ८ ॥**

भीमराज के **विजयराज** नामक विजयशाली पुत्र उत्पन्न हुये जो प्रजा को प्रसन्न रखने का प्रयत्न किया करते थे ॥ ८ ॥

**रयणस्तनयस्तस्य रयनर्तितविक्रमः।**
**स्मयमानोद्धतानेकः स्मयमानोऽजयत् परान् ॥ ९ ॥**

उनके **रयण** नामक पुत्र हुये जो अपने वेग से पराक्रम को नचाया करते थे और जो अकेले ही, गर्व और अभिमान से उद्धत शत्रुओं को हँसते हुये जीत लेते थे ॥ ९ ॥

**तस्मान् महार्घनिःसीमगुणरत्नमहोदधेः।**
**कोल्लणः कुलकल्लारकलानिधिरजायत ॥१०॥**

उन बहुमूल्य और असीम गुणरत्नों के समुद्र रयण के **कोल्लण** नामक पुत्र हुये जो अपने कुल-कुमुद के लिये चन्द्रमा के समान थे ॥१०॥

**विनीतो नीतिशास्त्रेषु विनीतोल्वणदूषणः।**
**स्वनये सोऽभवत् ख्यातः स्वनयेऽस्य यथारिपुः ॥११॥**

वे नीतिशास्त्रों में निष्णात थे और उन्होंने उग्र दोषों को दूर कर रक्खा था। जिस प्रकार उनके शत्रु अपनी अनीति में कुख्यात थे उसी प्रकार वे अपनी नीति में विख्यात थे ॥११॥

**गङ्गदेवोऽभवत् तस्माद् भुवं गोपायति स्म यः।**
**भ्रूभङ्गोद्धतदृक्पातैः क्लृप्तभङ्गो विरोधिनाम् ॥१२॥**

उन कोह्लण के **गंगदेव** उत्पन्न हुये जिन्होंने अपनी भृकुटी के क्रुद्ध कटाक्ष से शत्रुओं को नष्ट करके पृथ्वी पर शासन किया ॥१२॥

**देवसिंहः सुतोऽस्यासीद् देवोपमपराक्रमः।**
**नरदेवो नृणामिन्दुः शरदेवोपरञ्जितः ॥१३॥**

गंगदेव के **देवसिंह** नामक पुत्र हुये जो देवता के समान पराक्रमी थे। वे नरदेव लोगों को शरद् ऋतु से शोभित पूर्ण चन्द्र के समान (सुन्दर और शीतल) प्रतीत होते थे ॥१३॥

**तस्मात् समरसिंहोऽभूद् यथार्थामभिधां दधत्।**
**कीर्तिहंसीमुखे यस्य विपच्छैवालमञ्जरी ॥१४॥**

देवसिंह के **समरसिंह** नामक यथार्थनामा पुत्र हुये क्योंकि वे समर में वास्तव में सिंह के समान पराक्रमी थे। विपत्ति रूपी शैवालमंजरी उनकी कीर्ति-रूपी हंसी के मुख में रहती थी अर्थात् वे विपत्ति नष्ट करने में विख्यात थे ॥१४॥

**नरपालमयं नाम्ना पुत्रं प्राप प्रतिष्ठितम्।**
**नापोहति स्म यं लक्ष्मीर्नरपालक्रमागता ॥१५॥**

समरसिंह के **नरपाल** (नापाजी) नामक प्रतिष्ठित पुत्र उत्पन्न हुये जिनको राजपरम्परागत लक्ष्मी ने कभी नहीं छोड़ा ॥१५॥

**हम्मीरस्तनयस्तस्य　　समीरणसखप्रभः ।**
**अजनिष्ट　प्रतापेन　जनिताऽनिष्टकृज्ज्वरः ॥१६॥**

उनके **हम्मीर** (हामा जी) नामक अग्नि के समान तेजस्वी पुत्र हुये जिनके प्रताप के कारण शत्रुओं को ज्वर आ जाता था ॥१६॥

**वरसिंहः　सुतस्तस्य　वरसिंहपराक्रमः ।**
**अभीरोषाञ्चकारारीन्　वैरोपहितवैशसैः ॥१७॥**

उनके **वरसिंह** नामक श्रेष्ठ सिंह (नरसिंह) के समान पराक्रमी पुत्र हुये जिन्होंने निर्भय होकर शत्रुता के कारण प्रवृद्ध क्रोधाग्नि से शत्रुओं को जला दिया॥ १७॥

**भारमल्लोऽभवत् तस्माद् भारमग्र्यं दधद् भुवः ।**
**स　भारोचितदिग्वीरसभारोहणविश्रुतः ॥१८॥**

उनसे **भारमल्ल** उत्पन्न हुये जो (अपने बलिष्ठ कंधों पर) पृथ्वी का भारी भार उठाते थे और प्रभायुक्त दिग्वीरों की सभा के स्वामी होने के कारण विख्यात थे ॥१८॥

**तस्मान् नर्मदनामाऽभून्　नृपधर्मधुरन्धरः ।**
**मर्मस्पृक्　समरेऽरीणां　शरैर्वर्मभृतामपि ॥१९॥**

उनके राज-धर्म के पारंगत **नर्मद** नामक पुत्र हुये जो युद्ध में कवचधारी शत्रुओं के मर्मस्थलों को भी अपने बाणों से भेद देते थे ॥१९॥

**तीक्ष्णकौक्षेयकस्तस्य वैरिवामदृशां　दृशाम् ।**
**धारामश्रुमयीं　दत्त्वा　कज्जलश्रियमाददे ॥२०॥**

उनकी तेज (काली) तलवार शत्रुस्त्रियों के नेत्रों को आँसुओं की धारा देकर उनसे कज्जल की कालिमा ग्रहण कर लेती थी ॥२०॥

**धर्मपत्नी　बभूवाऽस्य　धारानाम्नी धरापतेः ।**
**अनतिक्रान्तमर्यादा　यथा　धारा　महोदधेः ॥२१॥**

नर्मद राजा के धारा नामक धर्मपत्नी थीं जिन्होंने समुद्र की धारा के समान कभी मर्यादा का उल्लंघन नहीं किया ॥२१॥

**नर्मदस्य महीभर्तुर्महिषी　तनुमध्यमा ।**
**उचितं　नर्मदा　साऽपि　महावंशभवा यतः ॥२२॥**

नर्मद राजा की सुमध्यमा और अच्छे कुल में उत्पन्न रानी भी वास्तव में नर्मदा (आनन्द देने वाली) थीं। (रानी महान् वंश में उत्पन्न थीं और नर्मदा नदी के तट पर बड़े-बड़े बाँस उत्पन्न होते हैं) ॥२२॥

---

(१७) अभीः निर्भयः। ओषाञ्चकार ददाह। वैशसं क्रोधः।

**सुतमर्जुननामानं नृपस्तस्यामजीजनत् ।**
**शुद्धं स्वातीभवो बिन्दुः शुक्तौ मुक्ताफलं यथा ॥२३॥**

नर्मद राजा ने रानी धारा में **अर्जुन** नामक पुत्र को जन्म दिया, जैसे स्वाति नक्षत्र का जल-बिन्दु सीप में शुद्ध मोती को जन्म देता है ॥२३॥

**कर्णमूर्जितसत्वेन जितवन्तममुं जनाः ।**
**विजयाभिख्यया दीप्तमर्जुनं साधु मेनिरे ॥२४॥**

उत्कृष्ट पराक्रम के कारण कर्ण को जीतने वाले और विजय की शोभा से दीप्त अर्जुन को लोग वास्तव में कर्णविजयी 'विजय' नामक कुन्तीपुत्र अर्जुन ही मानते थे ॥२४॥

**सञ्चरन् समराग्रेषु भीमसेनानुगोऽर्जुनः ।**
**पश्चाच्चकार नकुलं वाजिशिक्षाविशारदम् ॥२५॥**

युद्धभूमि में भीमसेन के पीछे और नकुल के आगे चलने वाले अर्जुन के समान, राजा अर्जुन के आगे भीषण सेना चलती थी और पीछे अश्वविद्याविशारद चलते थे ॥२५॥

**क्रमेणाक्रान्तभुवना द्विजेशोपरि तस्थुषी ।**
**मूर्तिर्मुरहरस्येव यत्कीर्तिर्विभुतामगात् ॥२६॥**

क्रमशः सम्पूर्ण लोकों को व्याप्त करने वाली और चन्द्रमा के ऊपर स्थित होने वाली (चन्द्र-बिम्ब तक फैलने वाली और अपनी कान्ति से चन्द्रमा को फीका करने वाली) जिनकी कीर्ति, सम्पूर्ण लोकों में व्याप्त तथा गरुड़ के ऊपर बैठने वाले भगवान् कृष्ण (विष्णु) के विराट् रूप धारण करने वाले वामनावतार के समान विस्तृत हुई ॥२६॥

**विभावसुसमे तस्मिन् विभावसुनिभप्रभे ।**
**वसुधाराः प्रयच्छन्ती वसुधाराधिताऽभवत् ॥२८॥**

शोभा (विभा) और धन (वसु) से युक्त, अथवा शोभा से देवता (वसु) के समान, एवं अग्नि (विभावसु) के समान तेजस्वी राजा अर्जुन से धनधान्य की धारा उत्पन्न करने वाली पृथ्वी प्रसन्न थी ॥२७॥

**असौ दशरथाख्यस्य दुहितुर्दहनान्तिके ।**
**वैजयन्त्याः स्ववंशस्य जयन्त्याः पाणिमग्रहीत् ॥२८॥**

राजा अर्जुन ने दशरथ की पुत्री जयन्ती का, जो अपने वंश की पताका (वैजयन्ती) थी, अग्नि के समक्ष, पाणिग्रहण किया ॥२८॥

**जयन्ती शीलसत्वाभ्यां प्रथिता पतिदेवता ।**
**नताङ्गी नियतं तेन जयन्तीत्यभिधां दधे ॥२९॥**

विख्यात और पतिव्रता नताङ्गी जयन्ती का नाम, शील और सत्व से विजयशालिनी होने के कारण, सार्थक ही था ॥२९॥

**आननेनाऽथ निन्दन्ती शारदीनं निशाकरम् ।**
**अलकान्तेन कान्तेन क्लेशयन्त्यलिसन्ततिम् ॥३०॥**
**नेत्रश्रीर्तजिताऽनेकद्राघीयःकेतकीदला ।**
**रदनच्छदरागेण रञ्जयन्ती रदान् सितान् ॥३१॥**
**अनीचस्तनसत्कान्त्या हसन्ती करिणां कटान् ।**
**नयन्ती कदलीकाण्डं जघनेन जघन्यताम् ॥३२॥**
**सरागचरणन्यासहसितस्थलसारसा ।**
**जैत्री शक्तिरनङ्गस्य सा चकाशे शरीरिणी ॥३३॥**

जयन्ती अपने सुन्दर मुख से शरद्-ऋतु के चन्द्रमा को तिरस्कृत करती थी, अपने सुन्दर बालों से भ्रमरों की पंक्ति को (पराजय की) पीड़ा देती थी, अपने नेत्रों की शोभा से घने और लम्बे पत्तों वाली केतकी को दूर भगाती थी, अपने अधर की लालिमा से शुभ्र दाँतों को भी रक्त बना देती थी, उन्नत स्तनों की सुन्दर कान्ति से हाथियों के गण्डस्थलों का उपहास करती थी, अपनी जंघा की शोभा से केले के स्कन्ध को हेय समझती थी और अपने रंजित चरणों की कलापूर्ण चाल से, भूमि पर चलने वाले सारस पक्षियों का उपहास करती थी; वह कामदेव की मूर्तिमती विजयशक्ति के समान शोभित होती थी ॥३०–३३॥

**स तस्यां वंशधौरेयं सुतमिच्छन् सतां प्रियम् ।**
**प्राप पुण्यं सरः शौरेः पदाम्बुजमुपासितुम् ॥३४॥**

राजा अर्जुन जयन्ती में वंशवाही और सज्जनों के प्रिय पुत्र प्राप्त करने की इच्छा से भगवान् विष्णु के पद-कमलों की सेवा करने के लिये किसी पुण्य सरोवर के समीप गये ॥३४॥

**संसारसारसरसों स ससार ससारसाम् ।**
**सरसः सुरसासाररसारासिसुसारसाम् ॥३५॥**

वे संसार के सार (जल) से सरस, तथा सुन्दर कमलों (सारस) से शोभित, एवं सरोवर के (सरसः) सुन्दर जल के (सुरसस्य) बरसते हुये (आसारैः) बिन्दुओं से (रसैः) चारों ओर (आ) नाचने वाले (रासिनः) सुन्दर हंसों से युक्त (सुसारसां) सरोवर के पास पहुँचे (ससार) ॥३५॥

**अपोढकपटावेशैस्तपोभिः पृथिवीभुजा ।**
**नित्यमाराधयाञ्चक्रे पादपद्मं परात्मनः ॥३६॥**

निष्कपट तप से राजा अर्जुन ने नित्य भगवान् के चरण-कमलों की आराधना की ॥३६॥

**परापरपरेऽपारपापपूररिपौ पुरः ।**
**पुपूरेऽपि रमारामे परा प्रेमपरम्परा ॥३७॥**

पर (कारण) और अपर (कार्य) दोनों के पारगामी (पर) तथा अपार पापों के समूह (पूर) के शत्रु (रिपु) लक्ष्मीपति (रमाराम) भगवान् विष्णु में राजा की प्रेमपरम्परा पूर्णता को प्राप्त हुई (पुपूरे) ॥३७॥

---

(३५) ससारसां कमलैः शोभिताम् । सरसः सरोवरस्य सुरसस्य सुन्दरजलस्य आसारैः वर्षद्भिरिव रसैः आ समन्तात् रासिनः क्रीडन्तः सुसारसाः शोभनाः हंसाः यस्यास्ताम् ।

(३७) पराऽपराभ्यां कार्यकारणाभ्यां परे विभिन्ने अतीते इत्यर्थः । अपाराणां पापानां पूरस्य समूहस्य रिपौ निवर्तके । रमारामे लक्ष्मीपतौ । पुपूरे पूर्णतां गता ।

**अयन्तं सर्वसिद्धीनामाश्रयन्तं श्रियः पतिम् ।**
**सुतरामाप्नुवन्त्येव सुतरामादिसम्पदः ।।३८।।**

लक्ष्मीपति भगवान् का आश्रय लेने वाले और इसलिये सर्वसिद्धियों को प्राप्त करने वाले पुरुष को अवश्य ही पुत्रकलत्रादि सम्पत्ति प्राप्त हो जाती है ।।३८।।

**कालेन कियता तस्य पुरः प्रणिहितात्मनः ।**
**स्वप्नान्ते परमेशानः प्रपन्नापन्नवत्सलः ।।३९।।**
**पपाताऽऽपाततः पूतपतितः पापतापनुत् ।**
**पतत्पतिपतिः पाता तप्तापि तपतां पिता ।।४०।।**

कुछ दिन बाद, ध्यान में मग्न चित्त वाले राजा अर्जुन के आगे स्वप्न में, शरणागतवत्सल, पतितपावन, पापों के सन्ताप को नष्ट करने वाल, गरुड़पति, जगत्-पालक, तपस्वी लोगों के पिता होने पर भी स्वयं तप करने वाले भगवान् विष्णु पूर्णरूप से प्रकट हुये ।।३९–४०।।

**अवदच्च स्ववंशस्य वतंसं यशसोर्जितम् ।**
**धर्मेणाप्रतिमेनैकधुरीणं धर्मसूनुना ।।४१।।**
**जयन्त्यां जयजीवातुं धनञ्जयमिवापरम् ।**
**अचिरेणैव लब्धाऽसि तनयं नयकोविदम् ।।४२।।**

अपने कुल के भूषण, यश से उन्नत, अद्वितीय धर्म के कारण युधिष्ठिर के समान राजा अर्जुन स भगवान् बोले—'तुम शीघ्र ही जयन्ती में विजय की जीवनौषधि के समान एवं द्वितीय अर्जुन के समान एक नीतिकुशल पुत्र प्राप्त करोगे'।।४१–४२।।

**प्रबुद्धोऽथ विशुद्धात्मा शुद्धान्तरहितः सुधीः ।**
**हर्षान् मेने हृषीकेशं समक्षमिव वीक्षितम् ।।४३।।**

उस समय ब्रह्मचर्यव्रतधारी, विशुद्ध अन्तःकरणवाले और विद्वान् राजा अर्जुन जब जागे तो हर्ष के कारण उन्हें ऐसा लगा मानों उन्होंने भगवान् के साक्षात् दर्शन किये हों ।।४३।।

**अन्तर्वत्नीं ददर्शाऽथ धर्मपत्नीं धरापतिः ।**
**मनोरथतरोः शाखामिव प्रथमपुष्पिताम् ।।४४।।**

तत्पश्चात्, राजा अर्जुन की धर्मपत्नी धारा गर्भवती हुई, मानों राजा के मनोरथ-रूपी वृक्ष की शाखा में पहला पुष्प लगा ।।४४।।

**शकुन्तलेव भरतं धर्म्यं वंशधुरन्धरम् ।**
**जयन्तमिव पौलोमी जयन्ती सुषुवे सुतम् ।।४५।।**

जैसे शकुन्तला ने भरत को और इन्द्राणी ने जयन्त को जन्म दिया वैसे ही जयन्ती ने धर्मनिष्ठ और वंशधुरंधर पुत्र को जन्मा ।।४५।।

---

(४०) पतत्पतेः गरुडस्यः पतिः स्वामी विष्णुरित्यर्थः ।
(४१) एकधुरीणं सदृशम् ।

**न परं निजवंशस्य सोऽभूदालम्बनं शिशुः।**
**कलिना क्लिश्यमानस्य धर्मस्याऽपि महामनाः ॥४६॥**

महान् आत्मा वाला वह बालक केवल अपने वंश का ही आलम्बन नहीं हुआ, किन्तु कलियुग द्वारा सताये गये धर्म का भी आलम्बन हुआ ॥४६॥

**पुरा देवान् पुरोडाशैः पुरुभिः पूरयत्यसौ।**
**इतीव मुदितो जातः प्रदक्षिणशिखः शिखी ॥४८॥**

उस बालक ने पूर्वजन्म में बहुत से पुरोडाश (हव्य विशेष, सोमरस, हुतशेष) से देवताओं को तृप्त किया था इसलिये उसके जन्म के समय अग्निदेव प्रसन्न होकर दक्षिण ज्वाला से प्रज्वलित थे (अग्नि का दक्षिण ज्वाला से जलना शुभ शकुन है) ॥४७॥

**तस्य जन्मनि संभूतैः शुभवादित्रनिःस्वनैः।**
**पूरिता हरितो हर्षात् प्रसन्नमुखतां दधुः ॥४८॥**

उसके जन्म के समय बजने वाले शुभ बाजों के शब्दों से पूरित होकर दिशायें हर्ष से प्रसन्न-मुख हो रही थीं ॥४८॥

**शूरः स्वकुलपद्मानां शूरोऽसौ रणधर्मयोः।**
**इति शूरजनं नाम्ना तमाहुः सूरयः शिशुम् ॥४९॥**

वे शिशु अपने कुल-कमल के लिये सूर्य (शूर) थे और युद्ध में तथा धर्म में वीर (शूर) थे, इसलिये वुद्धिमान् पुरुष उन्हें 'शूरजन' (सुर्जन) नाम से पुकारते थे ॥४९॥

**शुद्धसंस्कारसंभेदादथ सातिशयां दधे।**
**अर्जुनप्रभवः शोभां मुकुरो मार्जनादिव ॥५०॥**

विशुद्ध संस्कारों के संसर्ग से अर्जुनपुत्र सुर्जन की शोभा अत्यन्त बढ़ गई थी, जैसे माँजने से शीशे की चमक बढ़ जाती है ॥५०॥

**प्रतिपत्तिर्नृणां तुल्या प्रतिपत्तिथिमाश्रिते।**
**सुधामहसि तस्मिंश्च सुधामहसितस्मरे ॥५१॥**

प्रतिपदा (द्वितीया) तिथि के उदीयमान अमृत-वर्षी नव चन्द्रमा को और अपनी आभा से कामदेव का उपहास करने वाले शिशु सुर्जन को लोग समान समझते थे ॥५१॥

**विद्याः कुलोचितास्तेन गुरुणा गुरुणार्ऽपिताः।**
**प्रज्ञाबलेन बालेन सहस्रशिखरीकृताः ॥५२॥**

मेधावी बालक सुर्जन ने पूज्य गुरु द्वारा सिखाई गईं कुलोचित विद्याओं को अपनी प्रतिभा से हज़ार गुना बना दिया ॥५२॥

**एकेनैव कराग्रेण विस्फुरत्तरवारिणा ।**
**स्थूलतालतरुश्रेणिं तरुणिम्नाप्यनाश्रितः ॥५३॥**
**बाललीलाविलो लोलं विलुलाव बली बलात् ।**
**लवं लवं ललोलावं लावं वा वेल्लिवल्ललिम् ॥५४॥**

पूर्णतया तरुण न होने पर भी बलवान् और सुन्दर सुर्जन, अपने एक हाथ में चमकती तलवार लेकर मोटे-मोटे ताड़ के वृक्षों की श्रेणी को, बाललीला के कारण चपल होकर हठात् कोमल लता के समान, काट काट कर टुकड़े-टुकड़े कर देते थे ॥५३–५४॥

**लीलयाऽपि विनिर्मुक्तास्तेन नव्यधनुर्भृता ।**
**अपि शैलशिखाग्राणि पातयामासुराशुगाः ॥५५॥**

नवीन धनुर्धारी द्वारा लीला वश छोड़े गये बाण पर्वतों के शिखरों को भी गिरा देते थे ॥५५॥

**विदग्धवनिताकूतकलाहस्तावलम्बनम्**
**उपास्यं पुष्पबाणेन विलासानां रसायनम् ॥५६॥**
**भागधेयं विभूषाणां रतेः प्रथममङ्गलम् ।**
**लावण्यामृतपाथोधेः पूर्णशीतांशुमण्डलम् ॥५७॥**
**कोषागारं कृशाङ्गीनां मनोरथमहामणेः ।**
**वयो मध्यममस्याऽथ क्रमादाशिश्रियद् वपुः ॥५८॥**

क्रमशः सुर्जन के शरीर ने यौवनावस्था का आश्रय लिया—उस यौवन का जो काम-कला-कुशल कामिनियों की आकूत-कला का दाहिना हाथ (हस्तावलम्बन) है, कामदेव के लिये सेवा करने योग्य है, विलासों का रसायन (संजीवन औषध) है, आभूषणों का सौभाग्य (अथवा भाग) है, रति का प्रथम मंगल है (रति की सुहागरात है), लावण्यामृतसमुद्र के लिये पूर्णचन्द्र-बिम्ब है और ललनाओं के मनोरथ-रूपी महामणियों का खजाना है ॥५६–५८॥

**अन्यदा तुलयन्त्यस्य वदनं विधुना सह ।**
**पर्याप्तरुचितारुण्ये तत् केन तुलनामियात् ॥५९॥**

सुर्जन के मुख को पहले चन्द्रमा की उपमा दिया करते थे, किन्तु जब वह मुख पूर्ण यौवन की पर्याप्त आभा से सुशोभित हो गया तब उसकी उपमा किससे दी जाय? ॥५९॥

**शैशवे कर्षता नूनमनेन करिणां करान् ।**
**आदाय दीर्घपीनत्वं तेभ्यः स्वभुजयोर्दधे ॥६०॥**

बचपन में ही उन्होंने हाथियों की सूँडों को खींच-खींच कर उनकी लम्बाई और मोटाई अपनी भुजाओं में रख ली ॥६०॥

---

(५४) लवं लवं खण्डशः। ललः विलसन्। लावं लावं छित्वा छित्वा ।

**पृथुलं पृथिवीभारं वहन्नेष न खिद्यताम्।**
**कन्धरायाः परीणाहमिति तस्याऽतनोद् वयः ॥६१॥**

युवावस्था ने उनके कंधों को विशाल बना दिया ताकि उन्हें भूमि का विपुल भार वहन करने में कष्ट न हो ॥६१॥

**स्वच्छन्दं रमतामत्र रमया सहितो हरिः।**
**विशालमिति वक्षोऽस्य सदृक्षो विदधे विधिः ॥६२॥**

विष्णु के मित्र ब्रह्मा ने सुर्जन का वक्षःस्थल विशाल बनाया ताकि उसमें विष्णु भगवान् लक्ष्मी के साथ स्वच्छन्द रमण कर सकें ॥६२॥

**प्रायो मदनिदानं स्यादन्येषां मध्यमं वयः।**
**तेनव नीतमेतस्य विनयप्रह्वतां वपुः ॥६३॥**

और लोगों के लिये युवावस्था प्रायः मादक सिद्ध होती है, किन्तु सुर्जन के शरीर को उसी युवावस्था ने विनय से नम्र बना दिया ॥६३॥

**धर्म एवाऽभवत् तस्य प्रणयः सर्वतोमुखः।**
**अतस्तदनुवृत्यैनमन्ववर्तत मन्मथः ॥६४॥**

सुर्जन की धर्म में ही सर्वतोमुखी प्रीति हुई, अतः कामदेव भी उनमें धर्मानुकूल रीनि से ही रहते रहे ॥६४॥

**शौर्यसाहससत्वानि तस्य नैसर्गिकाण्यपि।**
**पर्याप्ति प्रापयामास शैशवाच्चरमं वयः ॥६५॥**

शैशव के बाद आने वाले यौवन ने सुर्जन के स्वाभाविक बल, साहस और पराक्रम को पूर्ण बना दिया ॥६५॥

**तत्र तत्र तता रीतिरराततितितुत्तरा।**
**तारितार्तातुरातीततरुता रतिरा ततः ॥६६॥**

इसके बाद (ततः) सुर्जन ने सब जगह (तत्र तत्र), शत्रुओं के समूह को अत्यन्त कष्ट देने वाली (अराततितितुत्तरा), पीड़ितों का उद्धार करने वाली (तारितार्ता) सर्वथा सम्पन्न (आतुराऽतीत) एवं फलीफूली (तरुता) तथा आनन्ददायिनी (रतिरा) रीति को विस्तृत किया (तता) ॥६६॥

**उचिते समये शूरः संश्रित्योदयभूभृतम्।**
**प्रथीयसा प्रतापेन प्राप सर्वोज्वलां श्रियम् ॥६७॥**

उचित समय पर (राजतिलक के समय) सुर्जन ने, उदयाचल पर चढ़कर उज्वल तेज से सारी दिशाओं को प्रकाशित करने वाले सूर्य के समान, उन्नति शिखरारुढ़ होकर अपने महान् प्रताप से सबको उज्वल बनाने वाली शोभा प्राप्त की ॥६७॥

---

(६६) ततः तदनन्तरं तत्र तत्र विभिन्नस्थलेषु अराततितितुत्तरा अरातीनां ततिमतिशयेन तुदति इत्यर्थः, तारितार्ता तारिता आर्ताः यया सा, आतुरातीततरुता आतुरतामतीता सर्वथा सम्पन्नेत्यर्थः तरुता द्रुमत्वं छायाफलप्रदानादिना यस्यां सा अतिशयेन फलितेत्यर्थः, रतिरा रतिं राति ददाति आनन्दप्रदेत्यर्थः, रीतिः तता विस्तृता।

**सञ्चिकाय समर्थोऽपि पुमर्थोत्पादने स्वयम् ।**
**स वाहिनीपरीवारं व्यवहाराय वीरहा ॥६८॥**

स्वयं पुरुषार्थ प्राप्ति के लिये समर्थ होने पर भी वीरों को परास्त करने वाले सुर्जन ने व्यवहार का निर्वाह करने के लिये सेना का संग्रह किया ॥६८॥

**भवन्ति शक्तयस्तिस्त्रः क्ष्माभृतां जयहेतवः ।**
**चतुर्थी शक्तिरेतस्य विष्णुभक्तिरजायत ॥६९॥**

राजाओं की विजय का कारण तीन शक्तियाँ (प्रभु-शक्ति, उत्साह-शक्ति और मंत्र-शक्ति) हुआ करती हैं, किन्तु सुर्जन के पास इन तीनों से विशिष्ट विष्णुभक्ति रूपी चौथी शक्ति भी थी ॥६९॥

**दूनानन्दनिदानेन नन्दनन्दननन्दिना ।**
**दीननादनुदाऽनेन ददे दानं दिने दिने ॥७०॥**

पीडित जनों को आनन्द देने वाले, नन्दनन्दन श्रीकृष्ण को प्रसन्न करने वाले और दीनों के आर्तनाद को नष्ट करने वाले सुर्जन प्रतिदिन दान देते थे ॥७०॥

**न केवलं कुलायातामयं वृन्दावतीं पुरीम् ।**
**सुदुर्गाण्यपि दुर्गाणि चकार करसात् कृती ॥७१॥**

सुर्जन ने, केवल परम्परा से चली आने वाली वृन्दावती (बूंदी) नगरी को ही आधीन नहीं किया, किन्तु अन्य कई दुर्गम दुर्गों को भी अपने वश में कर लिया ॥७१॥

**सर्वाशाः परिपूरयन् वसुचयैः पद्माकरालम्बनैः**
**सूरः शूरजनश्च तुल्यमुदयं यातः प्रतापोन्नतौ ।**
**सूरः पर्वणि सङ्गतः परमवत्येकं द्विजाधीश्वरं**
**नित्यं शूरजनो धिनोति शतशस्तादृग्द्विजाधीश्वरान् ॥७२॥**

कमलों के समूह का आलम्बन लेने वाले किरण-समूहों से सारी दिशाओं को व्याप्त करने वाला सूर्य और लक्ष्मी के कोश का आलम्बन लेने वाले धनसमूहों से सारी दिशाओं को परिपूर्ण करने वाले राजा सुर्जन, दोनों ही प्रतापोन्नति के उदयाचल पर समानरूप से आरूढ़ हुये; किन्तु सूर्य तो केवल अमावास्या के दिन ही चन्द्रमा (द्विजाधीश्वर) से मिलकर उसकी रक्षा करता है, लेकिन राजा सुर्जन ने नित्य ही सैकड़ों श्रेष्ठ ब्राह्मणों (द्विजाधीश्वर) का संग करके उनको प्रसन्न किया ॥७२॥

---

(६८) संचिकाय संजग्राह ।
(७०) दीनानां नादं नुदति दूरीकरोतीति दीनानादनुत् तेन ।
(७२) पर्वणि अमायाम् ।

**यत्राशाजैत्रयात्राकुतुकिनि सहसा त्रासितारातिचक्रे**
**शक्रेभश्रोत्ररन्ध्रं दलयति बलवत्कार्मुकक्रेङ्कृतेन ।**
**प्रोद्दामभ्रम्यदद्रिप्रतिभटकरटिव्राततीव्रप्रपात-**
**व्यग्रां दर्वीकरेन्द्रः कलितफणभरक्लेशमुर्वीं बिभर्ति ।।७३।।**

शत्रुसमूह को पीडित करने वाले सुर्जन की दिग्विजययात्रा के समय उनके बलवान् धनुष की भयंकर टंकार से इन्द्र के ऐरावत हाथी के कर्णकुहर भी पीड़ित हो जाते थे और शत्रुओं के उन्मत्त होकर घूमने वाले तथा पर्वत के समान विशाल हाथियों के समूह के नष्ट होकर तीव्र वेग से भूमि पर गिरने के कारण डगमगाने वाली पृथ्वी को शेषनाग बड़ी कठिनता से अपने पीड़ित फणों पर सँभाले रहते थे ।।७३।।

**यस्य प्रस्थानवेलाविलसदविरलक्रूरढक्कानिनाद-**
**त्रासादाशागजेषु स्खलनपरवशाभुग्नजङ्घाङ्गतेषु ।**
**वल्गत्सामन्तवर्गप्रबलपदभरव्यग्रभोगीन्द्रकम्पा-**
**दासीदाशीविषाणां सदनमपि समाक्रान्तमन्तर्ज्वरेण ।।७४।।**

सुर्जन की दिग्विजय यात्रा के प्रस्थान के समय जोरों से बजने वाले अनेक बड़े-बड़े नगाड़ों के भीषण शब्दों से भयभीत होकर टेढ़ी जाँघें करके भागने वाले दिशाओं के हाथियों के गिरने में विवश हो जाने पर और उछलते हुये सामन्तसमूहों के प्रबल पदभार से व्याकुल होकर शेषनाग के हिल जाने पर सर्पों का पाताल लोक भी सन्ताप से आक्रान्त हो जाता था ।।७४।।

**पाण्डित्यं गाण्डिवस्याप्यपहरति हरित्कुक्षिविक्षिप्तनादे**
**कोदण्डे यस्य चण्डे समरभुवि समारम्भसम्भारभाजि ।**
**दूरोत्क्षिप्तैः समन्तान्नभसि रयवशात् खण्डितैर्वैरिमुण्डै-**
**र्भानुः स्वर्भानुशङ्काशकलितहृदयः संभ्रमी बंभ्रमीति ।।७५।।**

सुर्जन के, अर्जुन के गाण्डीव धनुष की कुशलता को हर लेने वाले और दिशाओं की कोख को अपने शब्द से व्याकुल कर देने वाले, प्रचण्ड धनुष के युद्धभूमि में अपने कार्य में प्रवृत्त हो जाने पर, शत्रुओं के वेग से काटे गये और चारों ओर आकाश में दूर तक उछाले गये मुंडों को राहु समझ कर, सूर्य घबराहट से व्याकुलहृदय होकर इधर-उधर घूमता था ।।७५।।

**कोटाख्यं कूटयन्त्रप्रकटनपटुभिः कारुभिर्दारुणं तद्**
**दुर्गं भर्गावलेन्द्रप्रतिभटमटवीदुर्गमक्रूरमार्गम् ।**
**विद्राव्य द्राग् विदूरे हरिरिव नरकं मालवानामधीशम्**
**विक्रान्त्या स्फीतकान्त्या गुणगरिमभृतामग्रणीरग्रहीद् यः ।।७६।।**

श्रेष्ठ गुणों से सम्पन्न महापुरुषों में प्रधान राव सुर्जन ने अपने समुज्वल पराक्रम से भर्गावल के निवासी शत्रुओं को (केसर खाँ और डोकर खाँ नामक पठानों को जिन्होंने कोटा पर अधिकार

---

(७४) आभुग्ना वक्रं जंघा यस्मिन् कर्मणि तत् ।

कर रक्खा था) परास्त करके और शीघ्र ही, जैसे भगवान् विष्णु ने नरकासुर को दूर भगा दिया था वैसे ही, मालवा के सुलतान को दूर भगाकर, कूटयन्त्र बनाने में निपुण कारीगरों द्वारा निर्मित और जंगल के कारण दुर्गम तथा कठिन मार्ग वाले कोटा नामक भीषण दुर्ग को अपने अधिकार में कर लिया ।।७६।।

**विस्रस्तैः केशहस्तैर्नवसलिलभुवां विभ्रमं दर्शयन्त्यः**
**शम्पाः सम्पादयन्त्यो दिशि दिशि कनकस्निग्धगौरैः प्रतीकैः ।**
**धाराभिर्बाष्पवारां धरणिधरधुनीधोरणीः पूरयन्त्यः**
**क्लान्ताः कान्तारसीमन्यहितयुवतयः प्रावृषन्ति स्म यस्य ।।७७।।**

अपने बिखरे हुये केशपाशों से नवीन मेघों की छटा दिखलाने वालीं, अपने सोने जैसे चमचमाते हुये अंगों से सारी दिशाओं में बिजलियाँ चमकाने वालीं और अपने आँसुओं की धाराओं से पर्वतों की नदियों के प्रवाह को पूर्ण करने वालीं तथा जंगलों में घूमने के कारण थक जाने वालीं राव सुर्जन के शत्रुओं की युवतियों ने वर्षाऋतु का काम किया ।।७७।।

**नालो व्यालाधिनाथः स्फुरदमलदलान्यम्बुदाः शारदीना-**
**स्तारानाथो वराटः किरणसमुदयस्तस्य किञ्जल्कपुञ्जः ।**
**स्फारास्ताराः परागावलिरलिपटलं व्योम यस्यानिशं तद्-**
**व्याकोशं ब्रह्मपेशीसरसि विजयते यद्यशःपुण्डरीकम् ।।७८।।**

राव सुर्जन का रात-दिन विकसित रहने वाला यश-रूपी श्वेत कमल ब्रह्माण्ड रूपी सरोवर में खिल रहा था—शुभ्र शेषनाग उसके नालदण्ड थे, शरद् ऋतु के शुभ्र बादल उसके विकसित पत्ते थे, चन्द्रमा उसका बीजकोश था, चन्द्रकिरणों के समूह उसके केसर थे, उज्वल तारे उसका पराग समूह थे और काला आकाश उसके भ्रमर समूह के समान शोभित हो रहा था ।।७८।।

**तैलङ्गीरङ्गचौरः प्रसभमपहरन् केरलीकेलिवार्ता-**
**मान्ध्रीनीरन्ध्रपीनस्तनघुसृणघनालेपलक्ष्मीं विलुम्पन् ।**
**कार्णाटीकर्णपूरप्रणयमपनयन्नाविरासीद् यदीयो**
**लाटीताटङ्कचक्रद्युतिचलनचमत्कारहारी प्रतापः ।।७९।।**

राव सुर्जन का देदीप्यमान प्रताप चारों ओर प्रकट हो रहा था—उसने तैलंग देश की स्त्रियों की कान्ति चुरा ली थी, केरल देश की स्त्रियों की प्रणय वार्ता को बलपूर्वक हटा दिया था, आन्ध्र देश की स्त्रियों के परस्पर सटे हुये विशाल स्तनों पर केसर के घने लेप की शोभा को मिटा दिया था, कर्णाटक देश की स्त्रियों की कर्णफूलों की प्रीति को दूर कर दिया था और लाट देश की स्त्रियों के गोल, चमकते हुये और हिलते हुये ताटंकों (कर्णभूषणों) के चमत्कार को नष्ट कर दिया था (अपने अपने प्रियतमों के युद्ध में काम आ जाने से विभिन्न प्रान्तों की स्त्रियों को शृङ्गार और आभूषणों से कोई प्रेम नहीं रह गया था) ।।७९।।

---

(७७) प्रतीकैरङ्गैः ।
(७८) वराटो बीजकोशः । व्याकोशं विकसितम् । ब्रह्मपेशी ब्रह्माण्डम् ।

**पारावारान्तरालामवनिमुपगताः केपि वीतप्रचाराः**
**कारागारान्धकारान्तरमपि रिपवः केचिदुद्भ्रान्तदाराः।**
**आरान्नाराचधारानिपतनचकिताः केचिदाकृष्टसाराः**
**स्फारामाराध्य धारां मधुन इव कृपां यस्य सम्प्राप्तपाराः ॥८०॥**

राव सुर्जन के शत्रुओं में से कोई तो दूर समुद्र के बीच के टापुओं में जा बसे; कोई अपनी स्त्रियों को घबराहट में छोड़ कर कारागार के अन्धकार में, जहाँ स्वेच्छानुकूल भ्रमण संभव नहीं था, रहने लगे; और बहुत से शत्रु लोग (युद्धस्थल में) अपने समीप निरन्तर बरसती हुई बाणों की धारा से चकित होकर अपना पराक्रम भूल गये तथा राव सुर्जन शहद के समान मधुर और विस्तृत कृपा की धारा की आराधना करके (विपत्ति-समुद्र से) पार हुये ॥८०॥

इति सुर्जनचरितमहाकाव्ये त्रयोदशः सर्गः

---

# चतुर्दशः सर्गः

**जगदुज्ज्वलेन जगमालभूभृता वितरिष्यताऽथ कनकावतीं सुताम् ।**
**प्रहितो हितोचितमतिः पुरोहितः परिणेतुरर्जुनसुतस्य सन्निधौ ।। १ ।।**

जगद्विख्यात राजा जगमालने अपनी कुमारी कनकावती का विवाह राव सुर्जन से करने के विषय में शुभचिन्तक बुद्धिमान् पुरोहित को वर के पास भेजा ।। १ ।।

**श्रुतवान् पुरापि कनकावतीगुणान् स्वजनानुरञ्जनकृतो नराधिपः ।**
**सुचिरं विचार्य सचिवः सबान्धवैर्जननीनिदेशमकरोत् सुमंगलम् ।। २ ।।**

बन्धुवर्ग को आनन्द देने वाले राव सुर्जन ने कनकावती के गुण पहले ही सुन रक्खे थे; फिर भी मंत्रियों से और बन्धुवर्ग से भलीभाँति परामर्श करके, अपनी माता का मंगलमय आदेश पाकर, सुर्जन ने विवाह के लिये स्वीकृति दे दी ।। २ ।।

**अथ सौम्यमूर्तिरतिधीरदुन्दुभिध्वनिनोपहूतपृतनाभिरन्वितः ।**
**अचलद् बलाहकवरूथिनीवृतः समयस्तपात्यय इवातिशर्मदः ।। ३ ।।**

तत्पश्चात् सौम्यमूर्ति सुर्जन, अत्यन्त धीर नाद से बजने वाली दुन्दुभियों की ध्वनि से बुलाई गई सेना के साथ, वादलों की सेना से घिरे हुये और गर्मी के वाद अत्यन्त शान्ति देने वाले वर्षा-काल के समान, (जगमाल की राजधानी की ओर) चले ।। ३ ।।

**अधिकत्वरोऽपि मनसा स धीरधीर्जगमालपत्तनविलोकनं प्रति ।**
**गमयाञ्चकार कतिचिन्निशीथिनीर्नृपतिर्नृपोचितगतेन वर्त्मनि ।। ४ ।।**

धीरवुद्धि सुर्जन ने, जगमाल की राजधानी को देखने के लिये अत्यन्त उत्सुक होने पर भी, राजोचित गति से चलने के कारण मार्ग में कुछ रातें व्यतीत कीं ।। ४ ।।

**उपशल्यसङ्गतममुञ्च शुश्रुवान् प्रमदेन वंशवहलो जनाधिपः ।**
**उपगम्य साधुविहितैः सभाजनैः पुरमानिनाय सहितं पुरोधसा ।। ५ ।।**

बड़े वंश वाले राजा जगमाल ने जब यह सुना कि सुर्जन नगर की सीमा पर आ गये हैं तब वे इष्ट-मित्रों सहित उनका स्वागत करने के लिये पहुँचे और अच्छी तरह उनका आलिगन, कुशल-प्रश्न आदि से सत्कार करके, पुरोहित के साथ उन्हें नगर में लिवा लाये ।। ५ ।।

**अवधार्य शुद्धमुभयत्र तद्विदो महितं मुहूर्तमथ मेदिनीपतिः ।**
**उपचक्रमे रचयितुं क्रमागता दुहितुर्विवाहसमयोचिताः क्रियाः ।। ६ ।।**

राजा जगमाल ने, विद्वान् ज्योतिषी से वर और कन्या उभयपक्ष के लिये शुद्ध शुभ मुहूर्त निकलवा कर, पुत्री के विवाह की कुल-परम्परा के योग्य क्रियायें प्रारंभ कीं ।। ६ ।।

---

(५) उपशल्यं ग्रामान्तम् ।

रुचिरोत्सवोचितपिशङ्गवाससः पटवासपाटलतरावगुण्ठनाः।
इतरेतरार्पितकरावलम्बनाः खदिरोपनीतमधुराऽधरश्रियः॥ ७॥
प्रमदान्मदादपिदृगम्बुजाञ्चलैः परिहासपेशलतया परस्परम्।
अवलोकयन्त्य उदितस्मिताः कलं प्रतिसद्म पद्मदललोचना जगुः॥ ८॥

विवाहोत्सव के योग्य शुभ और सुन्दर पीले वस्त्र पहनने वालीं, मुख पर लगाये गये सुगन्धित चूर्ण (पाउडर) के संसर्ग से गहरे गुलाबी बने हुये घूंघट वालीं, एक दूसरे के हाथ का सहारा लेने वालीं, पान के कत्थे के कारण लाल और सुन्दर अधरों की शोभा वालीं और कमलों के समान सुन्दर नेत्रों वालीं स्त्रियाँ, अत्यन्त हर्ष से और मद से, उपहास में चंचल होकर और अधरों पर मुस्कुराहट लाकर, अपने कमल-नयनों के कोनों से एक दूसरे को देखती हुईं, घर-घर में सुन्दर गीत गा रहीं थीं॥ ७–८॥

रघुनाथविक्रमकथोपबृंहितं जनकात्मजापरिणयोचितं क्वचित्।
क्वचिदिन्दुशेखरविनोदमञ्जुलं गिरिजाविवाहविधिवर्द्धितस्पृहम्॥ ९॥
मुरवैरिकौशलविशेषितं क्वचिद् विलसद्विदर्भतनयास्वयम्बरम्।
जगुरङ्गनाः प्रतिगृहं सुमङ्गलं ननृतुश्च वारवनिताः प्रमोदतः॥१०॥

कहीं रामचन्द्र के पराक्रम की कथा से शोभित, कहीं सीता के विवाह के वर्णन से पुनीत, कहीं शिव के विनोद से सुन्दर, कहीं पार्वती के विवाह-वर्णन से मनोरंजक, कहीं कृष्ण के कौशल से युक्त और कहीं दमयन्ती के स्वयंवर की कथा से सुन्दर, मंगलमय गीत स्त्रियाँ घर-घर में गा रही थीं और वेश्यायें प्रसन्न होकर नाच रही थीं॥ ९–१०॥

कलधौतकुम्भविलसत्पयोधरा कदलीप्रकाण्डरुचिरोरुरञ्जिता।
निचिता विचित्रतरया पताकया नगरी व्यराजत यथैकनागरी॥११॥

सुवर्णकलश रूपी सुन्दर स्तनों वाली, कदली रूपी सुन्दर जंघा से शोभित, विचित्रतर पताका से युक्त वह नगरी भी नगर की प्रमुख रमणी के समान सुशोभित हो रही थी॥११॥

अथ शङ्खमङ्गलमृदङ्गडिण्डिमध्वनिभिर्विशेषितनिरन्तरत्वराः।
शुभगन्धतैलमनिशं हरिद्रया निदधुर्वधूवपुषि सत्पुरन्ध्रयः॥१२॥

शंख, मृदंग, घंटे आदि की मांगलिक ध्वनि के कारण विशेष रूप से निरन्तर जल्दी करने वालीं कुलीन कुटुम्बिनी स्त्रियाँ प्रति दिन वधू के शरीर पर हल्दी और सुगन्धित तेल लगाती थीं॥१२॥

अवदातशीतलसुगन्धिपावनैः सलिलैः सुवर्णकलशोद्धृतैरिमाम्।
विविधौषधीभिरुपनीतमङ्गलाः स्नपयाम्बभूवुरपि ताः समाहिताः॥१३॥

स्वर्णकलशों में लाये गये शुचि, शीतल, सुगन्धित और पवित्र जल को विविध औषधियों से मांगलिक बनाकर उससे वे कुलीन कुटुम्बिनी स्त्रियाँ सावधान होकर वधू को स्नान कराती थीं॥१३॥

---

(७) पटवासेन पिष्टातेन सुगन्धचूर्णेन पाटलतरं रक्तमवगुण्ठनं यासां ताः।

**परिधाप्य धौतममलं दुकूलयोर्युगलं मरालमिथुनोपलक्षितम् ।**
**अनयन् नितान्तनिपुणा नताननां प्रतिकर्मसद्मनि वधूं पुरन्ध्रयः ॥१४॥**

उन अत्यन्त कुशल कुटुम्बिनी स्त्रियों ने (विवाह के दिन तेल लगाकर और स्नान कराकर) वधू को दो धुले हुये निर्मल वस्त्र (लहँगा-ओढ़नी) पहिनाये जिन पर हंस और हंसी का जोड़ा बना हुआ था और फिर वे वधू को, जिसने (लज्जा से) सिर नीचा कर रक्खा था, शृंगार के कमरे में ले गईं ॥१४॥

**अदसीयकुन्तलकदम्बकादधोनिहिताऽगुरुप्रभवधूपधोरणी ।**
**अतिकालिमानमपि चारुसौरभं किमतो ग्रहीतुमकरोदुपासनम् ॥१५॥**

(शृङ्गारागार में) नीचे रखी हुई कालागुरु की (जलती हुई) धूपवत्ती क्या कनकावती के (काले और सुगन्धित) केशपाश से गहरा कालापन और सुन्दर सुगन्ध ग्रहण करने के लिये उपासना कर रही थी ? ॥१५॥

**चिकुरेण चामरविशेषचारुणा सितमालया च सुतनुः पताकया ।**
**मनसि स्वभर्तुरगमन् मनोभुवः प्रथमाधिकारधृतकेतुयष्टिताम् ॥१६॥**

सुन्दर शरीर वाली कनकावती का केशपाश कामदेव का उत्कृष्ट और सुन्दर चँवर था और उसकी शुभ्र माला कामदेव की वैजयन्ती थी; अतः स्वयं कनकावती अपने पति के हृदय में कामदेव के अलंघ्य अधिकार को सूचित करने वाली ध्वज-यष्टि बनकर प्रविष्ट हुई ॥१६॥

**स्वत एव हेमशतपत्रसोदरे तदलीकवर्तितिलके परिष्कृतम् ।**
**हरितालसम्बलितरोचनाञ्चितं न विशेषकं रुचिरतां व्यशेषयत् ॥१७॥**

कनकावती के ललाट पर सुवर्ण-कमल के पत्ते के समान सुन्दर लाल रंग का स्वाभाविक तिल था, अतः उस तिल के ऊपर लगाया गया हरिताल से मिले हुये गोरोचन का तिलक विशेष शोभा नहीं बढ़ा सका ॥१७॥

**प्रकृतिस्थयोरपि तदीयनेत्रयोर्युगलेन येन विजयी जगत्त्रये ।**
**यदधायि तत्र पुनराभिरञ्जनं तदमन्यत स्वमयशो मनोभवः ॥१८॥**

कामदेव कनकावती के स्वाभाविक नेत्रों से ही स्वयं को त्रिभुवन-विजयी समझता था, अतः जब उन स्त्रियों ने कनकावती के नेत्रों में काजल लगाया तो कामदेव ने उसे अपना अपयश माना ॥१८॥

**निजविभ्रमाभरणयोस्तु तद्भ्रुवोः प्रतिकर्म नान्यदवशिष्यते ध्रुवम् ।**
**कुटिलीभवत्यहह यत्र कौतुकात् कुटिलीकरोति न शरासनं स्मरः ॥१९॥**

कनकावती की भौंहों के लिये तो उनका विभ्रम ही आभूषण था, अतः उनके लिये किसी अन्य शृङ्गार की निश्चय ही कोई अपेक्षा नहीं थी। उन भौंहों में स्वयं कामदेव ही कुतूहलवश कुटिल बन कर रहता था, अतः उसे अपने धनुष को भी कुटिल करने की कोई आवश्यकता नहीं थी ॥१९॥

---

(१५) अगुरुजन्यधूपवर्ती।
(१७) ललाटस्थतिले।

**कलितैकचक्रमतिचक्रधीर्ध्रुवं जनकं जनार्दनमुदीक्ष्य मन्मथः।**
**कनकावतीश्रुतिवतंसचक्रयोर्युगलं दधे तदधिकत्वलब्धये ॥२०॥**

प्रखर बुद्धिवाले (जहाँ चक्र काम न दे वहाँ भी इसकी बुद्धि काम देती है) कामदेव (प्रद्युम्न) ने अपने पिता श्रीकृष्ण के पास एक चक्र (सुदर्शन) देखकर उनमे वैशिष्ट्य प्राप्त करने के लिये कनकावती के गोल कर्णभूषण-रूपी दो चक्र धारण किये ॥२०॥

**विनतभ्रुवः श्रवणभूषणच्छलान् मुकुरद्वयं निजमधान् मनोभवः।**
**यदुदीक्षणेन नितरां मुनेरपि द्विगुणो भवेदहह मन्मथभ्रमः॥२१॥**

झुकी हुई भौंहो वाली कनकावती के दोनों कर्णभूषणों के बहाने कामदेव ने अपने दो शीशे रख दिये थे जिनको देखकर जितेन्द्रिय मुनियों के लिये भी कामदेव का भ्रम (भ्रम: विभ्रम) दूना हो जाता था ॥२१॥

**अधिनासिकं निहितमच्छमौक्तिकं नितरामशोभत मृगीदृशस्तदा।**
**रदराजिनिर्मलरुचां जिघृक्षया रदनच्छदान्तिकमिवागमत् स्वयम् ॥२२॥**

नाक में पहिनी गई नथ का स्वच्छ मोती मृगनयनी कनकावती के स्वच्छ दाँतों की सुन्दर किरणों को ग्रहण करने के लिये स्वयं ही अधर के पास आ गया था ॥२२॥

**अधरे कुतूहलवशात् प्रसाधिका बहुधा न्यधत्त नवयावकद्रवम्।**
**सुतनोस्तथापि सहजोऽस्य शोणिमा न मनागपि स्म भजते विशिष्टताम् ।२३।**

शृङ्गार कराने वाली दासी ने यद्यपि कनकावती के होठों पर काफी यावक (लाख से बनाया गया लाल रंग का पदार्थ) लगाया, किन्तु उससे कनकावती के होठों की स्वाभाविक लाली बढ़ न पाई ॥२३॥

**कुचकुम्भसीम्नि मृगनाभिनिर्मिता नितरां रराज मकरी मृगीदृशः।**
**हृदयस्थितस्य मदनस्य केतनं प्रियमभ्युपैतुमिव सम्भृतोद्यमा॥२४॥**

मृगनयनी के पीन स्तनों पर चित्रित कस्तूरी की पत्रमकरी (मगरी की आकृति का चित्र) इस प्रकार अत्यन्त शोभित हो रही थी मानों कनकावती के हृदय में विराजमान कामदेव की ध्वजा में अंकित अपने प्रिय मगर के पास जाने के लिये प्रयास कर रही हो (कामदेव की ध्वजा में मगर का चिह्न बना रहता है, इसीलिये उसे मकरध्वज भी कहते हैं) ॥२४॥

**स्तनयोर्मनोरमतनोः सुवृत्तयोरुचितं तथाविधगुणेन सङ्गतम्।**
**असमञ्जसं परममेतदञ्जसा तरलोऽपि यत् कृतपदस्तदन्तरे॥२५॥**

मनोहर शरीरवाली कनकावती के सुवृत्त (गोल; अच्छे चरित्र वाले) स्तनों का गुणवान् (सूत्र में पिरोय गये; गुणी) हार के साथ समागम उचित ही था, किन्तु आश्चर्य इस बात का था कि तरल (हार का बीच में रहने वाला बड़ा मोती; चलचारित्र) ने भी आसानी से ही वहाँ स्थान प्राप्त कर रक्खा था (गुणी और चरित्रवान् पुरुषों का गुणी पुरुषों से समागम उचित है, किन्तु यदि कोई चंचल और चलचारित्र पुरुष उनके बीच में आसानी से स्थान प्राप्त कर ले तो यह आश्चर्य की बात है ही) ॥२५॥

**रशनागुणेन सुतनोः सखीजनः किमयोजयज्जघनमण्डलं पुनः ।**
**वसता हि तत्र सततं मनोभुवा स्वधनुर्गुणेन सगुणीकृतं यतः ॥२६॥**

सखियों ने कनकावती के जघन को करधनी के गुण से सजाने का प्रयत्न क्यों किया ? वहाँ निरन्तर रहने वाले कामदेव ने पहले ही उस जघन को अपने धनुष की प्रत्यंचा से सगुण (प्रत्यंचा-युक्त; गुणवान्) बना रक्खा था ॥२६॥

**नवपत्रपाटलमलक्तकद्रवैर्विरराज राजदुहितुः पदद्वयम् ।**
**युगलं सुजातसरसीरुहोर्यथा किरणैर्नवोदितमयूखमालिनः ॥२७॥**

उस राजकुमारी के मेंहदी से रंगे हुये गुलाब की नवीन पंखुड़ियों के समान लाल पैर नवोदित सूर्य की किरणों से रञ्जित लाल कमलों के समान शोभित हो रहे थे ॥२७॥

**इति सज्जिता जितमनोजकामिनीतनुकान्तिरन्तिकनिवेशितं पुरः ।**
**निभृतं निरीक्ष्य मुकुरं चचाल सा घटिकानिवेदकनिनादनोदिता ॥२८॥**

इस प्रकार सजी हुई कनकावती कामदेव की प्रिया रति के शरीरसौन्दर्य को जीत कर तथा सामने रक्खे हुये शीशे में अपनी छवि को एकटक देखकर, समय वतलाने वाली घड़ी के शब्द को सुनकर, (विवाहमंडप की ओर) चली ॥२८॥

**स तदाऽर्जुनस्य तनयोऽपि नीतिमानुपपादिताखिलयथोचितक्रियः ।**
**अभिमन्त्रितं तदुपयोगि ऋग्विदा जगृहे सुगन्धिकुसुमाक्षतादिकम् ॥२९॥**

उस समय अर्जुन-पुत्र नीतिकुशल सुर्जन ने भी, सम्पूर्ण उचित क्रियाओं से सुसज्जित होकर, ऋग्वेद में निष्णात याज्ञिक द्वारा दिये गये मन्त्रों से पुनीत और उस समय के योग्य सुगन्धित पुष्प और अक्षत आदि ग्रहण किये ॥२९॥

**विविधाङ्गरागरुचिरः स निर्बभौ × × × ×**
**× × × × ॥३०॥**

**समये च तत्र मिलने समुत्सुकावभिवीक्ष्य वासरमणिर्वधूवरौ ।**
**अनुपालयन्निव तयोर्मनोरथं चरमक्ष्माधरसमीपमीयिवान् ॥३१॥**

परस्पर जीवनसहचर बनने के लिये विवाह के शुभ मूहूर्त की उत्सुकतापूर्वक प्रतीक्षा करने वाले उन वरवधू को देखकर भगवान् सूर्य भी, उनका मनोरथ पूर्ण करने के लिये, अस्ताचल के समीप चले गये ॥३१॥

**गगनद्रुमस्य चरमाशया क्षणं तलशाखया स्थगितमर्कमण्डलम् ।**
**परिणामपाटलमधोमुखं पुरः पतनोन्मुखं फलमिव व्यभासत ॥३२॥**

उस समय सूर्य आकाशरूपी वृक्ष की पश्चिम दिशा-रूपी शाखा में उलटे लटकने वाले तथा पक जाने के कारण लाल और शीघ्र ही गिरने वाले फल के समान शोभित हुए ॥३२॥

**उररीकृताखिलवसुव्ययोऽपि सन्नतिरागतो बत निषेव्य वारुणीम् ।**
**विवशः पतन् दिनमणिर्महीतले परिमोक्तुमम्बरमपि प्रचक्रमे ॥३३॥**

अपनी सारी किरणों को खर्च करना स्वीकार करके और उत्कट राग के कारण वरुण की पश्चिम दिशा का उपभोग करके अब विवश होकर क्षितिज पर गिरने वाले सूर्य ने आकाश तक को छोड़ना प्रारंभ कर दिया, जैसे कोई शराबी अपना सारा द्रव्य खर्च करके तथा उत्कट अनुराग के कारण मदिरा पीकर वेहोश होकर धरती पर गिरता हुआ अपने वस्त्र तक को खोल दे ॥३३॥

**वशगो बभूव बिसिनीसुहृत् तथा वरुणस्य हन्त हरितोऽङ्कमाश्रितः ।**
**इतरासु दिक्षु भगवानयं यथा न करप्रसारणविधावपि क्षमः ॥३४॥**

वरुण की दिशा (पश्चिम) की गोद में जाकर सूर्य भगवान् उसके इतने अधीन हो गये कि अन्य दिशाओं की ओर कर (हाथ; किरणों) बढ़ाने का सामर्थ्य भी उनमें नहीं रहा ॥३४॥

**जगतीषु योतिमहितो महःपतिर्महसां भरेण दुरवापदर्शनः ।**
**अवलोकते स्म सुखदृश्यमप्यमुं विधिना व्यपेतविभवं न कश्चन ॥३५॥**

जो सूर्य संसार में अत्यन्त महान् तथा समृद्ध थे और जिनके तेज के कारण उनकी ओर देखना तक कठिन था वे ही अब विधिवश ऐश्वर्य खो बैठे और अब सुलभ-दर्शन होने पर भी उनकी ओर कोई देखता तक नहीं ॥३५॥

**अथ वारुणीभजनजातकल्मषं परिमार्ष्टुमुद्यत इव त्विषां पतिः ।**
**भृगुपातसाहसरसे दधन् मनः शिखरं जगाम चरमक्षमाभृतः ॥३६॥**

वारुणी (वरुण की स्त्री अर्थात् पश्चिम दिशा; मदिरा) का उपभोग करने के कारण उत्पन्न पाप का प्रायश्चित्त करने के लिये ही मानों सूर्य ऊँचे स्थान से गिरकर (अपना कलुषित शरीर छोड़ देने के लिये ) अस्ताचल के शिखर पर चढ़े ॥३६॥

**खरकालखड्गदलितस्य निर्दयं प्रशमं दिनस्य सहसा गमिष्यतः ।**
**रुधिरारुणं शिर इवार्कमण्डलं न्यपतत् पयःसु चरमस्य नीरधेः ॥३७॥**

काल की तीक्ष्ण तलवार से निर्दयतापूर्वक काटे गये और रुधिर से लाल दिन के सिर के समान लगने वाला सूर्यबिम्ब पश्चिमी समुद्र के जल में गिर पड़ा ॥३७॥

**उचितं तदेव यदतीव मत्सरा स्थितिमाससाद न चिरं पितृप्रसूः ।**
**स्फुटमन्तरायितमकारणं यया बत यामिनीदिवसयोः समागमे ॥३८॥**

यह अच्छा ही हुआ कि अत्यन्त ईर्ष्यालु संन्ध्या, जो निष्कारण ही दिन और रात्रि के समागम में रोड़ा बन रही थी, अधिक देर नहीं टिक सकी, जैसे कोई अत्यन्त ईर्ष्यालु दादी-सास, जो निष्कारण ही अपने पौत्र-पौत्रबधू के समागम में रोड़ा बन जाती है, वृद्धावस्था के कारण अधिक दिन जीवित नहीं रहती ॥३८॥

---

(३३) वसुः किरणः । वसु धनम् । वारुणी पश्चिमा दिक् मदिरा च ।
(३८) पितृप्रसूः सन्ध्या पितामही च ।

**विकलं वियोज्य मिथुनं रथाङ्गयोस्तमसेऽवकाशमचिराद् वितन्वती ।**
**अवमत्य सम्भृतपुटाञ्जलीन् द्विजांश्चपला पलायत जवात् पितृप्रसूः ॥३९॥**

व्याकुल चक्रवाकमिथुन का परस्पर वियोग करके (रात्रि में चकवा-चकवी साथ-साथ नहीं रहते, ऐसा कवियों का समय है) तथा अन्धकार को शीघ्र आने का मार्ग देकर और हाथ जोड़े हुये दीन ब्राह्मणों के समान लगने वाले, चोंचों को वन्द करके घोंसलों में बैठे हुये पक्षियों की अवज्ञा करके चंचल संध्या वेग से भाग गई ॥३९॥

**उदयं प्रयाति नियतं तमोहरो हरिवाहनस्य हरितोङ्कमास्थितः ।**
**इति रोषतः किमु तमः समुत्तभन्मलिनीचकार पुर एव तन्मुखम् ॥४०॥**

इन्द्र की दिशा (पूर्व दिशा) की गोद का आलिंगन करके चन्द्रमा उदय हो रहा है, इस क्रोध के कारण ही उत्तेजित होकर मानों अन्धकार ने (परपुरुष का समागम करने वाली) पूर्व दिशा के मुख को मलिन बना दिया ॥४०॥

**व्यसनेन वासरमणेर्विमूर्च्छितां नलिनीं निमीलितसरोजलोचनाम् ।**
**विधुरालिधोरणिरधीरपक्षतिव्यजनैरवीजयदथोच्चनिस्वना ॥४१॥**

प्रियतम सूर्य के वियोग में अपने कमल-नयनों को वन्द करके मूर्च्छित पड़ी हुई कमलिनी को चिल्लाती हुई व्याकुल भ्रमरों की पंक्ति, सखियों के समान, अपने अधीर पंखों से हवा कर रही थी ॥४१॥

**कुशलः स्वकीयसुखकृत्य एव यः स मुदा जगाम मधुपः कुमुद्वतीम् ।**
**अपरः पुनः परवशोऽतिसौहृदात् कमलोदरेषु सहते स्म बन्धनम् ॥४२॥**

जिसे केवल अपने ही सुख का ध्यान था वह भ्रमर तो कुमुदिनी के पास चला गया, किन्तु जो सच्चे प्रेम के वश में था उस भ्रमर ने कमलिनी के उदर में वन्धन भी सहा ॥४२॥

**इतरेतरं घटितकन्धरं दधावधिचञ्चु चञ्चुमनिमेषलोचनम् ।**
**तदपि व्ययुज्यत युगं रथाङ्गयो र्नियतिं निवर्तयति नैव पौरुषम् ॥४३॥**

जो परस्पर कन्धे से कन्धा और चोंच से चोंच मिलाकर एक दूसरे को निर्निमेष-दृष्टि से देख रहा था, उस चकवा-चकवी के जोड़े को भी वियोग का कष्ट सहना पड़ा ! हाय ! पौरुष भी दुर्भाग्य को नहीं हटा पाता ॥४३॥

**निरगुर्गभीरगिरिगह्वरोदरात् तरसा तमांसि सहितानि कौशिकैः ।**
**दुरितं दृशोः श्रवणयोश्च देहिनां समकालमेव फलितं तदाभवत् ॥४४॥**

पहाड़ों की गहरी गुफाओं के अन्दर से अन्धकार और उल्लू साथ-साथ निकले । उस समय लोगों के आँखों और कानों के पाप एक साथ फलीभूत हुये (आँखों के पाप के कारण अन्धकार में दृष्टि काम न दे सकी और कानों के पाप के कारण उल्लुओं के शब्द सुनने पड़े) ॥४४॥

**अवशिष्टसान्ध्यकिरणात् त्रसन्निव द्विषतोऽस्तगस्य करपातशङ्कया ।**
**इतरा निरुध्य हरितः समन्ततश्चरमं रुरोध चरमां तमश्चयः ॥४५॥**

अस्त होनेवाले अपने शत्रु सूर्य के कर पात की शंका के कारण बची-खुची सांध्य किरणों से भयभीत अन्धकार ने अन्य दिशाओं को घेरकर अब पश्चिम दिशा को भी अच्छी तरह घेर लिया ॥४५॥

**विरलं तमः प्रथममुद्गतं क्वचिज्जनयत् तदाकृतिषु तत् तथा भ्रमम् ।**
**निबिडीभवत्तु निखिलं विधाय तन्नयनातिगं भ्रमकथां न्यवर्तयत् ॥४६॥**

पहले अन्धकार कहीं-कहीं प्रकट हुआ जिससे लोगों को विविध पदार्थों की आकृति में भ्रम होने लगा, किन्तु जब अन्धकार घना होकर छा गया और इसलिये दृष्टिप्रसार का प्रसंग ही नहीं रहा तो आकृतिभ्रम का भी कोई प्रश्न न रहा ॥४६॥

**किमशीतरोचिषि परोक्षतां गते हरितोऽपि तस्य सरणीमशिश्रियन् ।**
**विरहादमुष्य कथमन्यथाभवेन्न स पूर्वपश्चिमविवेचनोदयः ॥४७॥**

सूर्य के छिप जाने पर मानों दिशाओं ने भी विरह के कारण उसका अनुकरण किया (अर्थात् वे भी छिप गईं), अन्यथा पूर्व और पश्चिम का विवेक क्यों न उत्पन्न होता ? ॥४७॥

**अतिदूरवर्तिनि समीपगेऽथवा त्रसरेणुषु त्रिदशभूधरेऽपि वा ।**
**विनिमीलने भृशविकाशनेऽपि वा न विशेषलेशमपि चक्षुरन्वभूत् ॥४८॥**

घनान्धकार के कारण अत्यन्त दूर में और समीप में, त्रसरेणु (तीन द्व्यणुक अर्थात् छ परमाणु से बने हुये और प्रातःकाल खिड़की की जाली में से आने वाली सूर्य किरणों में उड़ते हुये दीखने वाले धूलिकण के बराबर सूक्ष्म पदार्थ) में और सुमेरु पर्वत में, तथा मूँदने में और आँखें फाड़ने में, नेत्रों को तनिक भी विशेषता प्रतीत नहीं हुई ॥४८॥

**किमगाधपाथसि निमग्नमम्बुधेः किमु कालकूटपटलान्तरस्थितम् ।**
**किमुत प्रगाढतममोहमध्यगं तमसा जगत् किमुदरे निवेशितम् ॥४९॥**

क्या जगत् समुद्र के अगाध जल में डूब गया ? अथवा कालकूट विष से बेहोश हो गया ? अथवा अत्यन्त गहरी मूर्च्छा में सो गया ? अथवा अन्धकार के पेट में चला गया ? ॥४९॥

**नयति स्म यन्नयनमप्यनामयं भृशमन्धतां तिमिरजालमुल्वणम् ।**
**अभिसृत्वरीनयनयोर्बभूव तन्ननु सिद्धमञ्जनमनङ्गवैभवात् ॥५०॥**

जो उग्र अन्धकार स्वस्थ नेत्रों को भी बिलकुल अन्धा बना देता है वही अन्धकार, कामदेव के वैभव के कारण, अभिसारिकाओं के नेत्रों के लिये सिद्ध अञ्जन बन गया ! ॥५०॥

**नवनीलचोलरचितावगुण्ठना मृगनाभिपङ्किलतरास्यपङ्कजा ।**
**चकितास्तमोमणिमहःकणादपि त्वरिताः स्वकान्तमभिसस्रुरङ्गनाः ॥५१॥**

तमिस्राभिसारिकायें नई नीली साड़ी का घूँघट निकाले और मुखकमलों पर कस्तूरी का लेप किये जल्दी-जल्दी अपने-अपने प्रियतमों के पास जा रहीं थीं; वे इतनी अधीर थीं कि मार्ग में खद्योत (जुगनूं) के प्रकाश की किरण से भी घबड़ा जाती थीं ॥५१॥

---

(५१) तमोमणिः खद्योतः।

**अवलम्ब्य दण्डमुपयास्यता पुरो विधृतं स्मरेण विधुताऽन्यभीतिना।**
**ययुरेव दूरमपि यावदीप्सितं मुषितेक्षणेऽपि तिमिरेऽभिसारिकाः ॥५२॥**

जिस प्रकार अपने आगे चलने वाले किसी स्वस्थ नेत्र वाले व्यक्ति द्वारा एक सिरे से पकड़ी गई लाठी का दूसरा सिरा पकड़कर उसके पीछे पीछे निर्भय चलकर अन्धा भी अपने गन्तव्य स्थान पर पहुँच जाता है, उसी प्रकार अन्य वस्तुओं (अन्य व्यक्तियों अथवा सर्पादिक जन्तुओं) द्वारा उत्पन्न भय को नष्ट कर देने वाले तथा अपने आगे-आगे चलने वाले कामदेव द्वारा पकड़ी गई लाठी का सहारा लेकर दृक्शक्ति को नष्ट कर देने वाले निविड़ अन्धकार में भी अभिसारि-कायें दूर तक अपने गन्तव्य संकेत स्थानों पर जा पहुँचीं ॥

यदि 'विधुताऽन्यभीतिना' के स्थान पर 'विधुनाऽन्यभीतिना' पाठ हो, तो यह अर्थ होगा :—

अन्य से (राहु, सूर्य आदि से) भयभीत चन्द्रमा शुक्लपक्ष में भी, (अपने मित्र) कामदेव के आगे-आगे रहने के कारण साहस करके, किसी प्रकार बड़ी कठिनता से अपनी किरणों-रूपी दण्ड का सहारा लेकर टिका रहता है; किन्तु अभिसारिकाओं की विशेषता देखिये कि वे निर्भय होकर कृष्णपक्ष के निविड़ अन्धकार में भी, जब दृक्शक्ति नष्ट हो जाती है, अकेली ही, अपने दूर के संकेत स्थानों तक चली जाती हैं ॥५२॥

**निबिडाधिनिर्दलितहृद्विनिःसृतैरिव कोकयोर्विरहवह्निषः कणैः।**
**तिमिरोच्चयस्य तनुकण्टकैरिव स्फुरितं तमोमणिभिरम्बरान्तरे ॥५३॥**

चकवा-चकवी के गहरे शोक से दले हुये हृदयों में से निकले हुये विरहाग्नि के स्फुलिंगों के समान लगने वाले और अन्धकार के रोमांचों के समान शोभित होने वाले खद्योत (जुगनूँ) आकाश में चमक रहे थे ॥५३॥

**निलये निलीय मुखनेत्रमुद्रणमवलम्ब्य कालविभुतां विभावन्।**
**शुककोकिलप्रभृतिरन्धमूकवच्छ्रुतवानुलूककुलदीर्घडम्बरम् ॥५४॥**

तोते और कोयल इत्यादि अपने-अपने घोंसलों में छिपकर तथा मुँह और आँखें बन्द करके गूँगे और अन्धे बने हुये, समय की महिमा का विचार करके, उल्लुओं की लम्बी चीखें सुन रहे थे ॥५४॥

**अधिमूलमिन्द्रककुभोऽथ लोचनैरविभावितस्फुटविशेषमुन्मुखैः।**
**तिमिराम्बुराशिपुलिनोपमं पुरः किमपीक्ष्यते स्म शबलोज्वलाकृति ॥५५॥**

तब पूर्व दिशा के नीचे एक ऐसी वस्तु (चन्द्रमा), जिसकी विशेष आकृति उन्मुख नेत्रों द्वारा भी स्पष्ट नहीं दिखाई दे रही थी, जो अन्धकाररूपी समुद्र के किनारे चमकती हुई रेत के ढेर के समान लग रही थी और जो कुछ-कुछ धुँधलेपन से चमक रही थी, दिखाई दी ॥५५॥

---

(५२) **'विधुनाऽन्यभीतिना'** इति पाठान्तरम्। विधुता निवारिता अन्येभ्यः सर्पगर्तस्खलनादिभ्यो भीतिः भयं अर्थात् अभिसारिकाणां येन तेन पुरः अग्रे उप समीपे यास्यता गच्छतेत्यर्थः स्मरेण कामेन विधृतं दण्डमवलम्ब्य अभिसारिकाः अन्धवत् सूचीभेद्येऽपि तमसि यथेच्छं दूरमपि किमुत समीपं ययुरेव। 'विधुनाऽन्य-भीतिना' इति पाठे त्वयमर्थः—अन्येभ्यः राहुसूर्यादिभ्यो भीतिर्यस्य तादृशेन विधुना चन्द्रेण कर्त्रा पुरः अग्रे उप समीपे यास्यता गच्छतेत्यर्थः स्मरेण कामेन हेतुना दण्डं किरणस्वरूपमवलम्ब्य विधृतं कथमपि अवस्थितं भावे क्तः। अभिसारिकास्तु घनान्धकारेऽपि ययुरेव। अत्र शुक्लदलोदितात् चन्द्रात् अभिसारिकाणां व्यतिरेको दर्शितः। तथा हि विधुरन्येभ्यो बिभेति अभिसारिकास्तु निर्भयाः, तस्य स्मरः सहायकः इमास्तु निःसहायाः, स तु दण्डावलम्बी इमास्तु निर्दण्डाः, स तु कथमपि स्थित एव भवति तत्रापि शुक्लपक्षे एव, इमास्तु निवि-डान्धकारेऽपि कृष्णपक्षे यथेच्छं दूरमपि जग्मुरिति।

**अभिरेजुरुज्वलितशक्रदिङ्मुखा हिमरोचिषः कतिपये मरीचयः ।**
**चकितञ्चकोरनयनाभिरीक्षिता जयवैजयन्त्य इव पुष्पधन्वनः ॥५६॥**

फिर चन्द्रमा की, पूर्व दिशा के मुख को प्रकाशित करने वाली कुछ किरणें, जिनकी ओर चकोर चकित होकर देख रहे थे, कामदेव की विजय-पताकाओं के समान शोभित हुईं ॥५६॥

**दयितस्य तूर्णतरभाविसङ्गमं कथयन्त्यतिस्फुटमुखप्रसादतः ।**
**प्रियदूतिकेव पुरुहूतदिक् पुरः शिथिलीचकार तम उल्वणं निशः ॥५७॥**

पूर्व दिशा-रूपी प्रिय दूती ने अपने मुख की प्रसन्नता (उज्वलता) से प्रिय चन्द्र-रूपी नायक के शीघ्र होने वाले समागम को सूचित करते हुये, रात्रि-रूपी नायिका के उग्र अन्धकार-रूपी दुःख को कम कर दिया ॥५७॥

**परिरभ्य पार्श्वमिलितां पुरो दिशं कृतकानुरागकलितः कलानिधिः ।**
**अदिशद् दिवोङ्कमनकुङ्कुमारुणान् क्रमशः करानभिमुखप्रसारितान् ॥५८॥**

कलानिधि चन्द्रमा ने दिखावटी प्रेम का प्रदर्शन करके समीप आई हुई पूर्व दिशा का गाढ़ आलिंगन किया और अपने केसर जैसे लाल कर क्रमशः आगे बढ़ाकर उसके वक्षःस्थल पर धर दिये ॥५८॥

**प्रथमानुरागविगमेन पूर्वदिक्परिरम्भमुज्झितवता हिमत्विषा ।**
**शमितप्रदोषतमसा प्रसेदुषा सुरवर्त्मनि स्थितिरकारि निर्मले ॥ ५९ ॥**

जब दिखावटी प्रेम का पहला उफ़ान ठंडा पड़ गया तब चन्द्रमा ने पूर्व दिशा का आलिंगन छोड़ दिया और अन्धकार-रूपी (परस्त्रीसंभोगजन्य) पाप को दूर करके प्रसन्न होने वाले चन्द्रमा देवताओं के निर्मल मार्ग में (आकाश में) स्थित हुये ॥५९॥

**उदितः समग्रकलया कलानिधिस्तपनस्य पादहतिभिः प्रपीडिताम् ।**
**चिरकालमुद्रितमुखीं कुमुद्वतीं व्यतनोत् प्रबोधयितुमायतां रुचिम् ॥६०॥**

फिर सम्पूर्ण कलाओं से उदित होकर चन्द्रमा ने सूर्य के पैरों से रौंदी हुई और चिर काल से मुरझाये हुये मुख से पड़ी हुई कुमुदिनी को जगाने के लिये (प्रफुल्लित करने के लिये) अपनी प्रीति को विस्तृत किया ॥६०॥

**अमृतद्रवेण जगती कृतार्थिता द्रवताञ्च येन दृषदोऽपि लम्भिता ।**
**उदये स्वभर्तुरपि तस्य जज्वलुः किमहो महौषधिगणाः प्रतिक्षपम् ॥६१॥**

जिस चन्द्रमा ने अपनी अमृत वर्षा से संसार को कृतार्थ किया और जिसने पत्थरों (चन्द्र-कान्त मणियों) तक के हृदयों को पिघला दिया, आश्चर्य है कि अपने ऐसे स्वामी के उदय होने पर ओषधि-समह रात्रि में जल उठा (चमकने लगा) ! ॥६१॥

**विहितौ तुषारकिरणस्य धामभिर्मकरध्वजावतितरङ्गितावुभौ ।**
**स्थितिमेक एव न जहौ यथोचितामपरः परस्थितिमपि व्यलोपयत् ॥६२॥**

चन्द्रमा की किरणों के प्रकाश ने दोनों मकरध्वजों को (समुद्र को और कामदेव को) अत्यन्त तरंगित कर दिया। उनमें से एक ने (समुद्र ने) तो (ज्वार आ जाने के कारण) अपनी उचित

---

(६२) मकरध्वजौ समुद्रकामदेवौ ।

स्थिति (मर्यादा) को ही छोड़ा, किन्तु दूसरे ने (कामदेव ने) तो (अतनु होने के कारण) न केवल अपनी ही स्थिति (शरीर) छोड़ी, अपितु दूसरों की (विरह-पीड़ितों की) स्थिति (मर्यादा) का भी लोप कर दिया ॥६२॥

**यदि चन्द्रिकाऽपि मिथुनं रथाङ्गयोरदहन्न तत्र शशिनोऽनुयोज्यता ।**
**विरहाग्निदग्धमनसां हि कामिनामपि जीवितं व्रजति वज्रकीलताम् ॥६३॥**

यदि शीतल चन्द्रिका ने भी चकवा-चकवी के जोड़ों को (विरह के कारण) जला दिया, तो इसमें चन्द्रमा की कोई प्रेरणा नहीं थी (और न चन्द्रिका का ही कोई दोष था) क्योंकि जिन लोगों का हृदय विरहाग्नि से जल जाता है उनको तो अपना ही जीवन वज्र के समान पीड़ा देने लग जाता है (विरही विरहाग्नि से जले, चाँदनी से नहीं; और जब उनका जीवन ही उन्हें पीड़ा देने लगा तो उन्हें चाँदनी भी कष्ट दे तो इसमें कौन सा आश्चर्य है) ॥६३॥

**उदितः कलानिधिरहासि कैरवैः ककुभः प्रसेदुरुदजृम्भि सागरैः ।**
**बिसिनी तु बन्धुविरहेण मूर्च्छिता जगदेव वेद तमसा तिरोहितम् ॥६४॥**

कलानिधि चन्द्रमा उदित हुये; कुमुद हँसने लगे; दिशायें प्रसन्न हो उठीं; सागर तरंगित होने लगे; किन्तु बिचारी कमलिनी के लिये तो, जो अपने प्रियतम सूर्य के विरह में मूर्च्छित थी, सारे संसार में अँधेरा ही छा रहा था ॥६४॥

**उदिते कलाभृति कुतूहलान्वितैः कृतमङ्गलः प्रथममग्रजन्मभिः ।**
**परिवारितः परिजनैरथार्जुनिः स जगाम धाम जगमालभूभृतः ॥६५॥**

चन्द्रमा के उदित होने पर कुतूहलयुक्त ब्राह्मणों ने पहले मंगलाचरण किया और फिर अर्जुन-पुत्र सुर्जन, अपने परिजनों से घिरे हुये, राजा जगमाल के महल में गये ॥६५॥

**वरसङ्गिमङ्गलमृदङ्गनिस्वनः क्रमशः समीपतरवर्तितां व्रजन् ।**
**पुलकैश्चकार नितरां वधूवपुः सहसा प्रगाढपरिरम्भिकञ्चुकम् ॥६६॥**

वर के साथ-साथ चलने वाले मांगलिक मृदंग का शब्द जैसे-जैसे क्रमशः समीप आता गया वैसे-वैसे ही खूब कसी हुई चोली वाला वधू का शरीर सहसा पुलकित होता गया ॥६६॥

**दधिचन्दनार्द्रकलशोपशोभितं विलसद्विचित्रतरचारुतोरणम् ।**
**पवमाननर्तितपताकमुच्चकैरविशद् वितानविततं स मण्डपम् ॥६७॥**

दही, चन्दन और गीले कलशों से शोभित, मनोहर विविध चित्रों से युक्त सुन्दर तोरण वाले, पवन से नचाई गई पताका वाले तथा ऊँचे विस्तृत शामियाने से शोभित मण्डप भवन में सुर्जन ने प्रवेश किया ॥६७॥

**धृतचारुमङ्गलपटावगुण्ठनां कनकासने विनिहितां कुमारिकाम् ।**
**परिणेतुमानतमुखीमुपानयन्नहमग्रिकाभिरुचिताप्तबान्धवाः ॥६८॥**

सुन्दर मांगलिकवस्त्र का घूँघट निकाले नीचा सिर करके सुवर्ण के सिंहासन पर बैठी हुई राजकुमारी को श्रेष्ठ बन्धुवर्ग, "मैं आगे चलूँ" "मैं आगे चलूँ" ऐसी इच्छा रखनेवाली (सखियों) द्वारा, (मण्डपभवन में) विवाह के लिये लिवा लाया ॥६८॥

**चिरकालमुत्सुकतया भृतात्मनोरनयोः परस्परविलोकनं प्रति ।**
**अभवद् विशालतरशैलसन्निभः क्षणमन्तरालविततीकृतः पटः ॥६९॥**

वर-वधू की चिरकाल से एक दूसरे को देखने की तीव्र उत्कण्ठा थी, किन्तु उन दोनों के बीच में विस्तृत पर्दा कुछ देर के लिये एक बड़े भारी पहाड़के समान लग रहा था ॥६९॥

**अपसारिते जवनिकापवारणे मिलितं कुमारमिथुनं परस्परम् ।**
**मनसोरिवात्तगुणयोः सुवाससोः कुसुमस्रजोर्विनिमयं विनिर्ममे ॥७०॥**

जब पर्दा हटा लिया गया तो वर-वधू आपस में मिले और उन्होंने सूत्र में गूंथी गई सुगन्धित पुष्पमालाओं के साथ-साथ मानों अपने गुणवान् मन भी परस्पर बदल लिये ॥७०॥

**हुतहव्यवाहपुरतः पुरोधसा समयोजि पाणियुगलं तयोर्मिथः ।**
**हृदयं तु पुष्पधनुषो निदेशतः प्रणयेन तत् प्रथममेव योजितम् ॥७१॥**

यज्ञाग्नि की साक्षी में पुरोहित ने उन दोनों के हाथ एक दूसरे से मिला दिये, किन्तु उन दोनों के हृदयों को तो कामदेव के आदेश से प्रेम पहले ही मिला चुका था ॥७१॥

**यदसुस्रुवन् करसरोजयोस्तयोरनिवारिताः सपदि घर्मबिन्दवः ।**
**समरोपयन् सपदि तत्र दूषणं हुतजातवेदसि जनाः सभासदः ॥७२॥**

उन दोनों के करकमलों से शीघ्र (सात्विक भाव के कारण) जो अनिवारित पसीने की बूँदें निकलीं उसका दोष सभासद लोगों ने झट यज्ञाग्नि को दिया ॥७२॥

**शिखिनः प्रदक्षिणविधेरनन्तरं गुरुणार्पिता हवनलाजमुष्टयः ।**
**अनवाप्य कम्प्रकरसम्पुटं तयोर्व्यवधिं विनैव पतिता हुताशने ॥७३॥**

अग्नि की प्रदक्षिणा करने के बाद गुरु ने हवन करने के लिये जो लावे मुट्ठी में लेकर वर-वधू को दिये वे उनके कम्पित करसम्पुट में न ठहरने के कारण बिना व्यवधान के ही अग्नि में गिर गये ॥७३॥

**अवलोकितुं पतिमुखेन्दुमादराद् वदनं मुहुर्गुरुजनेन यन्त्रिता ।**
**दरमुन्नमय्य भृशमानतं शिरः क्षणमक्षिपद्ममुदमुद्रयद् वधूः ॥७४॥**

पति के मुखचन्द्र को देखने की उत्कण्ठा के कारण वधू ने, गुरुजनों की उपस्थिति से बारबार संकुचित होकर भी, (किसी न किसी प्रकार) अपने मुख को थोड़ा सा उठाकर पति का अत्यन्त चौड़ा सिर देखा और क्षण भर के लिये अपने नेत्र-कमलों की शोभा को विकसित किया ॥७४॥

**अधिरोपिता नववधूः शिलातलं हृदयं निजञ्च परिणायकेन सा ।**
**प्रथमं कठोरतरमस्पृशत् पदा चरमे ममज्ज करुणाम्रदीयसि ॥७५॥**

नववधू को पति ने शिलातल पर और अपने हृदय पर आरूढ़ कराया, जिसमें से पहले को (शिलातल को), अत्यन्त कठोर होने के कारण वधू ने पैर से छुआ और दूसरे में, करुणा से कोमल होने के कारण, वह स्वयं डूब गई ॥७५॥

**प्रणिपत्य विप्रसमुदायमादरात् क्रमशो गुरूनपि तथैव दम्पती।**
**विनयानतौ जगृहतुः शुभाशिषः पतिदेवताभिरुपपादितास्ततः ॥७६॥**

उन वरवधू ने आदरपूर्वक ब्राह्मणों को और फिर गुरुजनों को प्रणाम किया और फिर विनय से नम्र होकर उन दोनों ने पतिव्रता स्त्रियों द्वारा दिये गये शुभाशीर्वाद ग्रहण किये ॥७६॥

**जगमालभूपतिरतिप्रमोदवान् सह बान्धवैरुचितपात्रलाभतः।**
**निरवाहयद् बहलसम्पदोज्वला दुहितुर्विवाहसमवायिनीः क्रियाः ॥७७॥**

योग्य वर मिलने के कारण अत्यन्त प्रसन्न हुये राजा जगमाल ने अपने वन्धुवर्ग के साथ, प्रभूत सम्पत्ति से उज्वल, पुत्री के विवाह की क्रियायें सम्पन्न कीं ॥७७॥

**अथ नूतनोद्वहनवर्धितश्रियो विहितानुवृत्तिरिव सादरं ह्रियः।**
**कतिचिद्दिनानि शिथिलोद्यमो बहिर्मदनोऽन्तरेव विजहार सुभ्रुवः ॥७८॥**

इसके बाद, नवीन विवाह के कारण परिवर्धित शोभा वाली लज्जा के मानों अनुकूल कार्य करने वाले कामदेव ने, कुछ दिन के लिये, बाहर का उद्योग ढीला करके, वधू के हृदय में ही विहार करना शुरु किया ॥७८॥

**प्रहिता प्रयत्ननिपुणैः सखीजनैः कुतुकेन केलिगृहदेहलीगतैः।**
**अनुतल्पमर्पयति न स्म सम्भ्रमाच्चरणं निरुद्धगतिरायतेक्षणा ॥७९॥**

रतिगृह की देहली पर स्थित प्रयत्नकुशल सखियों ने कुतूहलवश कनकावती को भीतर भेजा किन्तु विशालाक्षी ने घबरा कर अपनी चाल रोक दी और शय्या पर पैर नहीं रक्खा ॥७९॥

**अधिरोप्य सप्रणयमङ्कमुत्सुके चिबुकं परिस्पृशति पाणिना प्रिये।**
**परिवर्ति वक्त्रमपिधातुमञ्चलं विचकर्ष तिर्यगधिकत्वरा वधूः ॥८०॥**

जब प्रिय ने उसे सप्रेम गोद में बैठाकर बड़ी उत्सुकता से उसकी ठोड़ी को अपने हाथ से छुआ, तो वधू ने अत्यन्त शीघ्रता से मुँह घुमा कर घूँघट खींच लिया ॥८०॥

**परिरम्भिणि प्रियतमे बलादसौ शिथिलीचकार भुजवल्लिमाकुला।**
**पुलकावली तु कुचयोरवर्णयद् बहिरुद्गतं मदनविक्रमाङ्कुरम् ॥८१॥**

प्रियतम के बलपूर्वक आलिंगन करने पर वधू ने व्याकुल होकर अपनी भुजलताओं को ढीला कर दिया, किन्तु स्तनों पर उठने वाले रोमांच ने सूचित किया कि कामदेव के पराक्रम-रूपी अंकुर हृदय के बाहर उग आये हैं ॥८१॥

**प्रतिवाचमीरयतु वा न वा वधूर्दयितस्तु सन्ततमभूत् कथापरः।**
**अदसीयलोचनयुगं विलोकयन् वचनश्रुतौ सुचिरमुत्तरङ्गितम् ॥८२॥**

नई वधू उत्तर दे या न दे, किन्तु प्रियतम तो निरन्तर बातें करते ही रहे क्योंकि उन्होंने देख लिया था कि वधू के नेत्र बातें सुनने के लिये अत्यन्त उत्सुक हैं ॥८२॥

**निभृतं निरुध्य वसनाञ्चलं प्रिये गमनाय शंसति मुहुः सुमध्यमा।**
**गलितोत्तरीयमतिसत्वरोत्थिता स्ववपुर्निरीक्ष्य निषसाद सत्रपा ॥८३॥**

ओढ़नी का छोर कस कर पकड़ कर जब प्रियतम ने बार बार प्रिया से (शय्या पर) चलने के लिये कहा तब जल्दी-जल्दी घबराहट में उठी हुई प्रिया अपनी ओढ़नी को शरीर से हटी हुई देखकर, लज्जित होकर, फिर बैठ गई ॥८३॥

**शनकैर्विधृत्य करपल्लवं मुहुः सुतनोर्विधूनयति कौतुकात् प्रिये ।**
**निजकङ्कणक्वणितभाजि सा त्रपाचकितं दधे प्रतिगवाक्षमक्षिणी ।।८४।।**

जब प्रियतम ने धीरे से प्रिया का कोमल हाथ पकड़ कर कुतूहलवश उसे हिलाया, तब अपने कंकणों की ध्वनि के कारण लज्जा से चकित होकर प्रिया झरोखे की ओर झाँकने लगी ।।८४।।

**उपचीयमानविभवेन सन्ततं निबिडानुरागरुचिरेण सुभ्रुवः ।**
**अतिशायितां शिथिलयन्त्यथ त्रपा मदनेन सन्धिविधिमैहत स्वयम् ।।८५।।**

निरन्तर बढ़ने वाले वैभव से युक्त तथा गहरे प्रेम के कारण सुन्दर कामदेव के साथ सुन्दर भौंहों वाली नायिका की लज्जा ने, अपने आधिक्य को ढीला करके, स्वयं सन्धि करना चाहा ।।८५।।

**परिचुम्बनेच्छुरलमावृणोन्मुखं परिरिप्सुरङ्गमधिकं जुगूह सा ।**
**नियतं च नेतिपदमीरितं तया सुचिरं रहःसु विधिवाचकं प्रिये ।।८६।।**

यद्यपि प्रिया स्वयं चुम्बन करना चाहती थी, तो भी चुम्बन के समय वह अपने मुख को काफी छिपा लेती थी; यद्यपि उसकी इच्छा स्वयं आलिंगन करने की थी, तो भी आलिंगन के समय वह अपने शरीर को अधिक सिकोड़ लेती थी; और एकान्त में प्रिय के प्रति बहुत देर तक वह निषेधात्मक पद (न कार) का उच्चारण करती थी, यद्यपि वह निषेध निश्चय ही विधि-वाचक (स्वीकृति सूचक) था ।।८६।।

**उपगूहनानि चकिता नखक्षतादपि चुम्बनानि रदनार्पितव्रणात् ।।**
**स्फुरितस्पृहाऽपि दयितस्य सङ्गमे न तदाऽन्वमोदत नवोढकामिनी ।।८७।।**

प्रिय के समागम के समय वह नवोढा वधू, अपनी इच्छा होने पर भी, नखक्षत के भय से आलिंगन का और दन्तक्षत के भय से चुम्बन का अनुमोदन नहीं कर सकी ।।८७।।

**नवसौहृदं मृदुनयेन पालयन् मदनोपदेशमपि नातिलङ्घयन् ।**
**कियतीभिरेव रजनीभिरार्जुनिः सुतनोः स विश्वसितपात्रतां ययौ ।।८९।।**

कोमलता की नीति से नये प्रेम की पालना करते हुये और कामदेव के उपदेश का भी अधिक उल्लंघन न करते हुये वे अर्जुन-पुत्र सुर्जन, कुछ रातों में ही, प्रिया के विश्वासपात्र बन गये ।।८८।।

**उपनाभि चञ्चलकरे नरेश्वरे प्रतिषेधवाचकमसर्वमीरितम् ।**
**मदनस्य मङ्गलऋचस्तदाऽभवत् प्रणवो नवोढहरिणीदृशो वचः ।।८९।।**

प्रियतम के नाभि के समीप चंचल हाथ बढ़ाने पर नवोढा प्रिया ने जिस निषेधात्मक पद (ऊँ ऊँ ऊँ) का अपूर्ण उच्चारण किया, वह उस समय कामदेव की मंगल ऋचाओं (मंत्रों) के प्रणव अर्थात् ओंकार (ऊँ) के समान सुशोभित हुआ ।।८९।।

**न चकार चुम्बनविधौ विरोधितां न जुगूह देहमुपगूहनेष्वपि ।**
**उपनीविसञ्चरणचञ्चलं वधूः करपल्लवं रतिगुरोरवारयत् ।।९०।।**

अब प्रिया चुम्बन का विरोध नहीं करती थी और न आलिंगन के समय अपने शरीर को सिकोड़ती थी; अब वह रतिकलाप्रवीण पति के अपनी नाभि के पास चंचल हाथ को ही हटाती थी ।।९०।।

**चिरनिर्गतास्वपि सखीषु मन्दिरान् मदिरेक्षणा क्षणमवाङ्मुखी स्थिता ।**
**भृशमाचकाङ्क्ष शयनाधिरोहणे दयितेन पाणितलकर्षणं बलात् ॥९१॥**

रतिगृह से सखियों के चले जाने के बाद भी बहुत देर तक मादकनयनी प्रिया नीचा मुख किये खड़ी रही क्योंकि उसकी प्रबल इच्छा थी कि प्रियतम ही उसका हाथ पकड़कर उसे बलपूर्वक शय्या पर खींच लें ॥९१॥

**नवसौहृदस्य परिपालनोत्सुका चकिता पुरः प्रणयभङ्गवैशसात् ।**
**उररीचकार निजखेदमप्यसौ हृदयेश्वरस्य हृदयानुवृत्तये ॥९२॥**

नवीन प्रणय का उत्सुकता से पालन करने की इच्छा के कारण प्रेम के भंग के भय से घबरा कर प्रिया ने, हृदयेश्वर के मनोनुकूल कार्य करने के लिये कुछ कष्ट पाना भी स्वीकार कर लिया ॥९२॥

**इति निर्विशन् विषयसम्भवं सुखं प्रमनाः समं वसुमतीशकन्यया ।**
**दिवसानि वंशबहुलानि वासिनां कतिचित् ततान सुकृती सकौतुकम् ॥९३॥**

इस प्रकार प्रसन्नतापूर्वक पुण्यात्मा राजा सुर्जन ने राजकुमारी कनकावती के साथ विषय सुख भोगते हुये, अपने बड़े वंश वाले ससुराल के लोगों में मिल कर कुछ दिन कुतूहलवश व्यतीत किये ॥९३॥

**जिगमिषुः स्वपुरं स पुरस्कृतः सुकृतिनां नृपतिः सह भार्यया ।**
**अनुमतिं मतिमान् सुखमग्रहीद् विनयतो जगमालमहीपतेः ॥९६॥**

पुण्यशील पुरुषों में अग्रगण्य राजा सुर्जन ने धर्मपत्नी के साथ अपनी नगरी में लौट जाने के लिये, विनय के कारण आसानी से, राजा जगमाल की स्वीकृति प्राप्त कर ली ॥९४॥

**प्रतिष्ठासुः प्रातर्निजनगरमागामिनि दिने**
**समेतः सम्बन्धव्यतिकरितमैत्रीमधुरितैः ।**
**कथानामाभोगैः प्रणयविनयोद्रेकपिशुनै-**
**रनैषीदासीनः क्षणमिव निशान्तां नरपतिः ॥९५॥**

दूसरे दिन प्रातःकाल अपनी नगरी की ओर प्रस्थान करने वाले राव सुर्जन ने, विवाह सम्बन्ध और मित्रता दोनों के मेल से मधुर लोगों के साथ बैठ कर प्रेम और विनय के उत्कर्ष को सूचित करने वाली कथाओं के विस्तार से उस रात्रि को पल के समान व्यतीत कर दिया ॥९५॥

इति सुर्जनचरितमहाकाव्ये चतुर्दशः सर्गः

---

(९३) वासिनां तत्रत्यानां जनानां येषु बहुलानि वंशानि कुलानि संमिलन्ति स्म तादृशानि दिवसानि ।
(९५) सम्बन्धेन विवाहसम्बन्धेन व्यतिकरिता समृद्धा मैत्री तया मधुरितैः मनोहरैः ।

# पञ्चदशः सर्गः

**नाथः कलानामथ कालयन्त्रितां विभावरीं यानमुखीं विभावयन् ।**
**छायाव्यपायाद् वहति स्म धूसरं वियोगिनारीवदनोपमं वपुः ॥ १ ॥**

काल से नियमित रात्रि को जाते हुये देख कर कान्तिहीन चन्द्रमा ने विरहिणी स्त्री के मुख के समान पीला शरीर धारण किया ॥ १ ॥

**यो वर्धयत्यम्बुनिधीन् दिवौकसां बिभर्ति कुक्षिं वपुषो व्ययेन यः ।**
**जीवातुराद्योऽस्य जगत्त्रयस्य यः स दुर्दशाया दशनान्तरं गतः ॥ २ ॥**

जो समुद्रों के हृदयों को उछालता है, जो अपने शरीर तक को अर्पण करके देवताओं का पेट भरता है (देवगण चन्द्रमा की अमृतमयी कलाओं का उपभोग करते हैं) और जो तीनों लोकों के लिये जीवनौषधि है, वह चन्द्रमा भी दुर्भाग्य के मुँह में चला गया ! ॥ २ ॥

**पीतारुणेनाक्षिगतेन कौमुदी जगाम लक्ष्मीर्मुदिताब्जकाननम् ।**
**कुत्रापि याता प्रथमं निशीथिनी कलङ्कशेषः पतितः कलाधिपः ॥ ३ ॥**

लाल अरुण (सूर्य-सारथि) के उदित होने पर प्रसन्न कुमुद-लक्ष्मी कमलों के समूह में चली गई; रात्रि तो पहले ही कहीं चली गई थी। अतः अकेला चन्द्रमा भी, जिसका (कान्तिहीन होने के कारण और अपनी स्त्रियों के अन्यत्र भाग जाने के कारण) केवल कलंक ही शेष रह गया था, अस्त हो गया ॥ ३ ॥

**दोषाः परं वृद्धिमयन्ति सन्ततं गुणास्तु मुञ्चन्ति विपत्सु पूरुषम् ।**
**कान्त्या विहीनस्य विधोः पतिष्यतः कलङ्क एवोद्भटतां जगाम यत् ॥ ४ ॥**

विपत्ति में पुरुष के दोष बढ़ जाते हैं और गुण उसे छोड़ जाते हैं; अस्त होने वाले कान्तिहीन चन्द्रमा का कलंक ही बढ़ता गया ॥ ४ ॥

**उद्यन्ननूरुर्मुखरञ्जनं पुरा दिशो विधाय क्षणमङ्गरागजाम् ।**
**लक्ष्मीं समग्रां निदधे निरत्ययामुदञ्चिताङ्गीषु सरोजराजिषु ॥ ५ ॥**

उदय होने वाले अरुण ने पूर्वदिशा का शृङ्गार करने के लिये उसके मुख पर लाल उबटन लगाया और बचे-खुचे लाल उबटन की सारी शोभा को विकसित अंगों वाली कमलपंक्तियों पर फेंक दिया ॥ ५ ॥

**कामं कलाभिः परिपूर्णमण्डलो धुनोतु धाम्ना तिमिराणि चन्द्रमाः ।**
**धाम्नां निधेरग्रसरेऽपि यद् बलं तमोनिरासे न भवेत् तदन्यतः ॥ ६ ॥**

भले ही पूर्णबिम्ब वाला चन्द्रमा अपनी सारी कलाओं के प्रकाश से अन्धकार को नष्ट करे, किन्तु अन्धकार को नष्ट करने की जो शक्ति सूर्य के सारथी में भी है वह अन्यत्र नहीं है ॥ ६ ॥

**शोणैः करैः संक्रमयन् मनोगतं पतङ्गकान्तेष्वनलं रथाङ्गयोः ।**
**सौभाग्यलक्ष्मीं गलहस्तयन् पुरः कुमुद्वतीनामुदगान् मरीचिमान् ॥ ७ ॥**

चकवा-चकवी की विरहाग्नि को अपने लाल करों से सूर्यकान्त मणियों में सरकाते हुये और कुमुदिनी की सौभाग्यलक्ष्मी को गर्दन पकड़ कर वाहर निकालते हुये, भगवान् सूर्य उदित हुये ॥७॥

**वातायनेभ्यः पतिता नभोमणेर्मरीचयो गैरिकरागरोचिषः ।**
**मर्माण्यभिन्दन् नितरां भुजान्तराद् विमोचयन्तो दयितान् नतभ्रुवाम् ॥८॥**

सूर्य की खिड़कियों की जालियों में से आनेवाली गेरू के समान लाल किरणों ने कामिनियों के वाहुपाश से प्रियतमों को छुड़ा कर उन्हें मर्मान्तिक कष्ट दिया ॥ ८ ॥

**पद्माकराणां विरलाः शनैः शनैस्तरङ्गलेखा गणयन्निवोदिताः ।**
**सौरभ्यसारं सरसीरुहां हरन् समीरणः सञ्चरति स्म मन्थरम् ॥ ९ ॥**

कमलों से शोभित सरोवरों में धीरे-धीरे उठनेवाली लहरों को मानों गिनते हुये और कमलों की सुगन्धि को हरते हुये शीतल और सुगन्धित पवन मन्द मन्द चल रहा था ॥ ९ ॥

**वाष्पोदबिन्दुप्रतिमान् मृणालिनीमुखे विलग्नान् हिमवारिशीकरान् ।**
**प्रोञ्छन् करेण द्युमणिर्म्रदीयसा प्रसादलक्ष्मीमनयच्छनैः शनैः ॥१०॥**

कमलिनी के मुख की आँसुओं की बूँदों के समान लगने वाली ओस की बूँदों को अपने कोमल करों से पोंछ कर सूर्य ने उसके मुख की शोभा को धीरे-धीरे बढ़ाया ॥१०॥

**क्षिप्ता नभोनीरनिधौ सुधानिधे र्लसन्मयूखावलिदुग्धधोरणीः ।**
**आकृष्य हंसः समकालमग्रसद् विसारितारालिबिसाङ्कुरानपि ॥११॥**

सूर्य रूपी हंस, आकाशरूपी समुद्र में गिरी हुई चन्द्रमा की सुन्दर किरणों-रूपी दूध की धाराओं को और तारों की फैली हुई किरणों रूपी कमल-तन्तुओं को एक साथ खींच कर खा गया ॥११॥

**रागेण यावन् म्रदिमानमीयिवान् नभोमणिस्तावदगादनुष्णताम् ।**
**अस्मिन् कठोरत्वमुपेयुषि क्षणात् पतङ्गकान्तप्रतिमालमज्वलत् ॥१२॥**

सूर्य जब तक राग (लाली, प्रेम) के कारण कोमल था तब तक सूर्यकान्त मणि भी प्रेम से शीतल रही; किन्तु जब कुछ देर बाद (राग बीत जाने पर) सूर्य कठोर हो गया तब सर्यकान्ता भी जल उठी ॥ १२ ॥

**निस्तीर्य पूर्वाद्रिविलङ्घनक्लमं व्रजन्नथ व्योममणिः प्रचण्डताम् ।**
**नोद्वेजयामास मरीचिभिर्द्वयीं रथाङ्गकान्तामपि पद्मिनीमपि ॥१३॥**

उदयाचल पर्वत को लाँघने का परिश्रम दूर करके जब सूर्य प्रचण्ड हो गया तब भी उसने अपने उष्ण किरणों से केवल दो वस्तुओं को, चकवी को और कमलिनी को, त्रास नहीं दिया ॥१३॥

---

(११) हंसः पक्षी सूर्यश्च ।

**नवोढवध्वा नमदाननश्रियो नवीनमापीनकुचप्रसाधनम् ।**
**अन्योन्यमक्षिभ्रुवविभ्रमेङ्गितैर्नखक्षतं निर्दिदिशुर्मृगीदृशः ॥१४॥**

लज्जा से नतमस्तक नई दुलहिन के सुडौल स्तनों पर नये आभूषण के समान सुशोभित, प्रियतम के नखक्षत को, मृगनयनी सखियों ने एक दूसरी को आँखों ही आँखों के कलापूर्ण इशारों से दिखाया ॥१४॥

**इत्थं प्रवृत्ते दिवस्य सम्भ्रमे समाप्य कृत्यं कृतिनां पुरःसरः ।**
**देवान् द्विजातीन् मिलितान् गुरूनपि प्रतिष्ठते स्म प्रयतः प्रणम्य सः ॥१५॥**

इस प्रकार प्रातःकाल हो जाने पर कर्मठ-श्रेष्ठ सुर्जन ने, नित्य-कृत्य से निवृत्त होकर, देवताओं को, ब्राह्मणों को और एकत्रित गुरुवर्ग को सविनय सावधानीपूर्वक प्रणाम किया ॥१५॥

**भूयिष्ठभूषामपि नव्यभूषणैः प्रसाध्य भूयः कनकावतीं सुताम् ।**
**यानोन्मुखीं यौवतनीतियन्त्रितं जगाद माताऽश्रुभराकुलं वचः ॥१६॥**

माता ने अपनी पुत्री कनकावती को, जिसने बहुत से आभूषण पहिन रक्खे थे, और नये आभूषणों से सुसज्जित किया और विदा के समय आँसुओं के कारण गद्‌गद होकर युवतियों की नीति के अनुरूप ये वचन कहे ॥ १६ ॥

**जानामि जन्मावधि शीलशालिनीं कुलस्य शोभां भवतीमकृत्रिमाम् ।**
**विज्ञातधर्माऽसि कुलीनयोषितां त्वमात्ममत्यैव हि सत्पथीनया ॥१७॥**

पुत्रि ! मैं जानती हूँ कि तुम जन्म से ही शीलवती और कुल की सहज शोभा हो तथा तुम अपनी सन्मार्गगामिनी बुद्धि के कारण कुलीन स्त्रियों के धर्मों को जानती हो ॥ १७ ॥

**वत्से तथापि प्रतिबोधयाम्यहं प्रगाढवात्सल्यवशात् पुनः पुनः ।**
**दुःखेन रक्ष्यं कुलपालिकाव्रतं प्रमादनिर्धूतधियां हि योषिताम् ॥१८॥**

वत्स ! फिर भी गहरे वात्सल्य के कारण मैं वार वार तुम्हें उपदेश देती हूँ क्योंकि प्रमाद के कारण नष्ट बुद्धिवाली स्त्रियों के लिये कुलीन स्त्रियों के व्रत की रक्षा करना कठिन हो जाता है ॥१८॥

**मन्दाक्षदाक्षिण्यदयाक्षमादयः स्वभावसिद्धाः कुलकामिनीगुणाः ।**
**तेषां प्रकर्षाय कुरुष्व कौशलं ततोह्यसाधारणता नतभ्रुवाम् ॥१९॥**

लज्जा, चातुर्य, दया और क्षमा आदि कुलीन स्त्रियों के स्वाभाविक गुण हैं । इन गुणों के उत्कर्ष के लिये कुशलतापूर्वक प्रयत्न करना क्योंकि ये स्त्रियों की असाधारणता के कारण हैं ॥१९॥

**गृह्णातु पाणिं पृथिवीपुरन्दरो जनुर्मनुष्येश्वरतोऽस्तु दैवतः ।**
**सामान्यसम्भावनया नितम्बिनी न पट्टराज्ञीपदपात्रतामियात् ॥२०॥**

भले ही सौभाग्य से कोई स्त्री राजा के यहाँ जन्म ले ले और भले ही सौभाग्यवश उसका विवाह भी किसी राजा से ही हो जाय, फिर भी, यदि वह साधारण स्त्रियों की तरह है, तो पटरानी के पद के योग्य नहीं बन सकती ॥ २० ॥

---

(१९) मन्दाक्षं लज्जा ।

**देवद्विजन्मातिथिदुर्गतान् मुहुः प्रयत्नतः प्रीणय तत्तदर्हणैः ।**
**मुक्त्वा मुखम्लानिमनीचमानसा वनीयकेभ्यो वितरोचितं वसु ॥२१॥**

देव, ब्राह्मण, अतिथि और विपद्ग्रस्त व्यक्तियों को वार वार प्रयत्न से विविध सेवाओं द्वारा प्रसन्न करना और प्रसन्नमुख तथा विशालहृदय होकर याचकों को उचित धन देना ॥ २१ ॥

**शुश्रूषमाणा गुरुवर्गमुद्गतश्रमा यदि स्याः सुकुमारभावतः ।**
**निर्वेदखेदं खलु तत्र मा कृथाः कृतार्थतामेव ततोऽवधारय ॥२२॥**

यदि गुरुजनों की सेवा करते समय, सुकुमार होने के कारण, तुम थक भी जाओ, तो उससे कष्ट का अनुभव मत करना, किन्तु उस सेवा के कारण अपने आपको धन्य समझना ॥ २२ ॥

**आम्रेडनं चेत् कुरुते गुरुः स्वयं प्रसन्नचेताः सुकुमारभाषितैः ।**
**भवेस्तदायासभिदे त्वदीशितुः सभाजनार्थं शुभवेशपेशला ॥२३॥**

जव गुरुजन तुम्हारी सेवा से प्रसन्नचित्त होकर प्रेमपूर्ण कोमल वचनों से परिश्रम दूर करने के लिये तुमसे दो-तीन बार कहें ('तुम थक गई हो,अब भीतर जाओ' इस प्रकार दो-तीन वार कहें) तब सुन्दर वेश और शृङ्गार से सुसज्जित होकर अपने पति के सत्कार के लिये जाना ॥२३॥

**चेष्टाभिरिष्टाभिरुदारभाषितैरकृत्रिमप्रेमपवित्रया धिया ।**
**सर्वास्ववस्थास्वपि सर्वतोमुखी विवर्धनीया दयितेऽनुकूलता ॥२४॥**

प्रिय कर्मों से, उदार वचनों से और निश्छल प्रेम द्वारा पवित्र मन से, सव अवस्थाओं में सब प्रकार से, पति के प्रति अनुकूलता वढ़ाना ॥ २४ ॥

**पत्यौ प्रतीपेऽपि तिरोहितव्यथा हिताय तस्याऽऽहितमानसा भव ।**
**विरुद्धभाषिण्यपि तत्र सत्रपा कृपानिदानं वद दैन्यवद् वचः ॥२५॥**

पति के प्रतिकूल होने पर भी अपनी व्यथा को छिपा कर सदा उनके हित के लिये मन लगाना और पति के तुम्हारे विरुद्धवचन बोलने पर भी तुम लजीली और दीन वनकर उनको प्रसन्न करने वाले वचन बोलना ॥ २५ ॥

**ईर्ष्यातिरेकोत्थवितर्कविभ्रमान् न चानुसन्धेयममुष्यदूषणम् ।**
**मा श्रद्दधीथाः श्रुतमप्युपेक्षया प्रतीतमप्यात्मतुदं विदूरय ॥२६॥**

ईर्ष्या के आधिक्य से उत्पन्न तर्क-वितर्क के कारण पति के दूषण ढूँढ़ने का प्रयत्न मत करना। यदि उनके दोष सुन भी लो तो भी उनकी उपेक्षा कर देना और उनका विश्वास मत करना एवं यदि तुम स्वयं पति की कष्टदायक प्रतिकूलता का अनुभव करो तो भी उसे भुला देना ॥२६॥

**निर्याति नो चेन् मनसस्तदुद्भटं प्रकाशनीयं न च दूषणं प्रिये ।**
**लौल्यात् प्रमादादथ चेत् प्रकाशितं निवेशनीयं परिहासभाषिते ॥२७॥**

यदि पति का उग्र दोष मन से निकाला न जा सके तो भी उसे कभी पति के सामने प्रकट मत करना और यदि चापल्य से अथवा भूल से उसे प्रकट कर दो तो उसका समावेश हँसी में कर देना ॥ २७ ॥

---

(२३) आम्रेडनं द्विस्त्रिरुक्तम् ।

**बुद्ध्या विनिर्धार्य च भर्तुराशयं बिभर्ति येनायमवारितां मुदम् ।**
**तेन प्रबन्धेन मनोऽस्य सन्ततं स्वतन्त्रमाराधय वीतमत्सरा ॥२८॥**

पति के हृदयगत भावों को सोच-समझकर जिन बातों से उनको अत्यन्त प्रसन्नता मिले उन बातों से, सदा ईर्ष्यारहित होकर, पति के स्वतन्त्र मन को प्रसन्न रखना ॥ २८ ॥

**द्रागुद्वहन्तं वनितामथापरामसूयया खेदय माऽवनीपतिम् ।**
**भूयिष्ठभार्या हि भवन्ति भूभृतस्तवापि तावच्छ्रुतिगोचरं गताः ॥२९॥**

यदि तुम्हारे पति शीघ्र किसी अन्य स्त्री से भी विवाह कर लें तो भी ईर्ष्यालु बन कर उन्हें कष्ट मत देना। यह तो तुमने भी सुना ही है कि राजाओं के अनेक रानियाँ होती हैं ॥ २९ ॥

**भवन्ति भार्याः शतशो महीभृतां गुणैर्भवत्येकतमा प्रतिष्ठिता ।**
**ताराः कलत्राण्यखिलाः कलाभृतो न रोहिणीसाम्यमुपैति काचन ॥३०॥**

भले ही राजाओं के अनेक रानियाँ हों, किन्तु गुणों के कारण एक पटरानी ही प्रतिष्ठित होती है; चन्द्रमा के अनेक तारा-रूपी स्त्रियाँ हैं, किन्तु कोई भी रोहिणी की बराबरी नहीं कर सकती ॥ ३० ॥

**मर्मस्पृशाप्यन्यगिरा निपीडिता न पीडयेस्तं प्रतिकूलचेष्टितैः ।**
**पत्युः प्रसादातिशयेऽपि पुत्रिके! न लङ्घनीयो विनयोचितः क्रमः ॥३१॥**

अन्य (सपत्नी) की मर्मस्पर्शी वाणी से पीड़ित होकर भी तुम प्रतिकूल चेष्टाओं से उसे कष्ट मत देना। पुत्रि ! पति के अत्यन्त प्रसन्न होने पर भी विनयोचित क्रम का उल्लंघन मत करना ॥ ३१ ॥

**एवंविधैस्त्वं पतिदेवताव्रतैर्वितन्वती विश्वजनानुरञ्जनम् ।**
**सीमन्तिनीनामुपगम्य मौलितां स्वबान्धवानां मुखमुज्वलीकुरु ॥३२॥**

इस प्रकार पतिव्रताधर्मों से तुम सब लोगों को आनन्द देती हुई स्त्रियों में शिरोभूत (श्रेष्ठ) बनकर अपने बन्धुओं का मुँह उजला करना ॥ ३२ ॥

**एवं ब्रुवाणा विनयानताननां दृगम्बुपूरैः स्नपयन्त्यशीतलैः ।**
**मूर्धन्युपाघ्रायभृशोपगूहितां मुमोच कृच्छ्रेण कृशोदरीं प्रसूः ॥३३॥**

विनय से नतमुख कृशोदरी कनकावती को पूर्वोक्त उपदेश देकर अपने गरम आँसुओं की धारा से उसे नहलाती हुई माता ने उसका गाढ़ आलिंगन करके और मस्तक सूँघकर बड़ी कठिनता से उसे छोड़ा ॥ ३३ ॥

**मान्यास्तथान्या मिलिताः कुटुम्बिनीः क्रमेण सम्भाव्य पदाभिवन्दनैः ।**
**ताभिः कृताशीर्भिरथानुमोदिता नरेन्द्रपुत्रीनरयानमागमत् ॥३४॥**

कनकावती ने (माता से विदा लेकर) अन्य एकत्रित सम्मान्य कुटुम्बिनी स्त्रियों को उनके पैर छूकर प्रणाम किया और उनसे शुभाशीर्वाद तथा आज्ञा लेकर वह राजकुमारी पालकी पर चढ़ गई ॥ ३४ ॥

**यानान्तरं यातमनन्तरं नृपः समेतबन्धुर्गुणसिन्धुरन्वगात् ।**
**प्राप्तः पुरं शूरजनोऽपि सम्भृतप्रभूतमङ्गल्यमनोज्ञमण्डनम् ॥३५॥**

बन्धुवर्ग से घिरे हुये गुणसमुद्र राव सुर्जन दूसरे यान पर चढ़कर पालकी के साथ-साथ चले और अनेक एकत्रित मांगलिक सुन्दर पदार्थों से सुसज्जित अपनी नगरी में पहुँच गये ॥ ३५ ॥

**ऋद्धां समासाद्य पुरीं प्रथीयसा प्रतापजालेन तिरोहिताऽहितः ।**
**कालं कियन्तं कनकावतीसखो विहारभूमिं भ्रमति स्म भूपतिः ॥३६॥**

प्रबल प्रताप से शत्रुओं को छिपा देने वाले राव सुर्जन अपनी समृद्ध नगरी में आकर कुछ समय तक कनकावती के साथ विहारभूमि में भ्रमण करते रहे ॥ ३६ ॥

**पुंस्कोकिलालापपरिष्कृतिव्रतैः स वीज्यमानो मलयाद्रिमारुतैः ।**
**तल्पे नवीनाम्रदलोपकल्पिते निनाय रम्या मधुयामिनीरसौ ॥३७॥**

कोयलों के आलाप को परिष्कृत करने के व्रत वाले मलयानिल के पवनों से सेविन राजा ने नवीन आम के पत्तों से रचित शय्या पर वसन्त-ऋतु की सुन्दर रात्रियाँ व्यतीत कीं ॥ ३७ ॥

**सौभाग्यलक्ष्मीमथ शीतरोचिषः प्रतापऋद्धिं च रुचामधीशितुः ।**
**प्रोद्दीपयन् पङ्किलपल्वलोदकः समागमद् घर्मऋतुः समन्ततः ॥३८॥**

इसक बाद चन्द्रमा की सौभाग्यलक्ष्मी को और सूर्य के प्रताप की समृद्धि को बढ़ाने वाली तथा चारों ओर छोटे-छोटे गड्ढों में कीचड़ मिला हुआ पानी शेष रखने वाली ग्रीष्म-ऋतु उपस्थित हुई ॥ ३८ ॥

**आसाद्य रौद्रीं हरितं हरित्पतिर्भृशं प्रजज्वाल दहन्निव प्रजाः ।**
**तत्पालकाक्षिप्रभवाशुशुक्षणेर्विसारिभिर्ज्वालभरैरिवावृतः ॥३९॥**

उस समय (ग्रीष्म में) सूर्य उत्तर दिशा में जाकर (उत्तरायण होकर) प्रजा को मानों जलाते हुये उग्र रूप से प्रज्वलित हो उठे मानों वे उत्तर दिशा के पालक भगवान् शिव के नेत्र से उत्पन्न अग्नि की विस्तृत ज्वालाओं से घिर गये हों ॥ ३९ ॥

**निपीय निःशेषरसं रसान्तरादनाप्नुवंस्तृप्तिमिव त्विषां पतिः ।**
**अस्पन्दयत् सन्तततापनोद्गतान् शिलोच्चयेभ्योपिरसान् हिमस्नुतः ॥४०॥**

पृथ्वी के भीतर का सारा रस (जल) पीकर भी तृप्त न होने वाले सूर्य ने निरन्तर ताप से निकाले गये पर्वतखण्डों के वर्फ़ से पिघलने वाले जल को खींचना प्रारम्भ किया ॥ ४० ॥

**पीत्वातितप्तास्तरसा तरङ्गिणीस्तीव्रेण तापेन पिपासुरंशुमान् ।**
**प्रालेयशैलाङ्कगतां दिशं गतो हिमं शिलीभूतमकल्पयत्यपः ॥४१॥**

तीव्र ताप के कारण प्यासे सूर्य ने अत्यन्त तप्त नदियों को वेग से पीकर हिमालय की गोदी में स्थित उत्तर दिशा में जाकर बर्फ़ की शिलाओं को पिघला कर पानी बहाना प्रारम्भ किया ॥४१॥

---

(३७) पुंस्कोकिलानां आलापस्य परिष्कृतिः संस्कृतिरेव व्रतं येषां तैः ।

**भर्तुः प्रभावातिशयेन भूयसीं समश्नुते वृद्धिमसंशयं जनः ।**
**तेजोधिकं बिभ्रति वासराधिपे महत्वमुच्चैर्यदवाप वासरः ॥४२॥**

लोग अपने स्वामी के अत्युत्कृष्ट प्रभाव के कारण भारी वृद्धि प्राप्त करते हैं; यही कारण था कि दिन के स्वामी सूर्य के (ग्रीष्म-ऋतु में) प्रचण्ड तेजस्वी बन जाने पर दिन भी बहुत बड़ा हो गया ॥ ४२ ॥

**स्पर्शं खरोष्णं किल सोढुमक्षमा करैः कठोरैः क्वथितं विवस्वतः ।**
**आमूलमुत्सर्पि मृणालविग्रहा मुमोच चाल्पेन पयः सरोजिनी ॥४३॥**

कोमल मृणाल शरीरवाली और इसीलिये सूर्य के अत्यन्त उष्ण स्पर्श को सहने में असमर्थ कमलिनी ने सूर्य की गरम किरणों से खौलने वाले और जड़ के आसपास ही फैलने वाले थोड़े से पानी को भी छोड़ दिया ॥ ४३ ॥

**जग्मुर्युवानो न तथाऽतिनिर्वृतिं सगन्धसारैर्घनसारशीकरैः ।**
**स्नानोत्थितप्राणसमास्तनान्तरप्रसक्तिशीतैर्जलबिन्दुभिर्यथा ॥४४॥**

युवकों को चन्दन और कपूर के लेप से उतनी शान्ति नहीं मिली जितनी उन्हें स्नान करके निकली हुई प्रियतमाओं के स्तनों पर लगे हुये जलबिन्दुओं के शीतल स्पर्श से मिली ॥ ४४ ॥

**अश्रान्तनिष्यन्दिजलार्द्रकञ्चुकप्रसन्नपीनस्तनकुम्भविभ्रमम् ।**
**धारागृहे रागभृतो मृगीदृशां विलोकयन्तो दिवसानयापयन् ॥४५॥**

फौव्वारों के नीचे बैठ कर निरन्तर वरसने वाले जल के कारण गीली चोलियों में से स्पष्ट प्रतीत होने वाले मृगनयनियों के सुडौल स्तनों की शोभा को देख-देख कर प्रेमी युवकों ने गरमी के दिन व्यतीत किये ॥ ४५ ॥

**पीताः पुरश्चण्डरुचो मरीचिभिर्निसर्गरूक्षैश्च समीरणैस्ततः ।**
**निःशेषितापाः सततं विगाहनै र्जलाशयाः कर्दमशेषतां ययुः ॥४६॥**

सरोवरों के जल को पहले तो प्रचण्ड सूर्य की किरणों ने पिया, फिर स्वभाव से ही रूखे गरम पवनों ने पिया, फिर बचा-खुचा जल प्राणियों के निरन्तर स्नान करने के कारण समाप्त हो गया और उनमें कीचड़ ही शेष रह गया ॥ ४७ ॥

**आरूढहर्म्याणि हिमाम्बुनिःसृतिप्रकामरम्ये मिथुनानि रात्रिषु ।**
**शीतांशुकान्तोपलकुट्टिमोदरे शिरीषपुष्पास्तरणे स्म शेरते ॥४७॥**

गरमी की रातों में पतिपत्नी महलों के ऊपरी भाग में चन्द्रकान्त मणियों से जड़े हुये फर्श पर, जो (चन्द्रोदय के कारण) बहने वाले शीतल जल से अत्यन्त आनन्ददायक बन रहा था, शिरीष पुष्पों का बिस्तर बिछा कर सोते थे ॥ ४७ ॥

---

(४३) मृणालशरीरा नलिनी आमूलमल्पेनाल्पतया उत्सर्पि विसारि पयोऽपि मुमोच ।

**पान्थो युवा पाटलपुष्पमुद्‌गतं मनोभुवो गन्धवहं स्म मन्यते ।**
**तन्निर्गता गन्धवहाः सुगन्धयोऽप्यमूर्च्छयन् मानसमस्य यन्मुहुः ॥४८॥**

युवक पथिक ने गुलाव के विकसित पुष्प को कामदेव के अभिमान को धारण करने वाला माना क्योंकि उसमें से निकलने वाले (उसका स्पर्श करके आने वाले) सुगन्धित पवनों ने भी उसके मन को बार बार मूर्छित कर दिया ॥ ४८ ॥

**झङ्कारिणः क्वापि गता मधुव्रताः स्वनप्रसङ्गोऽपि पिकस्य न क्वचित् ।**
**धिग् दैवमाम्रस्य फले पचेलिमे शुकस्य काकस्य च तुल्यभागिता ॥४९॥**

(वसन्त में) गूँजनेवाले वे भ्रमर (अब ग्रीष्म में) पता नहीं कहाँ चले गये और अब तो कहीं कोयल की कूक भी सुनाई नहीं देती। धिक्कार है उस विधाना को जो आम के पके फल में तोते को और कौवे को बराबर भाग दे रहा है! ॥ ४९ ॥

**भ्राम्यन् पिपासुः पथि मारवे मुहुर्मरीचिकावीचिनिरुद्धनिर्गमे ।**
**अम्भोविहीने गहने तपोरयैः पपात सिन्धाविव विक्लवोऽध्वगः ॥५०॥**

गर्मी के वेग से गहन, जलविहीन, मारवाड़ के रेतीले मार्ग में, जिसमें से मृगमरीचिका की लहरों के कारण निकलने का कोई चारा नहीं था, घूमता हुआ प्यासा पथिक व्याकुल होकर गिर पड़ा, मानों समुद्र में कूद पड़ा हो ॥ ५० ॥

**भ्रान्त्वाऽतिदूरं तरुगुल्मसम्वृतं मृगः समासाद्य मितं पयः क्वचित् ।**
**आवृत्य तस्थौ तृषितोऽपि कातरां शनैश्चलन्तीं प्रतिपालयन् मृगीम् ॥५१॥**

बहुत दूर तक इधर-उधर दौड़धूप करने वाले एक हिरण को किसी झाड़ी के नीचे थोड़ा-सा पानी मिल गया। प्यासा होने पर भी वह धीरे-धीरे चलने वाली (प्यास से) व्याकुल मृगी की प्रतीक्षा करते हुये उस जल को ढक कर बैठ गया ॥ ५१ ॥

**एकस्य पाथोजदलस्य पार्श्वतो निलीय नेतुं तपतीव्रमातपम् ।**
**छायामदीर्घामपि सेवितुं समं रथाङ्गयुग्मं यतते स्म मौग्ध्यतः ॥५२॥**

एक कमलदल के पास छिप कर, भयंकर गर्मी को विताने के लिये, चकवा-चकवी का जोड़ा, मूढ़ता के कारण, उसकी छोटी-सी छाया में बराबर बराबर बैठने का यत्न कर रहा था ॥ ५२ ॥

**कुञ्जोदरे वा तरुकोटरे वा निलीय कुत्रापि विनीय वासरम् ।**
**अस्तं गते घर्मघृणौ शनैः शनैः विनिर्ययौ कौशिकवत् पृथग्जनः ॥५३॥**

किसी कुञ्ज के भीतर अथवा किसी वृक्ष की कोटर में छिप कर और किसी प्रकार दिन भर बिता कर, ग्रीष्म ऋतु के सूर्य के अस्त हो जाने पर, तुच्छ पुरुष, उल्लुओं की तरह, धीरे धीरे बाहर निकले ॥ ५३ ॥

**सूक्ष्मान्तरीये जघने घनस्तनी सहा न वोढुं रशनाकलापकम् ।**
**उत्फुल्लमल्लीकुसुमस्रजः परं नितम्बशोभां नितरामुपानयत् ॥५४॥**

विशाल स्तनवाली कामिनी ने, पतले वस्त्र से शोभित नितम्ब पर करधनी का भार न सह सकने के कारण, विकसित मल्लिका के पुष्पों की माला से ही अपने नितम्ब की शोभा बढ़ाई ॥५४॥

---

(५३) घर्मघृणौ ग्रीष्मर्तुसूर्ये।

**स्वेदोदबिन्दुस्तिमितं मृगीदृशो वपुर्वहन्त्यास्तपतापनिःसहम् ।**
**गाढं ललाग स्फुटरागि कञ्चुकं स्वत्याजनत्रस्तमिव स्तनद्वये ॥५५॥**

ग्रीष्म की गरमी को न सह सकने वाले सुकुमार शरीर वाली मृगनयनी की पसीने की बूँदों से गीली और इसलिये प्रकटित राग (लाली; अनुराग) वाली चोली, उतार कर फेंक दिये जाने के भय से, स्तनों से कस कर चिपक गई ॥ ५५ ॥

**ग्रीष्मानुरोधादनुभूय भूपतिः स वारिधारा जलयन्त्रनिर्गताः ।**
**वारां विहारैश्चकमे निषेचनं विलासिनीनां करयन्त्रधारया ॥५६॥**

ग्रीष्म के कारण राजा ने फौव्वारों से निकलने वाली जल की धाराओं का सेवन करके, जल-क्रीड़ा द्वारा करयन्त्र की धारा से कामिनियों को भिगोने की इच्छा की ॥ ५६ ॥

**हंसान् हसन्त्यो गमनैरथालसैः सखीकरालम्बनलब्धसाहसाः ।**
**पेतुः पतङ्गांशुनिपातकातरास्तरङ्गिणीं त्रस्तकुरङ्गलोचनाः ॥५७॥**

अपनी मन्द चाल से हंसों की हँसी उड़ाने वाली और भयभीत हिरणों की सी आँखों वाली तथा सूर्य की किरणों के गिरने से व्याकुल स्त्रियों ने, सखियों के हाथों के सहारे के कारण साहस करके, नदी में प्रवेश किया ॥ ५७ ॥

**आकर्ण्य तारं कलनूपुरध्वनिं पुराङ्गनानां पतगाः सितच्छदाः ।**
**आपेतुरुत्तानितदीर्घकन्धराः स्वयूथ्यनादभ्रमतः ससम्भ्रमाः ॥५८॥**

उन रमणियों के सुन्दर नूपुरों की उच्च ध्वनि को सुनकर, अपने झुण्डों के शब्द के भ्रम से, सफेद पंखों वाले हंस, चकित होकर और अपनी लम्बी गरदनें तान कर, आये ॥ ५८ ॥

**सीमन्तिनीनां कलमेखलारवैर्जितस्वराः सारसपत्रिपंङ्क्तयः ।**
**द्रागेव जग्मुः सलिलाशयान्तरं पराभवोद्भूतह्रियेव ताडिताः ॥५९॥**

रमणियों की रशनाओं के सारसों के स्वरों को जीतने वाले स्वरों से परास्त होकर सारस पक्षियों की पंक्तियाँ मानों पराजय की लज्जा के कारण शीघ्र जलाशय के भीतर घुस गई ॥ ५९ ॥

**दूरादहंपूर्विकया समागतास्तटावधि प्रौढकुतूहलेरिताः ।**
**तोयावगाहे क्षणजातसम्भ्रमा नतभ्रुवस्तद्विपरीततां दधुः ॥६०॥**

अत्यन्त कुतूहल से प्रेरित हुई रमणियाँ दूर से तट तक तो "मैं पहले चलूँ", "मैं पहले चलूँ" इस प्रकार की स्पर्धा से आई, किन्तु जल में उतरने के समय, क्षण भर चकित होकर, "तुम पहले उतरो", "तुम पहले उतरो" कहने लगीं ॥ ६० ॥

**कामं समर्थापि पुरो नितम्बिनी नितम्बदघ्नेम्भसि साध्वसादिव ।**
**हस्तावलम्बे दयितस्य सस्पृहा निर्वर्तितुं सम्ववृते पराङ्मुखी ॥६१॥**

नितम्ब तक आने वाले जल में उतरने के लिये समर्थ होने पर भी कोई कामिनी, प्रियतम के हाथ के सहारे को पाने की इच्छा के कारण, मानों भय से विमुख होकर लौटने लगी ॥ ६६ ॥

**कान्तेन सिक्तं प्रथमं पृथुस्तनी विपक्षमालोक्य विवृद्धवेपथुः ।**
**शीतातिरेकं प्रतिपाद्य कोपना जवादुदस्थाज्जलवेणिमध्यतः ॥६२॥**

प्रियतम ने पहले सपत्नी पर जल छिड़का, यह देखकर किसी विशाल स्तनवाली कामिनी को क्रोध से रोमाञ्च हो गया और वह काफी सर्दी लगने का बहाना बना कर वेग से जल के प्रवाह से बाहर जाने के लिये उठ खड़ी हुई ॥ ६१ ॥

**कान्ताभिषेकाय पुरः समुद्यता भुजद्वयाऽऽन्दोलननर्तितस्तनी ।**
**दोर्मूललोलेक्षणमेनमुन्मुखी विलोक्य भूयिष्ठमसिञ्चदक्षिणी ॥६३॥**

प्रियतम पर दोनों हाथों से जल फेंकने के कारण भुजाओं के हिलने से नाचने वाले स्तनों वाली रमणी ने जब मुँह उठा कर देखा कि प्रियतम तो उसकी भुजाओं के मूल पर दृष्टि जमाये हैं, तो उसने प्रियतम की आँखों पर गहरा पानी फेंकना प्रारम्भ किया ॥ ६३ ॥

**लग्नं कुचे केसरमम्बुजन्मनो विदूरयामीति नखक्षतस्पृशम् ।**
**सीत्काररुद्धस्मितमाक्षिपत् प्रियं सरोरुहाक्षी कटुसाचिवीक्षणैः ॥६४॥**

'तुम्हारे स्तन पर कमल का केसर लग गया है, इसे हटा देता हूँ'—यह कहकर नखक्षत का स्पर्श करने वाले प्रियतम पर, कमलनयनी ने, जिसकी मुस्कान को सीत्कार ने रोक दिया था, बनावटी क्रोध से टेढ़ी नजर डाली ॥ ६४ ॥

**गत्वा कियद्दूरमुदीक्ष्य कौतुकाद् ग्रहीतुकामा कमलानि कामिनी ।**
**आलम्बितुं नालमुदग्रनालकं विदूनपाणिः परिगाढकण्टकैः ॥६५॥**

कोई कामिनी कुतूहलवश कमलों को देख कर उनको तोड़ने के लिये कुछ दूर तक गई, किन्तु उठे हुये कमल-नाल के घने काँटों से हाथ छिलने के कारण उसे नहीं पकड़ सकी ॥ ६५ ॥

**विम्बाधराक्रान्तिवितीर्णवेदनैर्निरुध्यमाना परितो मधुव्रतैः ।**
**त्रासादिव स्रस्तदुकूलमाकुला प्रियं सपत्नीपुरतोपि सस्वजे ॥६६॥**

विम्बाधर पर आक्रमण से कष्ट देने वाले भ्रमरों से चारों ओर घिरी हुई कामिनी ने, जिसका दुकूल गिर गया था, भय से घबरा कर सपत्नी के सामने ही प्रिय का आलिगन कर लिया ॥ ६६ ॥

**कस्याश्चिदम्भःस्नपितं नतभ्रुवः क्षणादसंलक्षितसूक्ष्मकञ्चुकम् ।**
**वक्षोजयुग्मं द्रुतहेमपूर्णयोरुवाह कान्तिं किल काचकुम्भयोः ॥६७॥**

किसी सुभ्रू के स्तन, जिनकी पतली चोली, कुछ समय के लिये, पानी से भींग जाने के कारण दिखाई नहीं दे रही थी, पिघले हुये सोने से भरे हुये काच के घड़ों के समान लगे ॥ ६७ ॥

**दष्टाधरा मुग्धवधूर्मधुव्रतैः प्रियेण साकूतसहासमीक्षिता ।**
**तत्कालयोग्यप्रतिपत्तिकातरा विनष्टबाधेव नतानना स्थिता ॥६८॥**

किसी मुग्धा को, जिसके अधर को भ्रमरों ने काट लिया था, प्रियतम ने हँस कर साभिप्राय देखा, इसलिये उस समय क्या करना चाहिये यह न सोच सकने के कारण, वह नीचा मुख करके इस प्रकार खड़ी हो गई मानों उसे पीड़ा ही न हो रही हो ॥ ६८ ॥

**धारातिपाताच्चकिता कृशोदरी करेण यावत् पिहिताननेक्षणा ।**
**तावत् प्रियः पार्श्वगतां तथापरामसिञ्चदाशुस्मितपूर्वमम्बुभिः ॥६९॥**

प्रियतम द्वारा फेंके गये जल की अधिक धाराओं के गिरने से चकित कृशोदरी ने जैसे ही अपने हाथों से मुँह और आँखें ढक लीं वैसे ही प्रियतम ने पास में खड़ी दूसरी प्रिया को, मुस्कुरा कर, शीघ्र पानी से सींचना शुरू किया ॥ ६९ ॥

**दन्तच्छदं दन्तपदैरयावकं गतानुलेपौ नखरक्षतैः स्तनौ ।**
**रागेण वीताञ्जनमीक्षणद्वयं व्यरोचयद् वारिचयो वरस्त्रियाः ॥७०॥**

जिस प्रकार प्रियतम (चुम्बन के समय) प्रिया के अधर की लाक्षादिजन्य लालिमा को अपने दाँतों से हटा देता है, स्तनों के (चन्दन केसर आदि के) लेप को नखक्षत से दूर कर देता है और नेत्रों के अञ्जन को (चुम्बन, करस्पर्श आदि से) मिटा देता है, उसी प्रकार नदी के जल ने भी श्रेष्ठ कामिनी के अधर की लालिमा को, स्तनों के लेप को और नेत्रों के अञ्जन को मिटा दिया ॥ ७० ॥

**क्षिप्तं पयः प्राणसमेन सागसा विधुन्वती पाणियुगं मनस्विनी ।**
**शीतेतरैर्लोचनवारिनिर्झरैरवापयत् सन्ततधारतां मुहुः ॥७१॥**

अपराधी (सपत्नी में आसक्त) प्रियतम ने मानवती नायिका पर पानी फेंका; मानिनी ने अपने हाथों को हिला कर उसे रोकते हुये भी, अपने गरम आँसुओं के प्रवाह से मानों उस धारा को निरन्तर (बिना रुकी हुई) बना दिया ॥ ७१ ॥

**सीमन्तिनीनामनुलेपनद्रवप्रभूतसौरभ्यभरेण मोहिताः ।**
**निःशेषनिष्कासितपद्मसञ्चयामपि त्यजन्ति स्म नदीं न षट्पदाः ॥७२॥**

ललनाओं के चन्दन आदि लेपों की उत्कट सुगन्धि से मुग्ध हुये भ्रमरों ने, सारे कमल तोड़ लिये जाने पर भी, नदी को नहीं छोड़ा ॥ ७२ ॥

**विस्रस्तमाल्यान् परिमृष्यकुन्तलानपाहरत् प्रावरणं वरोरसः ।**
**नीरागतां चाधरबिम्बमानयत् तथाङ्गरागं स्तनयो विलुप्तवान् ॥७३॥**
**नाभीह्रदोल्लासितवीचिहस्तको विमोहितः श्रोणिभिरानतभ्रुवाम् ।**
**सम्यग्विदग्धोचितकेलिपात्रतां जलाशयोऽपि प्रतिपद्यते स्म सः ॥७४॥**

जडाशय (मूर्ख) होने पर भी उस जलाशय ने कामकला में अत्यन्त विदग्ध (चतुर) नायक के समान आचरण किया—उसने रमणियों के केशपाशों से मालायें हटा कर उन्हें अस्त-व्यस्त बना दिया, उनकी सुन्दर जंघाओं से वस्त्र सरका दिये, अधरों की (लाक्षादिद्रव्य से उत्पन्न) लाली को दूर कर दिया, स्तनों का (चन्दनादि) लेप मिटा दिया और उनकी कमर से मोहित होकर वह अपने लहरों रूपी प्रसन्न हाथों को रमणियों की गहरी नाभियों पर फेरने लगा ॥७३–७४॥

---

(७४) जडाशयोऽपि जलाशयो विदग्धतां प्राप्तवान् ।

**पत्त्रालिलीना मकरी मृगीदृशां स्तनाचलेभ्यः पतिता ह्रदाम्भसि ।**
**रागोपि तावज्जडसङ्गिनोऽङ्गतः प्रसन्नमन्तर्विशति स्म तत्क्षणम् ॥७५॥**

मृगनयनियों के स्तनों पर चित्रित मकरी स्तनरूपी पर्वतों से सरोवर के जल में कूद पड़ी (मगर जल में रहते ही हैं)। (केसर और चन्दन आदि से) स्तनों पर चित्रित मकराकार चिह्न के जल से धुल जाने पर उसका राग (लालिमा) जल के संग के कारण शरीर से हट कर, उसी समय प्रसन्नतापूर्वक अन्तःकरण में प्रवेश कर गया, जिस प्रकार मूर्ख के साथ संभोग (जडसंग) करते समय विदग्ध नायिका का राग शरीर से हट कर अन्तःकरण में चला जाता है अर्थात् नायक के मूर्ख होने के कारण नायिका का शरीर राग (हावभाव) का प्रदर्शन नहीं करता, केवल अन्तः-करण ही अनुरागपूर्ण रहता है ॥ ७५ ॥

**प्रेम्णा प्रियेणाम्बुजमम्बुजेक्षणाकराम्बुजे यत् प्रथमं निवेशितम् ।**
**शङ्के तदेवास निवासभूः श्रियस्तदाश्रये श्रीरधिका यतोऽभवत् ॥७६॥**

पहले पहल कमलनयनी के कर-कमल में प्रियतम ने प्रेम से जो कमल दिया उस कमल में ही मानों लक्ष्मी जी रहती थीं क्योंकि उसको पाकर कमलनयनी की लक्ष्मी (शोभा) अधिक हो गई ॥ ७६ ॥

**कीर्णं क्वचिन्मर्दितपुष्पदामभिः क्वचिच्च किञ्जल्कभरः सरोरुहाम् ।**
**पर्याविलं क्वापि हृतैर्विलेपनैरभूत् तदम्भः सुदृशां विगाहनात् ॥७७॥**

उन कामिनियों के स्नान के कारण जल में कहीं तो मसली हुई फूलमालायें बिखर रही थीं, कहीं कमलों के केसर-समूह पड़े थे और कहीं कहीं वह जल धुले हुये लेपों के कारण मटमैला बन गया था ॥ ७७ ॥

**प्रतिप्रतीपं विनिभालयन्ती द्राग् द्राघयन्ती क्वचिदम्बरान्तम् ।**
**लग्नार्द्रवस्त्रप्रकटोच्चनीचे निलीयमानेव निजे शरीरे ॥७८॥**
**भुजायुगस्वस्तिकया नितान्तं निपीडितोत्तुङ्गतरस्तनान्ता ।**
**काचिद् व्रजन्ती सरितस्तटान्तं कामेऽपि तन्वी तनुते स्म कामम् ॥७९॥**

जलक्रीड़ा के बाद नदी के प्रवाह से तीर की ओर आने वाली कामिनी, कभी प्रत्येक सपत्नी की ओर (तिरस्कार से) देखती थी, कभी हाथ बढ़ा कर साड़ी को खूब फैला लेती थी ताकि शरीर के अंग दिखाई न दें, गीले वस्त्र के शरीर से चिपक जाने के कारण उसके अंगों का उतार-चढ़ाव स्पष्ट प्रतीत हो रहा था और कभी वह झुक कर लज्जावश इस प्रकार चलती थी मानों अपने शरीर में ही छिप जाना चाहती हो, कभी वह अपने स्तनों को छिपाने के लिये (बायें हाथ को दाहिने कंधे पर और दाहिने हाथ को बायें कंधे पर रख कर) अपने दोनों हाथों को स्वस्तिक के आकार का बनाकर उनसे अपने अत्यन्त उच्च स्तनों के अग्रभाग को खूब दबाती हुई चलती थी; वह कामदेव को भी कामविह्वल बना रही थी ॥ ७८—७९ ॥

---

(७८) प्रतिप्रतीपं प्रतीपं प्रतीपं प्रति, एकैकाः सपत्नीः पश्यन्तीत्यर्थः ।
(७९) भुजायुगस्वस्तिकया स्वस्तिकाकारेण बाहुयुगलेन ।

इतिरचितविहारः पार्थिवः प्रेयसीभिः
पयसि ललितलीलापेशलाभिः परीतः ।
करधृतविशदस्रग्गन्धसाराम्बराभिः
परिजनवनिताभिः सेवितं तीरमागात् ॥८०॥

ललित लीला में निपुण प्रेयसियों से घिरे हुये राजा वारिविहार करके नदी के तीर पर चले आये जहाँ परिचारिकायें हाथों में सुन्दर मालायें, चन्दन और वस्त्र लिये खड़ी थीं ॥ ८० ॥

इति सुर्जनचरितमहाकाव्ये पञ्चदशः सर्गः ।

---

# षोडशः सर्गः

**कालेऽथ शुद्धिमति शूरजनः समृद्धान् पत्नीसु तासु तनयान् जनयाञ्चकार ।**
**तेषामभूदधिगुणः किल भोजदेवः प्रासूत पट्टमहिषी कनकावती यम् ॥ १ ॥**

राव सुर्जन ने शुद्ध और शुभ मुहूर्त में अपनी पत्नियों में समृद्ध पुत्र उत्पन्न किये जिनमें पटरानी कनकावती के पुत्र भोजदेव सबसे अधिक गुणवान् थे ॥ १ ॥

**आरुह्य वाजिवरमूर्जितमाजिभूमौ नाराचराजिभिरुपार्जितजैत्रवीर्यः ।**
**जाग्रत्प्रगल्भभुजमण्डनमण्डलाग्रव्यग्रीकृतोग्रतरवैरिनृपालवर्गः ॥ २ ॥**

भोजदेव उन्नत और श्रेष्ठ घोड़े पर चढ़ कर युद्ध भूमि में अपनी वाण परम्परा के द्वारा अपने उत्कृष्ट बल को प्रकट करके विजय प्राप्त करते थे और अपनी जागरूक तथा गंभीर भुजाओं को सुशोभित करने वाली तलवार से भयंकर शत्रु राजाओं के समह को उद्विग्न कर देते थे ॥२॥

**संख्येषु यः प्रतिभटक्षितिपालवक्षोविक्षोभजातरुधिरोद्धुरकर्दमाक्तम् ।**
**कौक्षेयकं खलु विपक्षमृगेक्षणानामक्षालयत् सततमक्षिपयःप्रवाहैः ॥ ३ ॥**

भोजदेव, युद्धों में शत्रु राजाओं के वक्षःस्थल के घावों से बहने वाले रक्तरूपी गहरे कीचड़ में सनी हुई अपनी तलवार को शत्रुओं की मृगनयनियों की आँखों से निरन्तर वहने वाले आँसुओं के प्रवाह से धोते थे ॥ ३ ॥

**मानोन्नतेन मनसा विनयातिभूम्ना स्थाम्ना यशोभिरमलैर्महितेन धाम्ना ।**
**दानेन दैन्यदमनैकधुरन्धरेण प्रज्ञानिधिः प्रतिनिधिर्जनकस्य योऽभूत् ॥ ४ ॥**

स्वाभिमान से उन्नत मन के कारण, अत्यन्त विनयशील धैर्य के कारण, निर्मल यश के कारण, महान् तेज के कारण और दीनता के दमन में अत्यन्त कुशल दान के कारण बुद्धिमान् भोजदेव जनक (अपने पिता राव सुर्जन; राजा जनक) के प्रतिनिधि थे ॥ ४ ॥

**विक्रान्तिनीतिचतुरश्चतुरब्धिकाञ्चीसाम्राज्यसम्भृतिसमुज्वलितप्रतापः ।**
**यश्चक्रिवानकबरः कबरीविमुक्तान् दारानुदारचरितः परभूपतीनाम् ॥ ५ ॥**

चारों समुद्र रूपी मेखला वाली पृथ्वी के सार्वभौम साम्राज्य के कारण समुज्वल प्रताप वाले, उदार चरित, पराक्रम और राजनीति में कुशल (मुगल सम्राट्) अकवर ने शत्रु राजाओं की रानियों को बिखरे बालों वाली बना दिया था ॥ ५ ॥

**अध्यास्य दिल्लिनगरं नगदुर्गसंस्थान् सारूप्यगाननुपमप्रथितोज्वलश्रीः ।**
**भ्रूभङ्गभङ्गुरितवैरिमनोरथो यः स्वेच्छाबलेन बलवानकरोत् करस्थान् ॥६॥**

अनुपम, विख्यात और उज्वल लक्ष्मी वाले तथा भृकुटी के इशारे से शत्रुओं की इच्छाओं को भंग करने वाले बलवान् अकबर ने, दिल्ली नगर में रह कर, अपनी इच्छाशक्ति से, पर्वतीय दुर्गों में रहने वाले अपने समान राजाओं को अपने आधीन करके करद (कर देने वाले) बना दिया था ॥ ६ ॥

---

(२) मण्डलाग्रः खड्गः ।
(४) तिष्ठतीति स्थामा तेन स्थाम्ना स्थिरेणेत्यर्थः ।

**कृत्वा वशे वसुमतीं मतिमान् समग्रां सोऽथ प्रतापविभवैर्विरतान्यकृत्यः ।**
**दुर्गं तदेव विवशं चकमे ग्रहीतुं यत्रास्ति शूरजनभूपतिराजधानी ॥ ७ ॥**

बुद्धिमान् अकवर सारी पृथ्वी को अपने वश में करके अपने प्रताप के वैभव से कृतकार्य हो गये थे, किन्तु वे भी केवल उसी दुर्ग को (रणथंभौर को) जीतने में असमर्थ रहे जहां राजा सुर्जन की राजधानी थी ॥ ७ ॥

**आज्ञापिताः कतिपये यवनप्रवीराः सङ्ग्रामसीम्नि शतशः प्रतिपन्नसाराः ।**
**ये सन्ततं ततबृहत्तरवारिधाराः स्फारां दधत्यधिपतेरधिराज्यलक्ष्मीम् ॥८॥**

(अकबर ने रणथंभौर दुर्ग को जीतने के लिये) कुछ यवन वीरों को आज्ञा दी जो अपनी विस्तृत और तेज तलवारों की धार से युद्धभमि में सैकड़ों वार अपने पराक्रम से विजय प्राप्त कर चुके थे और जो अपने स्वामी अकवर की विस्तृत राज्यलक्ष्मी को धारण करते थे (अर्थात् अकवर के मनसबदार थे) ॥ ८ ॥

**निर्याय ते कतिपयैः सममश्ववारैर्दर्पोद्धतैरकबरस्य वरूथिनीशाः ।**
**दुर्गं द्विपैरनुपमैरुपरुन्धते स्म शैलं यथोल्वणपुरःपवनाः पयोदैः ॥ ९ ॥**

वे अकबर के सेनापति अपने साथ कुछ अभिमानोद्धत घुड़सवार लेकर रवाना हुये और उन्होंने अपने अनुपम हाथियों से (रणथंभौर) दुर्ग को उसी प्रकार घेर लिया जिस प्रकार पूर्व दिशा के प्रबल पवन, बादलों से किसी पर्वत को घेर लेते हैं ॥ ९ ॥

**आयोधनेष्वकृपणोथ कृपाणपाणिर्निर्जित्य सोऽर्जितयशास्तरसा तुरुष्कान् ।**
**आनन्दतूर्यनिनदैर्मुखरीकृताशमायान्निजं नगरमुज्ज्वलितप्रतापः ॥१०॥**

युद्धवीर यशस्वी राव सुर्जन, जिनके हाथ में तलवार सुशोभित रहती थी, उन यवनों को वेग से परास्त करके, आनन्द से बजाई जाने वाली विजय की शहनाइयों की ध्वनि से दिशाओं को गुँजाते हुये और अपने उज्वल प्रताप को फहराते हुये, अपने नगर लौट आये ॥१०॥

**एवं जिगाय जगदेकधुरन्धरोऽसौ धुन्वन् धनुः समरसीमनि पारसीकान् ।**
**वारांस्त्रयोदश ततः स्फुटरोषभूमा हूमायुँजः स्वयमुपाक्रमत प्रयातुम् ॥११॥**

युद्धभूमि में धनुष को टंकार कर विश्व में एक ही वीर-धुरन्धर राव सुर्जन ने यवनों को इस प्रकार तेरह बार परास्त किया। तब हुमायूँ के पुत्र अकबर ने अत्यन्त क्रुद्ध होकर आक्रमण करने के लिये स्वयं प्रस्थान किया ॥ ११ ॥

**श्रुत्वा तमागतमुपेतमुदग्रवीर्यः सैन्यैर्मतङ्गजतुरङ्गरथाधिरूढैः ।**
**दुर्गं च रुद्धमथ योद्धुमनाश्चचाल राजा स पट्टनपुरात् पृतनापरीतः ॥१२॥**

हाथियों, घोड़ों और रथियों की सेना के साथ अकबर को आया हुआ और (रणथंभौर) दुर्ग को उसकी सेना से घिरा हुआ जानकर अत्यन्त बलवान् राजा सुर्जन पट्टनपुर (पाटन) से अपनी सेना के साथ युद्ध के लिये रवाना हुये ॥ १२ ॥

---

(९) उल्वणाः उत्कटाः पुरःपवनाः पूर्वदिक्पवनाः ।

**प्रास्थानिकध्वनिरथोद्धतदुन्दुभीनां भिन्दन्निव प्रतिरवैर्जगदण्डभाण्डम् ।**
**आपूरितत्रिदशभूधररन्ध्रमुच्चैर्दिक्चक्रमाक्रमत तत्क्षणमक्रमेण ।। १३ ।।**

तब जोरों से वजाये जाने वाले नगाड़ों के, युद्ध के लिये प्रस्थान की तैयारी की सूचना देने वाले शब्दों ने, अपनी प्रतिध्वनि से मानों ब्रह्माण्ड कटाह को भेद कर, उस समय क्रम का ध्यान न रख कर, सुमेरु पर्वत की गुफाओं को भर कर, जोरों से दिशाओं के समूह पर आक्रमण कर दिया ।। १३ ।।

**व्यग्रात्मनां निजनिजोचितसंविधानैस्तत्तत्क्रियासु विनियोजयतां जनौघान् ।**
**उच्चैः स्वरैस्त्वरयताञ्च पुनः पुनस्तान् कोलाहलः पुनरभूदपरो नराणाम् ।१४।**

जनसमूह को अपने योग्य साधनों द्वारा अपने अपने कार्यों में नियुक्त करने वाले और ऊँचे स्वर में बारवार उनको जल्दी करने की आज्ञा देने वाले व्यस्त अधिकारी-वर्ग का कोलाहल भी सुनाई दे रहा था ।। १४ ।।

**जेतुं पतङ्गतुरगानिव पादयुग्ममुच्चैः क्षिपन्तमसकृद् विधृतं प्रयत्नात् ।**
**उच्चैर्जवेन विजितं विनतातनूजं हेषारवैरिव हसन्तमुदीर्णदन्तम् ।।१५।।**
**पर्याणपीडनपुरस्कृतपीठदेशं कण्ठक्वणत्कनककिङ्किणिकाकलापम् ।**
**वल्गागुणग्रहिलपाणिरुपानिनाय तूर्णं तुरङ्गमधिकारिजनः पुरस्तात् ।।१६।।**

सूर्य के घोड़ों को जीतने के लिये मानों अपनी टापें बार बार जोरों से फटकारने वाले, प्रयत्न-पूर्वक रोके जाने वाले, अपने वेग से जीते गये गरुड़ की मानों दाँत निकाल कर हिनहिनाने के बहाने हँसी उड़ानेवाले, कसी हुई काठी से सुसज्जित पीठ वाले और कण्ठ में वजने वाले सोने के घुँघरुओं की माला से सुशोभित घोड़े को लगाम पकड़ कर साईस शीघ्रता से आगे लाया ।। १५-१६ ।।

**राकानिशाकरकरोत्करकोमलेन कीर्णेन चामरचयेन विरोचमानम् ।**
**स्वर्गापगारुचिरवीचिवितानकेन चित्रं प्रवाहमिव भानुमतः सुतायाः ।।१७।।**
**घण्टाभिराहितरुचं दधतीभिरुच्चैर्नादान् द्विषत्क्षितिभृतामभिचारमन्त्रान् ।**
**माणिक्यमुद्रितसुवर्णमयं किरीटं बिभ्राणमद्रिमुदयं महसामिवेशम् ।।१८।।**
**अव्याहतस्रुतमदद्रवगन्धलोलैर्झङ्कारिभिर्मधुकरैः श्रवणान्तिकस्थैः ।**
**उद्गीयमानमिव दानयशः स्वकीयं शृण्वन्तमर्धमुकुलीकृतलोचनान्तम् ।।१९।।**
**सिन्दूरबिन्दुचयचित्रितपूर्वभागं नागं महीधरमिवोदितधातुरागम् ।**
**आस्तीर्णकम्बलकुथं धृतकेतुमालमाधोरणः प्रमुखमीशितुरानिनाय ।।२०।।**

फिर महावत प्रमुख हाथी को राजा के आगे लाया—वह हाथी पूर्णिमा के चन्द्रमा के किरण-समूह के समान कोमल और विस्तृत चँवरों से सुशोभित होने के कारण गंगा की सुन्दर लहरों की भँवरों से शोभित यमुना के प्रवाह के समान लग रहा था, उसके दोनों ओर लटकने वाले घंटे उसकी शोभा बढ़ा रहे थे और उनके जोर से बजने के कारण जो शब्द निकल रहे थे वे ऐसे लग रहे थ मानों शत्रुराजाओं को नष्ट कर देने वाले अभिचार मंत्र हों, माणिक जड़े हुये सोने के

---

(१८) उदयं बिभ्राणं महसामीशं सूर्यं बिभ्राणमद्रिमिव किरीटं बिभ्राणं गजमित्यर्थः ।

किरीट को धारण करने के कारण वह नवोदित सूर्य को धारण करने वाले उदयाचल पर्वत के समान सुशोभित हो रहा था, निरन्तर बहनेवाले मदजल की गन्ध से आकृष्ट चंचल भ्रमर उसके कानों के पास गूँज रहे थे और वह इस प्रकार शोभित हो रहा था मानों उन भ्रमरों द्वारा गाये जा रहे अपने दानयश (मदजल को भी दान कहते हैं) को आधी आंखें मूंद कर मस्ती से सुन रहा हो, उसका अगला भाग सिन्दूर बिन्दुओं के समूह से चित्रित होने के कारण वह गेरू से शोभित पर्वत के समान लग रहा था, उस पर कम्बल की झूल बिछ रही थी और वह ध्वजदंड से शोभित था ॥ १७—२० ॥

**आधोरणप्रहितपाणिमनुग्रहेण स्पृष्ट्वातिकौशलवशादनमन्तमेव ।**
**तं बृंहितेन मधुरेण कृतानुमोदं दन्तावलेन्द्रमवनीपतिरारुरोह ॥२१॥**

अत्यन्त निपुण होने के कारण राव सुर्जन, हाथी को बिना झुकाये ही, महावत द्वारा प्रसारित हाथ को अनुग्रहपूर्वक छू कर, मधुर चिंघाड़ से अपने ऊपर राजा के बैठने का अनुमोदन करने वाले उस हाथी पर आरूढ़ हुये ॥ २१ ॥

**आदर्शबिम्बमदसीयविशालकीर्तेः क्रीडातिभूमिभवनं किल राजलक्ष्म्याः ।**
**तस्योपरि स्थिरमराजत दुग्धसिन्धोरावर्तवद् विततवर्तुलमातपत्रम् ॥२२॥**

राजा के ऊपर लगा हुआ विस्तृत, गोल और श्वेत छत्र ऐसा सुशोभित हो रहा था मानों राजा की विशाल कीर्ति का शुभ्र दर्पण हो या राजलक्ष्मी का क्रीड़ाभवन हो या क्षीरसागर की स्थिर भँवर हो ॥ २२ ॥

**तत्कर्मणि प्रणिहिताः प्रभुणा नियुक्तास्तत्कार्मुकं क्रमविदः करमस्य निन्युः ।**
**यत् सङ्गरेषु ददृशुर्गतजीवनाशाः कीनाशकासरविषाणसमं द्विषन्तः ॥२३॥**

(शस्त्र देने के) कार्य में स्थापित, स्वामी द्वारा नियुक्त, क्रम को जानने वाले भृत्यों ने राजा के हाथ में वह धनुष अर्पित किया जिसे शत्रु-गण युद्ध में अपने जीवन की आशा छोड़ कर, यमराज के भैंसे के सींग के समान देखते थे ॥ २३ ॥

**यत्रार्जवेन न भवेद् गुणवत्वलाभस्तत्र क्वचित् कुटिलतां कतिचिद् भजन्ते ।**
**बाणासनं यदवनीशकरे तदानीं संवर्तते स्म कुटिलं गुणयोगहेतोः ॥२४॥**

जहाँ सीधेपन से गुणलाभ न हो सके वहाँ कोई-कोई कुटिलता से भी लाभ लेते हैं, इसलिये राजा के हाथ में गुणलाभ करने के लिये (प्रत्यञ्चा से युक्त होने के लिये) धनुष कुटिल बन रहा था ॥२४॥

**पाणौ पुरैव शुभदेऽहनि या गृहीता कोशान्तरे विनिहिता हितकारिणी या ।**
**स्नेहं विना न खलु गच्छति या प्रसादं साऽस्य प्रियाऽसिलतिका सविधे सदैव २५**

पहले ही शुभ मुहुर्त में जिसे हाथ में पकड़ा था (जिसका पाणिग्रहण किया था), जिसे कोश (म्यान) के अन्दर रक्खा था (जिसको कोश अर्थात् खजाना सौंप दिया था), जो सदा हित करने वाली है और जो स्नेह (तेल) के बिना नहीं चमकती (जो प्रेम के बिना प्रसन्न नहीं होती) वह, प्रिया के समान प्रिय तलवार, सदा राव सुर्जन के पास रहती है ॥ २५ ॥

---

(२३) कीनाशकासरविषाणसमं यमराजमहिषशृङ्गतुल्यम्

**आक्रीडनं वयसि याऽसिलताऽतिपूर्वे या यौवने पुरुषकारविकाशहेतुः ।**
**या वार्धके खलु भवत्यवलम्बनाय स्वप्नेऽपि तां न खलु मुञ्चति चाहुवाणः॥२६।**

जो तलवार बचपन में खिलौने की तरह है, जो यौवन में पौरुष के विकास का कारण है और जो वृद्धावस्था में सहारे का काम देती है (प्रिया के समान प्रिय) उस तलवार को चौहाण स्वप्न में भी नहीं छोड़ता ॥ २६ ॥

**तं वारणस्थितमवारितसन्निधानाः सेवावकाशकलनेष्वथ सावधानाः ।**
**जग्मुः प्रणन्तुमनसो युगपत् क्षितीशा वाहैः परस्परविमर्दनयन्त्रिताङ्गैः ॥२७॥**

जिनको राजा के समीप जाने में कोई रुकावट नहीं थी और जो सेवाकार्य में सावधान थे वे विनीत मन वाले राजा लोग हाथी पर स्थित राव सुर्जन के साथ साथ उन घोड़ों पर चढ़ कर चले जिनके अंग, समीप समीप चलने के कारण, परस्पर रगड़ खा रहे थे ॥२७॥

**प्रत्येकनामपरिकीर्तनपूर्वमुच्चैरावेदितोऽन्तिकचरेण नरेन्द्रसिंहः ।**
**नम्रोत्तमाङ्गमुचितप्रतिपत्तिभिस्तं राज्ञां समूहमनुरञ्जयति स्म विज्ञः ॥२८॥**

समीपस्थ अनुचर ने राव सुर्जन को प्रत्येक राजा का उच्च स्वर में नाम ले लेकर आवेदन किया और महाराज ने, नतमस्तक होकर प्रणाम करने वाले उस राजसमूह के नमस्कारों का उचित उत्तर देकर, उसे प्रसन्न किया ॥ २८ ॥

**माद्यन्मतङ्गजतुरङ्गपदातिकानां दर्पोद्धतद्रुतगतैर्ध्वनयद् धरित्रीम् ।**
**निर्मथ्यमानमकरालयभीमघोषं भूपालपालितबलं युगपच्चचाल ॥२९॥**

मदोत्कट हाथियों, घोड़ों और पैदल सैनिकों की दर्पोद्धत और तेज चाल से पृथ्वी को हिलाती हुई और मथित समुद्र के समान भयंकर घोष करती हुई वह राजसेना एक साथ चली ॥ २९ ॥

**तत्सैन्यनिर्भरभराद् भुजगाधिनाथे त्रासान्मुमुक्षति महीमुदितप्रकम्पे ।**
**कूर्मः कटाहकुहरान्मुखमुन्नमय्य ब्रह्माण्डभङ्गचकितः परितो ददर्श ॥३०॥**

उस सेना के भारी भार के कारण कम्पित होकर शेषनाग ने पृथ्वी को छोड़ देने की इच्छा की तो कच्छप भगवान् अपनी ढाल में से मुँह बाहर निकाल कर ब्रह्माण्ड भंग से चकित हुये चारों ओर देखने लगे ॥ ३० ॥

**मन्दोल्लसत्पवनसङ्गतरङ्गितान्ता व्योमस्पृशो रुरुचिरे रुचिराः पताकाः ।**
**तद्वैरिणां कवलनाय कृतोद्यमस्य कालस्य लोलरसना इव दिक्षु कीर्णाः ॥३१॥**

मन्द मन्द चलने वाले वायु से हिलती हुई आकाश को छूने वाली सुन्दर पताकायें इस प्रकार शोभित हो रहीं थीं मानों राजा के शत्रुओं को खाने के लिये उद्यमशील काल की दिशाओं में फैलाई हुई चंचल जीभें हों ॥ ३१ ॥

**मुक्ताः कुतूहलवशात् क्षणमश्ववारैर्वाहाः स्म भान्ति विशिखा इव सञ्चरन्तः।**
**येषां यतां रयवशाद् घनवर्त्मनीव स्पर्शो भुवः खुरपदैरनुमीयते स्म ॥३२॥**

कुतूहलवश थोड़ी देर के लिये सवारों से ढीले छोड़ दिये जाने पर घोड़े तीर की तरह छूट पड़े; वेग से दौड़ने के कारण ऐसा लगता था मानों वे आकाश में ही उड़ रहे हों, केवल उनके खुरों के चिह्नों से यह अनुमान लगाया जाता था कि वे भूमि का स्पर्श भी करते थे ॥ ३२ ॥

**शिक्षाविशेषवशतस्तुरगाधिरूढैरापादिताः सपदि मण्डलिकां तुरङ्गाः ।**
**जाम्बूनदाभरणकर्बुरितास्तदानीमालातचक्रधिषणां दधिरे न कस्य ॥३३॥**

शिक्षा विशेष के कारण सवारों ने घोड़ों को गोल घेरे में दौड़ाया; उस समय सोने के आभूषणों से सज्जित घोड़े जलती हुई और चारों ओर घुमाई जाने वाली मशाल के घेरे की बुद्धि उत्पन्न कर रहे थे॥ ३३ ॥

**यानक्रमादतिनिरन्तरतामुपेतौ द्वौ सादिनौ प्रणयसङ्कथनेन यान्तौ ।**
**घ्रात्वा परस्परमुखं क्षणतो हयाभ्यां साक्षेपनादमथ दूरमनायिषाताम् ॥३४॥**

साथ साथ चलने के कारण अत्यन्त समीप आये हुये दो सवार परस्पर प्रेमालाप करते हुये जा रहे थे, किन्तु उनके घोड़ों ने शीघ्र एक दूसरे का मुँह सूंघ कर आक्षेप के साथ हिनहिना कर उन्हें दूर कर दिया॥ ३४ ॥

**दैवादुपेत्य बडवाधिरुहं तुरङ्गी कश्चित् पथि प्रतिहतप्रसरावकाशे ।**
**यत्नं विनापि तमनुव्रजतो निजस्य वाहस्य-नोदनविधौ न जगाम खेदम् ॥**

घोड़े पर चढ़ा हुआ एक सवार मार्ग में जाने का अवकाश न पाकर सौभाग्य से एक घोड़ी पर चढ़े हुये सवार के पीछे हो लिया; उसका घोड़ा (उस घोड़ी के) पीछे पीछे बिना यत्न ही चल रहा था और सवार को उसे चलाने का कोई कष्ट नहीं उठाना पड़ा॥ ३५ ॥

**अग्रे तुरङ्गमरयाद् द्रुत एक एव छायातरोः क्वचिदधः क्षपितश्रमार्तिः ।**
**आयास्यतो निजगणस्य मुहुर्मुहूर्तं पन्थानमुत्सुकमनाः समुदीक्षते स्म ॥३६॥**

कोई सवार अपने घोड़े को वेग से दौड़ा कर आगे निकल गया और किसी सघन छाया वाले वृक्ष के नीचे बैठ कर अपने श्रम को दूर करता हुआ अपने आने वाले साथियों के मार्ग की उत्सुकता-पूर्वक बार बार प्रतीक्षा करने लगा॥ ३६ ॥

**केचित्सलीलमुपवीतितसज्यचापाः पादावसक्तधृतशक्तिसरागदण्डाः ।**
**स्कन्धावसक्ततरवारिलतावरत्रा जग्मुस्तरङ्गिततुरङ्गममश्ववाराः ॥३७॥**

कोई कोई सवार लीलावश ज्यासहित धनुषों को यज्ञोपवीत की तरह पहिन कर, पैरों के पास (रकाब में) बरछी और लाल डंडे सटा कर तथा कंधों पर तलवार और चाबुक रख कर, घोड़ों को चलाते हुये जा रहे थे॥ ३७ ॥

**आधोरणैरधिगुणैस्त्वरयद्भिरुच्चैर्नुन्ना अपि प्रतिपदं मदवारणेन्द्राः ।**
**लीलाविशेषविनिवेशितपादमेव सञ्चेरुरध्वनि निकुञ्चितलोचनान्ताः ॥३८॥**

गुणवान् महावतों द्वारा बार बार जल्दी चलने के लिये प्रेरित किये जाने पर भी मदोत्कट हाथी, आँखें मूंदते हुये और अदा के साथ धीरे धीरे पाँव रखते हुये ही मार्ग में चले॥ ३८ ॥

---

(३७) उपवीतितानि यज्ञोपवीतानीव धृतानि ज्यासहितचापानि यैस्ते।

**श्यामद्युतः पिदधतो हरितां मुखानि विष्वग्विसारिमदवारिझरं क्षरन्तः ।**
**वातेरिता इव नवीनघनाः सनादमीयुर्महीधरनिभा महिता महेभाः ॥३९॥**

काली कान्ति वाले, दिशाओं के मुखों को ढाँकने वाले, चारों ओर विस्तृत मदजल की झड़ी लगाने वाले, पर्वतों के समान वड़े वड़े हाथी, वायु से प्रेरित नये मेघों के समान, गरजते हुये चले ॥ ३९ ॥

**उत्तंसितोज्वलविचित्रपतत्रिपत्रा गाढोपगूहितकटीधृतकिंकिणीकाः ।**
**आस्फालितप्रहरणाः प्रथितस्वदर्पा जग्मुः समुद्धतगतेन पदातिमुख्याः ॥४०॥**

(मयूर आदि) पक्षियों के उज्वल और रंग बिरंगे पंखों को सिर पर लगाकर, घुँघरुओं की माला को कमर में अच्छी तरह बाँध कर, अपने अभिमान को प्रकट करने वाले पैदल सैनिक शस्त्रों पर हाथ फेरते हुये उद्धत चाल से चल रहे थे ॥ ४० ॥

**वल्गान्तविस्फुरितशोणितसङ्गिफेनैरश्वैः श्वसद्भिरुपकूलमथापगायाः ।**
**भालेषु रेणुभरकर्दमितां वहन्तः स्वेदोदबिन्दुलहरीं ययुरश्ववाराः ॥४१॥**

लगाम के कोने की रगड़ से निकले हुये खून के कारण लाल फेन वाले हाँफते हुये घोड़ों पर बैठे हुये सवार अपने ललाटों पर पसीने की लहरों को, जो (टापों से उड़ी हुई) धूल के कारण कहीं कहीं कीचड़ की तरह बन गई थी, धारण करते हुये, नदी के किनारे किनारे जा रहे थे (नदी की भाँति सवार भी फेन, कीचड़ और लहरों से युक्त थे) ॥ ४१ ॥

**उच्चैस्तया गतमिवान्तिकमुष्णरश्मेः पादैर्नितान्तपरुषैः परितापिताङ्गम् ।**
**नैसर्गिकीं गतिमपास्य मृदुं जवेन रोधो रुरोध करियूथमथापगायाः ॥४२॥**

ऊँचाई के कारण सूर्य को छूने वाले और सूर्य की अत्यन्त कड़ी किरणों से संतप्त अंगों वाले हाथियों के समूह ने, अपनी स्वाभाविक धीमी चाल छोड़ कर, वेग से नदी का तट घेर लिया ॥४२॥

**पारं प्रयातुमनसं सवरूथिनीकमालोक्य तत्र सरितो मनुजाधिनाथम् ।**
**आनायिभिर्द्रुतमनायिषत प्रकामं स्फारास्ततस्तरणयः स्थिरकर्णधाराः ॥४३॥**

राजा को सेनासहित नदी के पार जाने का इच्छुक देख कर मल्लाह शीघ्र बड़ी बड़ी विस्तृत नौकायें ले आये जिनमें केवट बैठे हुये थे ॥ ४३ ॥

**नीतोऽपि पारगमनाय गुरुप्रयत्नात् तीरस्थ एव परिपीतपयाः प्रमत्तः ।**
**नाशु व्यगाहत करी गहनं ह्रदाम्भस्तप्तोऽपि तप्तकिरणस्य करैः कठोरैः ॥४४॥**

एक प्रमत्त हाथी खूब जल पीकर तीर पर ही खड़ा रहा ; यद्यपि महावत बड़े प्रयत्न से उसे चलने के लिये प्रेरित कर रहा था और वह स्वयं भी सूर्य की प्रचण्ड किरणों से सन्तप्त हो रहा था, तो भी वह नदी के गहरे जल में शीघ्रता से नहीं घुसा ॥ ४४ ॥

**आधोरणान् मदवशादवधीरयन्तः स्तब्धाः क्षणं तटमधि द्विरदा मदान्धाः ।**
**उत्तेरुरुत्तरलिताः परतीरगर्जन्मत्ताऽपरद्विरददुःसहदानगन्धैः ॥४५॥**

उत्कट मद के कारण महावतों की अवज्ञा करके मदान्ध हाथी स्तब्ध होकर कुछ देर तक तट पर ही खड़े रहे, किन्तु सामने के तट पर चिंघाड़ते हुये मत्त शत्रु-हाथियों के मदजल की दुःसह गन्ध को सूँघने के कारण उत्तेजित होकर नदी के पार चले गये ॥ ४५ ॥

**ऊर्ध्वप्रसारितविशालतराग्रशुण्डादण्डावधारितनितान्तनिमग्नदेहाः ।**
**विस्तारि वारि समतारिषुराशु केचिन् नागा निषादिनियमाननुकूलयन्तः ।४६।**

नदी में ऊपर उठाई हुई बड़ी बड़ी सूँड़ों के अगले भाग के दिखाई देने के कारण ही यह पता चलता था कि हाथी तैर रहे हैं, अन्यथा उनके सारे शरीर जल में डूबे हुये थे; इस प्रकार तैरते हुये कुछ हाथी, महावतों के नियमों के अनुकूल आचरण करते हुये, नदी के विस्तीर्ण जल को तैर कर शीघ्र पार चले गये ॥ ४६ ॥

**सर्वैरुपायरचनैरनलम्भविष्णुर्व्यालं द्विपं वशयितुं कुशलो निषादी ।**
**अग्रेऽवतार्य करिणीं तदनुप्रयाणे बद्धत्वरं द्रुतमतारयदातुरं तम् ॥४७॥**

जब कुशल महावत अपने सारे उपायों से भी उन्मत्त हाथी को वश में नहीं कर सका तो हथिनी को जल में आगे उतार कर हथिनी के पीछे जल्दी जल्दी चलने के लिये व्याकुल हाथी को भी शीघ्र तैरा कर पार ले गया ॥ ४७ ॥

**अर्द्धं गतोऽपि सरितः परतीरलिप्सुः श्रुत्वा प्रतिद्विरददुर्मदबृंहितानि ।**
**न्यस्तं विहस्ततरहस्तिपकेन हस्ती द्रागङ्कुशं विफलयन् विनिवर्तते स्म ॥४८॥**

सामने के तट पर जाने की इच्छा रखने वाला और नदी के बीचों बीच तक गया हुआ कोई हाथी, शत्रुहाथियों की मस्त चिंघाड़ों को सुनकर, अत्यन्त व्याकुल महावत द्वारा दिये गये अंकुश के प्रहारों को व्यर्थ करता हुआ, शीघ्र वापस लौट गया ॥ ४८ ॥

**तोयोपरिभ्रमदलिव्रजवीज्यमाना दानोदबिन्दुचयचन्द्रकितप्रवाहा ।**
**तीर्त्वा चिरङ्गतवतोऽपि मतङ्गजेन्द्रान् मध्येतरङ्गिणि परं सरणिःशशंस॥४९॥**

हाथियों के तैर कर सामने के तट पर चले जाने पर भी, नदी के बीच में, मद जल की बूँदों के समूह से चिकना और जल के ऊपर मँडराने वाले भ्रमर-समूह से युक्त प्रवाह यह सूचित कर रहा था कि हाथी इस मार्ग से तैर कर गये हैं ॥ ४९ ॥

**पादैः परं पटुतरैः सलिलं स्पृशन्तं कञ्चिन्मरालतरलप्लवनं तुरङ्गम् ।**
**आरुह्य गाधमिव तावदपेतबाधं दक्षः क्षणादुदतरत् तरलप्रवाहम् ॥५०॥**

कोई कुशल सवार, निपुणतर पाँवों से पानी के प्रवाह को काटते हुये और हंस के समान तैरते हुये घोड़े पर चढ़ कर नदी के तरल प्रवाह को निर्बाध होकर छिछले जल के समान शीघ्र पार कर गया ॥ ५० ॥

**साङ्केतिकैरथ पदैरनुवेलमारात् पारावतारिपुरुषैरुपहूयमानाः ।**
**प्रोथोच्छलत्पृथुलशब्दमलोलकर्णास्तेरुस्तरङ्गतरलां तटिनीं तुरङ्गाः ॥५१॥**

नदी के पार गये हुये पुरुषों द्वारा सांकेतिक शब्दों से शीघ्रतापूर्वक बुलाये जाने वाले घोड़े, अपने थूँथनों से जल को उछाल कर जोरों का शब्द करते हुये और अपने कान खड़े करते हुये, लहरों से चञ्चल नदी को तैर गये ॥ ५१ ॥

---

(४८) विहस्ततरेणातिव्याकुलेन हस्तिपकेनाधोरणेन ।
(४९) सरणिः पद्धतिः ।

**संसारवेणिमिवशुद्धगुरूपदिष्टविद्याभिरुद्यमविशेषभृतो विविक्ताः ।**
**उत्तेरुरातरमतित्वरयाऽतिरिक्तं केचिद् वितीर्य तरिभिः सरितं सुखेन ।।५२।।**

जिस प्रकार विवेकी पुरुष, विशेष उद्यम करके, सद्‌गुरु से उपदिष्ट शुद्ध विद्याओं द्वारा इस संसारप्रवाह को सुखपूर्वक पार कर जाते हैं, उसी प्रकार कुछ लोगों ने, जल्दी के कारण अधिक खेवाई देकर, नावों द्वारा उस नदी को सुखपूर्वक पार कर लिया ।। ५२ ।।

**आवेष्टच मौलिवसनेन धनुः सतूणं सव्येतरेण च करेण शिरोऽवलम्ब्य ।**
**एकेन कश्चन करालतरङ्गमालां दोष्णा नुदन्नतिबलस्तरति स्म दूरम् ।।५३।।**

तरकस के साथ धनुष को अपनी पगड़ी से पीठ पर बाँध कर और दाहिने हाथ से सिर को सहारा देकर, एक वीर सैनिक केवल वायें हाथ से ही भीषण लहरों वाली नदी को दूर तक तैर गया ।। ५३ ।।

**निर्माय कश्चिदुडुपं दृढबन्धनाढ्यमारोप्य तत्र दयितां दरकम्पिताङ्गीम् ।**
**व्यावृत्य कातरमुखं मुहुरेतदीयं पश्यन् गुणार्पितकरः शनकैस्ततार ।।५४।।**

कोई दृढ़ बन्धन से युक्त छोटी सी नाव बना कर और उस पर भय से कम्पित शरीर वाली प्रिया को बैठा कर तथा रस्सी पकड़ कर, प्रिया के कातर मुख को बार बार देखता हुआ, धीरे धीरे पार चला गया ।। ५४ ।।

**तीर्त्वेत्थं तटिनीं तरङ्गनिवहैरभ्रंलिहैराकुला–**
**मन्वीतो मनुजाधिपः पृतनया प्रीतिप्रफुल्लाननः ।**
**उद्दण्डाऽहितचण्डडिण्डिमरवैरुज्जृम्भमाणत्वरः**
**सम्प्राप्तः पृथुपौरुषः पुरमसौ पौरान् समुल्लासयन् ।।५५।।**

प्रेम से प्रसन्न मुख वाले और सेना से घिरे हुये राजा सुर्जन ने इस प्रकार मेघों को छूने वाली बड़ी-बड़ी लहरों से व्याकुल नदी को पार किया और उद्धत शत्रुओं के प्रचण्ड वाद्यों के शब्दों को सुन कर जल्दी चलने वाले महान् पराक्रमी राजा, नागरिकों को प्रसन्न करते हुये, अपने (रणथंभौर) नगर में पहुँच गये ।। ५५ ।।

।। इति सुर्जनचरितमहाकाव्ये षोडशः सर्गः ।।

---

(५२) आतरस्तरपण्यम् ।

# सप्तदशः सर्गः

**अथापरेद्युः परदर्पहन्ता सन्नह्य सैन्यैरविषण्णचेताः ।**
**युद्धाय बद्धातिशयप्रयत्नः सपत्नसेनाभिमुखं प्रतस्थे ॥ १ ॥**

फिर दूसरे दिन, शत्रुओं के अभिमान को चूर करने वाले राव सुर्जन कवच इत्यादि से सुसज्जित होकर, सेना को साथ लेकर, अव्यग्र मन से, युद्ध के लिये अधिक प्रयत्नशील होकर, शत्रुसेना के सम्मुख चले ॥ १ ॥

**तस्य प्रयातुः पटहप्रणादाश्चमूचरोद्धूनितधूलयश्च ।**
**समं पुरोऽवस्थितशात्रवाणां श्रोत्राणि नेत्राणि च रुन्धते स्म ॥ २ ॥**

उनके प्रयाण के समय बजने वाले नगाड़ों के शब्दों ने और उनकी सेना से उड़ने वाली धूल ने सामने स्थित शत्रुओं के कानों और आँखों को एक साथ आक्रान्त किया ॥ २ ॥

**दिशोभिमानं किमु किन्नु तासां पर्यन्तमव्याहतमश्नुवानम् ।**
**विलङ्घ्य किं ताः स्थितमस्तपारं विलोकयामास बलं स शत्रोः ॥ ३ ॥**

उस शत्रुसेना को, जो चारों ओर अव्याहत प्रतीत होने वाले दिशाओं के अभिमान के समान लग रही थी अथवा जो दिशाओं को भी पार करके अपार बन रही थी, राव सुर्जन ने देखा ॥ ३ ॥

**कुलाद्रिकल्पैः करियूथनाथैरभ्रङ्कषैरभ्रसमानभाभिः ।**
**तमोनुदां दीप्तिभिरप्यभेद्यैर्जगत्त्रयीं रुन्धदिवान्धकारैः ॥ ४ ॥**

वह शत्रुसेना, मेघों को छूने वाले, मेघों के समान काले और कुलाचल पर्वतों के समान लगने वाले श्रेष्ठ हाथियों के कारण तीनों लोकों को मानों सूर्य के प्रकाश द्वारा भी अभेद्य अन्धकार से व्याप्त कर रही थी ॥ ४ ॥

**तुरङ्गमैश्चित्रपदं चलद्भिस्तरङ्गभङ्गीमभितो दधानैः ।**
**विकासिफेनस्तबकैरसीमैर्विडम्बयद्वारिनिधिप्रवाहम् ॥ ५ ॥**

सुन्दर चाल से चलने वाले और चारों ओर लहरों के समान लहराने वाले तथा असीम उज्वल फेनों से युक्त घोड़ों के कारण वह शत्रुसेना (ज्वार के समय सुन्दर चाल से बढ़ने वाले तथा लहरों और फेनों से युक्त) समुद्र के प्रवाह का तिरस्कार कर रही थी ॥ ५ ॥

**प्रालेयपिण्डप्रतिमप्रकाशैः परिस्फुरद्भिर्वितताातपत्रैः ।**
**कुर्वाणमर्वाङ्मिहिकामयूखसमूहसम्भिन्नमिवान्तरिक्षम् ॥ ६ ॥**

बर्फ के गोले के समान शीतल प्रकाश वाले और चारों ओर चमकने वाले विस्तृत श्वेत छत्रों के कारण वह सेना चन्द्रकिरणों के समूह से व्याप्त आकाश को भी फीका बना रही थी ॥ ६ ॥

**रजःप्रताने जलदोपमाने क्षणद्युतीनां द्युतिमादधानाः ।**
**समीरणासङ्गतरङ्गिताङ्गीर्दधद्विचित्रोज्वलवैजयन्तीः ॥ ७ ॥**

मेघों के समान लगने वाले धूल के बादलों में शत्रुसेना की, वायु के कारण चञ्चल, विचित्र और उज्वल पताकायें बिजलियों की तरह चमक रही थीं ॥ ७ ॥

घण्टानिनादैरुपबृंहितेन दिग्वारणश्रोत्रविदारणेन ।
आधोरणस्फालनदीपितानां मदद्विपानां घनबृंहितेन ॥ ८ ॥
घोणारवैर्घुर्घुरिकानिनादैस्तुरङ्गमाणां गुरुहेषितेन ।
बाहू समास्फोटयतां भटानामत्युद्भटैरारभटीनिनादैः ॥ ९ ॥
आग्नेययन्त्रैः पततामजस्रमुदर्चिषामायसगोलकानाम् ।
निर्घातपातप्रतिमैश्च घोषैर्नादैकरूपं जगदादधानम् ॥१०॥

दिग्गजों के कानों को फाड़ने वाली तथा घंटों के शब्दों से बढ़ी हुई, महावतों के चलाने से उत्तेजित मदोत्कट हाथियों की भयंकर चिंघाड़ों से, नाक से 'घुर्घुर' शब्द करने वाले घोड़ों के जोरों से हिनहिनाने से, भुजाओं को फटकार कर ताल ठोकने वाले प्रबल वीरों के उद्धत शब्दों से और तोपों से लगातार निकलने वाले जलते हुये लोहे के गोलों के जोरों से गिरने से वह शत्रुसेना जगत् को नादमय बना रही थी (जगत् नादब्रह्म से निकला है) ॥ ८–१०॥

ततः शरौघाः परवीरचक्रान् निश्चक्रमुः सस्वनमक्रमेण ।
धारा इवाम्भोधरविप्रकीर्णा वातेन तिर्यग्गतिमश्नुवानाः ॥११॥

इसके बाद शत्रुवीरों के समुदाय से, विना क्रम के, जोरों के शब्दों के साथ बाणवृष्टि होने लगी जो बादलों से बरसने वाली और वायुवेग के कारण टेढ़ी बनी हुई धारावृष्टि के समान लग रही थी ॥ ११ ॥

चमूरमुष्यापि समृद्धशक्तेः समं समाक्रान्तवती विपक्षान् ।
अजिह्मगैर्जिह्मगतुल्यरूपैस्तेषां पृषत्काऽऽलिमपार्थयद्भिः ॥१२॥

समृद्धशक्ति वाले राव सुर्जन की सेना ने भी उसी समय शत्रुओं पर आक्रमण किया और सर्पों के समान लगने वाले बाणों से शत्रुओं के बाणसमूह को बेकार कर दिया ॥ १२ ॥

स्वसम्मुखं सञ्चरतोस्तदानीमनीकयोः सङ्गररङ्गभाजोः ।
तयोः क्षणादैक्यमभूद् यथाम्भःप्रवाहयोः प्रावृषि तीव्रवेगात् ॥१३॥

युद्धभूमि में एक दूसरे के सामने लड़ने वाली उन दोनों सेनाओं का कुछ देर के लिये ऐक्य हो गया जैसे वर्षा ऋतु में दो तरफ से बहने वाले जलप्रवाहों का मेल हो जाता है ॥१३॥

नभःस्थितं तावदरुद्ध युद्धे रजोन्धकारोऽरुणमग्रतो यः ।
भूमिं स्थितस्तं भटशोणितोत्थः परो न्यरौत्सीदरुणः प्रवाहः ॥१४॥

उस युद्ध में धूल के अन्धकार ने ऊपर उड़ कर आकाश में स्थित सूर्य को घेर लिया; तब वीरों के भूमिस्थ रुधिर प्रवाह ने उस धूल के अन्धकार को घेर लिया। (सेना से उड़ी हुई धूल ने आकाश में जाकर सूर्य को ढाँक दिया और युद्धभूमि में बहने वाले वीरों के रक्तप्रवाह ने उस धूल को नीचे बिठा दिया) ॥१४॥

---

(१२) अजिह्मगाः बाणाः जिह्मगाः सर्पाः ।

**रजस्तमोरुद्धतरावकाशे जगत्यनासाद्य पदं कुतश्चित् ।**
**विवेश सत्वं सुतरां भटानां स्वतन्त्रमन्तःकरणं तदानीम् ॥१५॥**

उस समय जगत् रजस् (धूल) के तमस् (अन्धकार) से घिर रहा था, अतः सत्व (सत्व गुण; बल) रजस्तमोमय (रजोगुण और तमोगुण से आक्रान्त; धूल के अन्धकार से युक्त) संसार में कहीं स्थान न पाकर, वीरों के स्वतन्त्र अन्तःकरणों में प्रवेश कर गया अर्थात् वीरों के हृदयों में बल का संचार हो गया ॥१५॥

**आकृष्य दूरं गुणमाशु मुक्ते विनिर्गतेऽङ्गानि विभिद्य बाणे ।**
**अपारिता वाचयितुं परेण वृथा बभूवुर्भटनामवर्णाः ॥१६॥**

ज्या को दूर तक खींच कर शीघ्रता से छोड़े गये बाण के शत्रु के अंगों के भेद कर बाहर निकल जाने के कारण शत्रु उस वीर के नाम के उस बाण पर खुदे हुये अक्षरों को न पढ़ सका और वे अक्षर व्यर्थ ही रहे ॥१६॥

**पुरः परेण क्षिपता शिरस्त्रमाकङ्कपत्रं निटले निखातः ।**
**पुंसः परावृत्तिपराङमुखस्य शरः किरीटस्य चकार कान्तिम् ॥१७॥**

किसी शत्रु का बाण एक वीर के ललाट में इतना अन्दर घुस गया कि उसकी जड़ ही बाहर रही, फिर भी वह वीर युद्ध में सामने ही डटा रहा और उस बाण का बाहर दिखाई देने वाला मूल-भाग उस वीर के मस्तक पर किरीट के समान शोभित हुआ ॥१७॥

**मर्मातिगेनाऽहितमार्गणेन विभिन्नमर्मा न चचाल कश्चित् ।**
**सम्वर्मयामास वपुर्विशङ्कः स्वाभाविकेनैव हि साहसेन ॥१८॥**

शत्रु के मर्मस्पर्शी बाणों से किसी वीर का कवच छिन्न भिन्न हो गया, फिर भी वह वीर युद्ध में डटा रहा और निःशंक होकर उसने अपने शरीर को अपने स्वाभाविक साहस के कवच से सुशोभित किया ॥१८॥

**निरुन्धति व्योमनि मार्गमह्नो निरङ्कुशे रेणुकृतान्धकारे ।**
**आनन्दसान्द्रस्मितचन्द्रिकाभिर्व्यक्तं प्रवीरस्य मुखं व्यलोकि ॥१९॥**

उद्धत धूल ने दिन के मार्ग को रोक कर आकाश को व्याप्त कर लिया, फिर भी आनन्द की घनी मुस्कान रूपी चाँदनी में किसी वीर का मुख स्पष्ट दिखाई दिया ॥१९॥

**संयोज्यमाने विशिखेन चापे विलूनशीर्षोपि शरेण सद्यः ।**
**कबन्धभावेऽपि तथैव कश्चिद् विदूरमाकृष्य मुमोच बाणम् ॥२०॥**

कोई वीर अपने धनुष पर बाण चढ़ा ही रहा था कि शत्रु ने उसका सिर काट गिराया, फिर भी उस वीर के कबन्ध (रुंड) ने ही उस बाण को दूर तक खींच कर छोड़ा ॥२०॥

---

(१७) आकंकपत्रमुपमूलं यावत् ।

**प्रणोदितानां सरयं शराणामन्योन्यसंघट्टभवो हुताशः ।**
**लग्नः पताकासु ततान दूरादुल्काविकासभ्रममभ्रसीम्नि ॥२१॥**

वेग से छोड़े गये बाणों के परस्पर संघर्ष से जो अग्नि उत्पन्न हुई वह पताकाओं में लग कर आकाश में दूर से ऐसी लगी मानों कोई तारा टूट रहा हो ॥२१॥

**नीतं नभः शत्रुशरै र्विलूनं शिरः प्रवीरस्य विरोचते स्म ।**
**गतं किमु व्योमसदां वधूनां विधूयमाननचुम्बनाय ॥२२॥**

शत्रुओं के बाण से काटा गया और आकाश में उछाला गया किसी वीर का सिर इस प्रकार शोभित हुआ मानों वह स्वर्ग की अप्सराओं के हिलते हुये मुख को चूमने के लिये गया हो (युद्ध में काम आने वाले वीरों को वरने के लिये अप्सरायें आती हैं) ॥२२॥

**नितान्तनिस्वाद्यतया पिशाचा रक्तं स्रवन्तीमविगाहमानाः ।**
**अस्रं पपुः पाणितलोपगूढकृत्तेभशुण्डाविवरैर्विदूरात् ॥२३॥**

पिशाचगण उस अत्यन्त स्वादिष्ट रक्त को रक्त-नदी में बिना घुसे ही दूर से, हाथियों की कटी हुई सूँडों के छेदों से पी रहे थे ॥२३॥

**आसन्नगाधेऽस्रसरित्प्रवाहे कृत्तद्विपाः कुत्रचिदन्तरीपाः ।**
**ददर्श येषु स्थितिमेत्य कालः क्रव्याशिनां वारिविहारलीलाः ॥२४॥**
**रक्तासवास्वादविशेषमाद्यत्क्रव्याद्वधूगीतसमानकालम् ।**
**वेतालकान्ताकरतालभङ्गीकृतानुबन्धान् नटतः कबन्धान् ॥२५॥**

उस अगाध प्रवाह वाली रक्त नदी में मरे हुये हाथी टापुओं की तरह लग रहे थे जिन पर चढ़ कर मानों काल मांसभक्षियों की (रक्त-नदी में) जलक्रीड़ायें देख रहा था—पिशाचों की स्त्रियाँ खूब रक्तमदिरा पीकर मस्त होकर गीत गा रही थीं और वेताल स्त्रियाँ तालियाँ बजा रही थीं जिनके ताल पर कबन्ध (रुंड) नाच रहे थे ॥२४–२५॥

**मांसाशया शोणितपङ्करुद्धं मौलिस्थमाणिक्यदलं निगीर्य ।**
**लग्नं गले गाढमथोज्जिगीर्षुर्व्यग्रा शिवा तीव्रतरं ववाशे ॥२६॥**

रुधिर रूपी कीचड़ में सने हुये किसी वीर के शिरोभूषण में जड़े हुये माणिक-समूह को मांस समझ कर एक गीदड़ी (शृगाली) उसे निगलने लगी, किन्तु वह गले में जाकर गहरा फँस गया और बिचारी गीदड़ी व्याकुल होकर बुरी तरह चिल्लाने लगी ॥२६॥

**ततः परं वीक्ष्य विपक्षसैन्यैः पताकिनीं विक्लवितां स्वकीयाम् ।**
**अवातरद् वातरयं तुरङ्गमारूढवान् शूरजनो रणाय ॥२७॥**

इसके बाद अपनी सेना को शत्रु सेनाओं द्वारा व्याकुल देख कर राव सुर्जन पवन के समान वेगशील घोड़े पर चढ़कर युद्धभूमि में कूद पड़े ॥२७॥

---

(२६) ववाशे चीत्त्कार।

**मौर्वीरवेण व्रणयन्नरातिश्रोत्राणि स त्राणकरो नतानाम् ।**
**अगाहताऽगाधबलं बलीयान् यथाम्बुराशिं प्रथमो वराहः ॥२८॥**

विनीत पुरुषों की रक्षा करने वाले बलवान् राव सुर्जन अपने धनुप की ज्या की टंकार से शत्रुओं के कानों को घायल करते हुये, शत्रुओं की अपार सेना में उसी प्रकार घुस पड़े जिस प्रकार आदिवराह (वराहावतार) अथाह समुद्र में (पृथ्वी का उद्धार करने के लिये) घुस गये थे ॥२८॥

**निषङ्गसङ्गत्वरमेकमन्यं करं धनुःस्थं श्रवणस्थमन्यम् ।**
**मौर्वीषुयोगे परमेकदैनं पश्यंश्चतुर्बाहुममंस्त लोकः ॥२९॥**

उस समय ऐसा प्रतीत होता था कि मानों राव सुर्जन का एक हाथ तरकस से जल्दी जल्दी बाण निकालने में लगा है, दूसरा हाथ धनुष को पकड़े है, तीसरा हाथ प्रत्यंचा को कान तक खींच रहा है और चौथा हाथ प्रत्यंचा पर चढ़े हुये बाण को छोड़ रहा है—ऐसी प्रतीति होने के कारण उन चतुर्बाहुमान् (चौहाण) वीर सुर्जन को लोगों ने उस समय वास्तव में चतुर्बाहुमान् (चतुर्भुज) ही समझा ॥२९॥

**अपीडयन् म्लेच्छभटानभीक्ष्णं तीक्ष्णाः पृषत्काः प्रभुणा विमुक्ताः ।**
**जन्तूनिव प्रान्तरसीमसंस्थान् वर्षोपलास्तोयधरेण नुन्नाः ॥३०॥**

राजा द्वारा छोड़े गये तीक्ष्ण बाण उन यवन वीरों को उसी तरह बराबर पीड़ा देते रहे, जिस तरह मेघ द्वारा बरसाये गये ओले दूर निर्जन भयरहित स्थान की सीमा में रहने वाले (छोटे-छोटे) प्राणियों को पीड़ित करते हैं ॥३०॥

**व्ययोजयन् कांश्चन जीवनेन बाणास्तदीया यवनप्रवीरान् ।**
**कल्पावसानोदितचण्डभानोः स्फुरन्मयूखा इव जीवलोकान् ॥३१॥**

उनके बाणों ने कई यवनवीरों को अपने प्राणों से वियुक्त कर दिया, जैसे प्रलय के समय उदित प्रचण्ड सूर्य की तीव्र किरणें जीवों को प्राणों से वियुक्त कर देती हैं ॥३१॥

**आयामवत्श्मश्रुशिरस्त्रभाञ्जि शिरांसि तेषां रुधिरापगासु ।**
**स्वच्छन्दमास्कंद्य निषेदिवांसः सुखेन खेलां दधति स्म गृध्राः ॥३२॥**

लम्बी चौड़ी दाढ़ी और शिरस्त्राणों से युक्त उन यवनों के रुधिर की नदियों में पड़े हुये सिरों पर फैल पसर कर आराम से बैठे हुये गिद्ध सुखपूर्वक खेल रहे थे ॥३२॥

**अजिह्मगानामपि नाम तेषां तत्कर्तृकं मोचनमेव युक्तम् ।**
**गुणाश्रयं दर्शितपक्षपातं कुर्वन्ति येऽमी परभेदहेतोः ॥३३॥**

यद्यपि वे 'अजिह्मग' (बाण; सरल) थे तो भी राजा के लिये उनको छोड़ देना ही उचित था क्योंकि वे 'पक्षपात' (पक्ष अर्थात् बाण के पिछले भाग के साथ गिर कर; किसी पक्ष का अनुचित समर्थन) दिखला कर दूसरों को भेदने के लिये (पीड़ा देने के लिये) ही 'गुण' (प्रत्यञ्चा; गुण) का आश्रय लेते थे ॥३३॥

---

(३०) प्रान्तरसीमसंस्थान् दूरशून्यमार्गसीम्नि स्थितान् ।

(३३) तत्कर्तृकं राज्ञा कृतमित्यर्थः ।

**अजिह्मगाः सन्त्वथ जिह्मगा वा कर्णेजपा दूरतरे विधेयाः ।**
**येऽन्तः प्रविश्य प्रथमं परेषां प्राणाननाकृष्य बहिर्न यान्ति ॥३४॥**

चाहे सरल (अजिह्मग) हों, चाहे कुटिल (जिह्मग), बाणों को 'कर्णेजप' (कान में गुनगुनाने वाले अर्थात् कान तक खींच कर छोड़े जाने वाले) होने के कारण दूर छोड़ना ही अच्छा है (अथवा चाहे सरल हों, चाहे कुटिल, बाणों (अजिह्मग) को, साँपों (जिह्मग) को और चुगलखोरों (कर्णेजप) को दूर छोड़ना ही अच्छा है) क्योंकि ये पहले दूसरों के भीतर घुस कर, बिना उनके प्राणों को बाहर निकाले, स्वयं भी बाहर नहीं निकलते ॥३४॥

**तद्बाणवह्नेरनलं विषोढुं ज्वालां करालामथ पारसीकाः ।**
**विदुद्रुवुर्दावशिखिप्रतप्ता जीवा इवारण्यचराः पराञ्चः ॥३५॥**

राव सुर्जन के बाणों की भयंकर प्रज्वलित अग्नि को वे यवन नहीं सह सके और विमुख होकर भाग गये, जैसे दावानल के भयंकर संताप को न सह कर वन के प्राणी भाग जाते हैं ॥३५॥

**ते त्रासजान्धंतमसावसन्ना विस्रस्तशस्त्राः परितो भ्रमन्तः ।**
**नालक्षयन् सूक्षिणमन्तिकस्थं प्रभुं नृपाणामपि शासितारम् ॥३६॥**

भय से उत्पन्न गहरे अन्धकार से घिरे हुये वे यवन अपने शस्त्र छोड़ कर चारों ओर भाग खड़े हुये और घबराहट के कारण वे राजाओं के भी शासक और अपने रक्षक अकबर को, जो समीप ही स्थित थे, नहीं देख पाये ॥३६॥

**तथाविधांस्तानपि वीक्षमाणः सर्वंसहामण्डलसार्वभौमः ।**
**सहासमाह स्म महाम्बुवाहधीरस्वनः सैनिकनाथमुख्यान् ॥३७॥**

भूमंडल के सार्वभौम सम्राट् अकबर ने अपने मुख्य सेनापतियों को इस प्रकार भयभीत देख कर, हँसते हुये, मेघ के समान गंभीर स्वर में, उनसे यों कहा ॥३७॥

**तरङ्गिणीशांस्तरसा स्वदोर्भ्यां शश्वत्समुत्तीर्णवतां सहेलम् ।**
**कुतो भवेन् मोहतमोवकाशस्तडागकासारविगाहनेषु ॥३८॥**

आश्चर्य है कि जिन वीरों ने सदा अपने बाहुबल से समुद्रों तक को वेग से खेल ही खेल में पार कर लिया, उन्हें आज छोटे से तालाब को पार करने में भयंकर व्यामोह हो रहा है ! ॥३८॥

**विलङ्घिता यैरलघुप्रतापैः कुतूहलेनैव कुलाचलेन्द्राः ।**
**किं गण्डशैलाक्रमणेऽपि तेषां सम्भावितो विप्रतिपत्तिलेशः ॥३९॥**

जिन महाप्रतापी वीरों ने कुतूहल में ही बड़े बड़े पर्वतों को पार कर लिया, उन्हें आज पहाड़ से गिरी हुई शिला को पार करने में शंका हो रही है ! ॥३९॥

**विरोधिभूपालवरूथिनीशे निरन्तरापि प्रसभं सुखेन ।**
**मया समासादि समुद्रसीमा समुद्रनेमिर्भवतां बलेन ॥४०॥**

बड़े बड़े शत्रुराजाओं के सेनापतियों के होते हुये भी उन्हें हठात् परास्त करके इस अव्यवहित समुद्ररशना पृथ्वी को मैंने आप ही लोगों के पराक्रम के कारण सुख से प्राप्त किया है ॥४०॥

---

(३६) सूक्षिणं रक्षकम् ।
(३९) गण्डशैलाः पर्वतात् पतिताः स्थूलोपलाः ।

**अनानमन्नेव ममैष चापः क्ष्मापालमुख्यान् नमयाञ्चकार ।**
**निदानमस्मिन् नितरामुदग्रा भवादृशामेव पराक्रमर्द्धिः ॥४१॥**

मेरे इस धनुष ने बिना झुके ही (क्योंकि इस पर प्रत्यंचा चढ़ाने की आवश्यकता ही नहीं हुई) बड़े बड़े श्रेष्ठ राजाओं को झुका दिया है—इसका कारण भी आप जैसे वीरों का अत्यन्त प्रवल पराक्रम ही है ॥४१॥

**यशांसि युष्माकमहो जिहीर्षुर्जगत्प्रकाशान्यपि जाङ्गलोऽयम् ।**
**मध्येमृधं धामभृतां नृपाणां यान्यर्जितान्यूर्जितविक्रमेण ॥४२॥**

आप लोगों ने युद्ध में बड़े बड़े तेजस्वी राजाओं को परास्त करके अपने प्रवल पराक्रम से जो जगद्विख्यात यश संचित किया है उस यश को आज यह जंगली मिटा देना चाहता है ! ॥४२॥

**अतः परं किन्नु विडम्बनं स्यादपत्रपायाः परमावधिर्वा ।**
**पृष्ठं परे यत् समितौ भटानां पश्यन्ति वक्षोऽपि कुलाङ्गनानाम् ॥४३॥**

इस से बढ़ कर और क्या अपमान हो सकता है और इससे वढ़ कर लज्जा की और कौन-सी पराकाष्ठा हो सकती है कि लोग वीरों की युद्ध में पीठ और कुलीन स्त्रियों का वक्षःस्थल देख सकें ! ॥४३॥

**कार्यं समीचीनमथेतरद् वा निर्वाहकाले कुरुते नरो यत् ।**
**तत् प्राक्प्रणीतं विपरीतकृत्यं प्रमार्ष्टि भूयस्तरमप्यवश्यम् ॥४४॥**

आपत्काल में पुरुष जो कुछ अच्छा या वुरा कार्य करता है वह अवश्य ही पहले किये गये बड़े भारी वुरे या अच्छे कार्य को भी मिटा देता है ॥४४॥

**पराजितेऽस्मिन्नपरं शरव्यं भवद्विधानां न महीतलेऽस्मिन् ।**
**वेलाविलासावधि वारिराशेर्वशीकृतं तत् खलु विश्वमेव ॥४५॥**

इसे पराजित कर देने पर इस भूमंडल में आप जैसों के वाणों का और लक्ष्य नहीं वचता क्योंकि फिर समुद्र तट तक सारा विश्व अपने ही वश में है ॥४५॥

**इतीरितास्ते प्रभुणा प्रवीरा ह्रिया च भीत्या च निवर्तिताश्वाः ।**
**शूरं प्रजह्नुः समकालमेव निजैर्निजैर्निर्दयमुद्धतास्त्रैः ॥४६॥**

अपने सम्राट् द्वारा इस प्रकार प्रेरित उन यवन वीरों ने लज्जा और भय के कारण अपने अपने घोड़े वापस लौटा लिये और उन सबने अपने अपने उद्धत शस्त्रों से निर्दयतापूर्वक एक साथ वीर सुर्जन पर प्रहार किये ॥४६॥

**चिरं परिश्रान्तिपरीतदेहः श्वसन् सफेनप्लुतशोणितास्यः ।**
**अथास्य वाहः परवाहिनीशैः शिलीमुखैस्तीक्ष्णमुखैरघानि ॥४७॥**

इसके बाद उन शत्रुसेनापतियों ने राव सुर्जन के घोड़े को, जिसका शरीर अत्यन्त परिश्रम के कारण चूर-चूर हो रहा था, जो बुरी तरह हाँफ रहा था और जिसके मुँह से फेन और खून निकल रहा था, अपने तेज वाणों से मार दिया ॥४७॥

**यावत् तुरङ्गं पतनोन्मुखं तं विहाय वाहान्तरमभ्युपैति ।**
**तावद् विपक्षाः किल चापमौर्वीमुर्वीपतेस्तस्य विलूनवन्तः ॥४८॥**

जिस समय राव सुर्जन उस गिरने वाले घोड़े को छोड़ कर दूसरे घोड़े पर चढ़ रहे थे उसी समय शत्रुओं ने उनके धनुष की प्रत्यंचा को काट दिया ॥४८॥

**बाणासनं तद् विनिकीर्य विद्वाञ्जवेन जग्राह स मण्डलाग्रम् ।**
**तं भीममूर्तिर्भ्रमयन् बभासे यथा दिनेशः परिवेषसङ्गात् ॥४९॥**

विद्वान् सुर्जन ने शीघ्र उस धनुष को फेंक कर वेग से तलवार हाथ में ले ली और भयंकर रूप धर कर उस तलवार को चारों ओर घुमाते हुये वे परिधि से घिरे हुए सूर्य के समान शोभित हुए ॥४९॥

**कौक्षेयकाक्षेपपरिक्षतानां क्षितिक्षितां ख्यातविपक्षगानाम् ।**
**अक्षीणदाक्ष्यः क्षतजैरभीक्ष्णमक्षालयत् क्षोणितलस्य कुक्षिम् ॥५०॥**

युद्ध-कुशल राजा ने विख्यात शत्रु-राजाओं के अपनी तलवार के प्रहारों से उत्पन्न घावों से बहने वाले रुधिर से निरन्तर धरातल की कोख को पाट दिया ॥५०॥

**विनिघ्नतस्तस्य समन्ततस्तानरीन् नरेन्द्रस्य तुरङ्गमेन्द्रः ।**
**भ्रमन् विभाति स्म यथा मरालः स्फुरन्महावर्तविवर्तमानः ॥५१॥**

शत्रुओं को मारने वाले राजा का श्रेष्ठ घोड़ा युद्धभूमि में चारों ओर घूमता हुआ, बड़ी भँवर में घूमने वाल हंस के समान, शोभित हो रहा था ॥५१॥

**अथापरे वैरिवरूथिनीशा विनिर्जितप्रोन्मदमेदिनीशाः ।**
**वर्माणि मर्माण्यपि भेदयन्तः शस्त्रैः प्रजापालममुं प्रजह्रुः ॥५२॥**

इसके बाद, बड़े-बड़े उन्मद राजाओं को जीतने वाले अन्य शत्रु-सेनापतियों ने, राव सुर्जन के कवच और मर्मस्थल को भेदते हुये, शस्त्रों से उन पर प्रहार किये ॥५२॥

**अत्युत्कटैः कङ्कटभेदिभिस्तैः प्रबाधमानाननुवेलमस्त्रैः ।**
**अव्यग्रचेताः सममुग्रवेगात् प्रत्यग्रहीत् तान् ग्रहराजतेजाः ॥५३॥**

कवच को भेदने वाले अत्यन्त तीव्र शस्त्रों से लगातार प्रहार करने वाले उन शत्रु सेनापतियों के प्रहारों को सूर्य के समान तेजस्वी राव सुर्जन ने अव्यग्रचित्त होकर रोका और प्रबल वेग से उन पर वार करना प्रारंभ किया ॥५३॥

**सम्भावयामास तमुग्रसत्वं हूमायुँजः सन्ततसाधुवादैः ।**
**सा स्यादसाधारणता गुणानां प्रमोदयेद् यद्द्विषतोपि चेतः ॥५४॥**

महान् पराक्रमी राव सुर्जन की, हुमायूँ के पुत्र अकबर बार बार 'वाह वाह' कहते हुये, भूरि भूरि प्रशंसा कर रहे थे; वास्तव में गुणों की असाधारणता वही है जो शत्रु के चित्त को भी प्रसन्न कर दे ॥५४॥

---

(५३) कंकटभेदिभिः कवचभेदिभिः ।

**गुरुसमरसमुत्थरेणुपूरैर्मलिनितमात्मवपुस्त्विषामधीशः ।**
**विमलयितुमिवोदके मिमङ्क्षुश्चरमपयोनिधिसन्निधिं जगाम ।।५५।।**

सूर्य भगवान् उस भीषण युद्ध में उड़ी हुई धूल के समूह से मैले बने हुये अपने शरीर को जल में डुबकी लगा कर साफ़ करने के लिये ही मानों पश्चिमी समुद्र के पास गए ।।५५।।

**अकबरधरणीशः सन्निवृत्य स्वसैन्यं**
**शिविरमुखमयासीद् वासरस्यावसाने**
**बहलरुधिरधाराधोरणीधौतदेह-**
**स्तदनु निववृते च क्षोणिपालः स्वदुर्गम् ।।५६।।**

दिन डूबने पर सम्राट् अकबर अपनी सेना को लौटा कर शिविर की ओर चले और तब राजा सुर्जन भी, जिनके शरीर से गहरी रुधिर धारायें बह रहीं थीं, अपने दुर्ग में लौट गये ।।५६।।

इति सुर्जनचरितमहाकाव्ये सप्तदशः सर्गः ।

# अष्टादशः सर्गः

**यावदुद्यमभृतोऽस्य रणाय स्वैरमुल्लसति दुन्दुभिनादः ।**
**तावदेव सचिवः शकभर्तुः प्रातरेत्य मिलितः प्रतिहारे ॥ १ ॥**

जिस समय युद्ध के लिये तैयार होने वाले राव सुर्जन के नगाड़ों के शब्द जोरों से बजने लगे, उसी समय प्रातःकाल अकबर के मंत्री (मानसिंह) द्वार पर मिलने आये ॥ १ ॥

**अर्हणाभिरुचितोपचिताभिस्तेन चारुचरितेन स नीतः ।**
**संसदं मृदुपदां गुणगुर्वीमाददे गुरुमतिर्गिरमेताम् ॥ २ ॥**

सुन्दर चरित्रवाले राजा सुर्जन उनको उचित आदर सत्कार के साथ सभा में ले आये और बुद्धिमान् मंत्री ने शब्दों से कोमल और गुणों से भारी ये वचन कहे ॥ २ ॥

**आगतः स्वयमहं निखिलोर्वीसार्वभौमवचनव्यपदेशात् ।**
**सौहृदातिशयतस्तव बन्धोर्बोधनाय नयशालिवचोभिः ॥ ३ ॥**

समस्त भूमंडल के सार्वभौम सम्राट् अकबर के आदेश के कारण मैं स्वयं यहाँ आया हूँ। आप मेरे बन्धु हैं, अतः अतिशय प्रेम के कारण मैं आपको नीतियुक्त वचनों से समझाना चाहता हूँ ॥ ३ ॥

**यश्चिकीर्षति महान् महसा ते प्रीतिमानकबरः सरलात्मा ।**
**तन् निशम्य समयं च विचार्य स्वीकुरुष्व कुशलस्य निदानम् ॥ ४ ॥**

सरल-हृदय महान् अकबर आपके पराक्रम से प्रसन्न होकर जो कुछ करना चाहते हैं उसे सुन कर और समय का विचार करके अपने कुशल क्षेम के उपाय को स्वीकार कीजिये ॥ ४ ॥

**त्वादृशाः कति कति क्षितिपाला निर्जिता ननु चमूभिरमुष्य ।**
**ईदृशोऽवनितले कतमः स्याद् योऽस्य नेत्रपदवीमभियाति ॥ ५ ॥**

सम्राट् की सेना ने आप जैसे न जाने कितने राजाओं को जीत लिया है। इस भूमंडल में ऐसा कौन है जो इनकी आँखों के आगे आये ? ॥ ५ ॥

**शौर्यसाहसरसेन भवन्तं सैन्यसिन्धुमधि विक्रममाणम् ।**
**वीक्ष्य विस्मयविशेषिततोषः पारितोषिकमसौ विततार ॥ ६ ॥**

आपको सेना-समुद्र के बीच में अपनी शूरता और साहस से पराक्रम दिखलाते हुये देख कर सम्राट् आश्चर्य से अत्यन्त प्रसन्न हो उठे और अब आपको यह पारितोषिक दे रहे हैं ॥ ६ ॥

---

(१) शकभर्तुरकबरस्य सचिवो मानसिंहः।

**नर्मदाश्रयविशेषपवित्रा ये भवन्ति विषया वसुपूर्णाः ।**
**जाह्नवीविमलवेणिविचित्रा पार्वतीपरिवृढस्य पुरी च ॥ ७ ॥**
**वासरेशसुतयाऽधिकशोभं मण्डलं च निखिलं मथुरायाः ।**
**गृह्यतां नियमतश्चिरकालं यद्यदिच्छसि परं च सुराज्यम् ॥ ८ ॥**
**एकमेव नृपते ! रणपूर्वस्तम्भदुर्गमिदमर्पय तस्मै ।**
**एवमेव हि शकेशितुरस्य प्रीतिरायतिमती भवति स्यात् ॥ ९ ॥**

नर्मदा के आश्रय के कारण विशेष रूप से पवित्र और धनधान्य से पूर्ण प्रदेश तथा पार्वतीपति भगवान् शिव की भागीरथी के निर्मल प्रवाह से पवित्र पुरी काशी एवं सूर्यसुता यमुना के कारण अधिक सुन्दर मथुरा का सम्पूर्ण मंडल तथा अन्य जो भी सुन्दर राज्य आप लेना चाहें वह सब आप नियमपूर्वक चिरकाल के लिये ग्रहण कीजिये, और राजन् ! केवल एक यह रणस्तम्भपुर का दुर्ग अकबर को समर्पण कीजिये। ऐसा करने पर ही यवन सम्राट् का प्रेम आपके प्रति विशाल होगा ॥७–९ ॥

**कुर्वते समयतः खलु सन्धिं बिभ्रतोऽपि बहलोज्ज्वलतेजः ।**
**वीतिहोत्रहरितोऽङ्कमुपास्ते शीतकालमधि घर्ममयूखः ॥१०॥**

विशाल और उज्वल तेजस्वी पुरुष भी समय देख कर सन्धि कर लेते हैं; सूर्य भी शीतकाल में अग्नि की दिशा (आग्नेय कोण) की गोद में शरण लेते हैं ॥१०॥

**हीनशक्तिविभवेऽपि जयः स्यात् कुत्रचिद् यदि घुणाक्षरकल्पः ।**
**तं विलोक्य न तु नीतिविरुद्धं बुद्धिमान् व्यवसितुं विदधीत ॥११॥**

यदि शक्ति और वैभव रहित पुरुष को कहीं घुणाक्षरन्याय से विजय प्राप्त हो भी जाय, तो उसे देख कर बुद्धिमान् पुरुष को नीतिविरुद्ध आचरण नहीं करना चाहिये ॥११॥

**ये स्वतोऽधिकबलेषु न कुर्युः सन्धिमन्धितधिया गुरुगर्वात् ।**
**स्रोतसीव पतिताः प्रतिकूले ते व्रजन्ति न कदाचन पारम् ॥१२॥**

जो लोग भारी अभिमान के कारण अन्धी बुद्धि वाले बन कर अपने से अधिक बलवान् शत्रु से सन्धि नहीं करते वे, प्रतिकूल प्रवाह में पड़े हुये प्राणियों के समान, कभी पार नहीं जा सकते ॥१२॥

**म्लानतामयति यत्र न कीर्तिर्भूयसी क्षतिरुदेति न यस्मात् ।**
**तं बलीयसि विरोधिनि सन्धिं कुर्वतः क इव तेऽत्र विमर्शः ॥१३॥**

जिसके कारण भारी हानि का उदय न हो और जिसके कारण कीर्ति भी मलिन न हो ऐसी सन्धि यदि बलवान् शत्रु के साथ हो सके तो इसे करने में आपके लिये इतने सोच-विचार की क्या आवश्यकता है ? ॥१३॥

---

(१०) वीतिहोत्रस्याग्नेः हरित आग्नेयकोणस्येत्यर्थः ।

**सर्वथाऽधिबलैः प्रतिपक्षै विग्रहे ग्रहिलतान्न हि गच्छेत् ।**
**कः प्रतीपतरचण्डसमीरं शर्म लिप्सुरभियाति रयेण ॥१४॥**

अपने से सब प्रकार अधिक बलशाली शत्रु से युद्ध करने के लिये दुराग्रह नहीं करना चाहिये। अपना कल्याण चाहने वाला कौन पुरुष अत्यन्त प्रचण्ड वायु के सामने वेग से दौड़ेगा ? ॥१४॥

**दुर्गमेकमुपनीय नृपास्मै गृह्यते यदि पुरत्रयमस्मात् ।**
**ईदृशा विनिमयेन बभूव प्रत्युताधिकतरस्तव लाभः ॥१५॥**

राजन् ! यदि आप इनको एक दुर्ग देकर इनसे तीन नगर ले लें, तो इस विनिमय से उलटे आपको ही अधिक लाभ है ॥१५॥

**ग्रन्थिलत्वमपदे किमु कुर्वन् खेदयस्यधिबलं यवनेशम् ।**
**किन्नु कर्णपदवीन्न गतस्ते जैत्रसिंहतनयस्य विपाकः ॥१६॥**

अस्थान में दुराग्रह करके आप सेना के साथ यवन सम्राट् को व्यर्थ में क्यों कष्ट दे रहे हैं ? क्या जैत्रसिंह के पुत्र हम्मीरदेव का परिणाम आपने नहीं सुना ? ॥१६॥

**वारिकाननमहीधरदुर्गाण्यग्रहीत् तदधिपान् स निगृह्य ।**
**शिष्यते परमिदं भवदीयं तेन तत्र यततेऽद्भुततेजाः ॥१७॥**

सम्राट् ने जल, वन और पर्वत के दुर्गों को, उनके स्वामियों को वन्दी बनाकर, जीत लिया है; केवल यह आप ही का दुर्ग बचा है, इसलिये अद्भुत तेजस्वी सम्राट् इसको लेने का यत्न कर रहे हैं ॥१७॥

**रञ्जिता प्रबलवैरिनृपास्रैः सद्गुणैश्च भवता धरणीयम् ।**
**पूरितं वितरणाम्बुनदीभिः कीर्तिभिश्च भुवनं विशदाभिः ॥१८॥**

आपने इस पृथ्वी को प्रबल शत्रुओं के रुधिर से रक्त और अपने उत्तम गुणों से अनुरक्त बना रक्खा है; आपने इस विश्व को अपने दान जल की विस्तृत नदियों से पूर्ण और अपनी स्वच्छ-कीर्ति से शुभ्र कर दिया है ॥१८॥

**यत्त्वनन्तरमिहास्ति विधेयं शस्त्रचापतपसां नृपतीनाम् ।**
**पुण्यवानसि विनैव हि यत्नं सर्वमेव समपद्यत तत् ते ॥१९॥**

शस्त्र और धनुष-रूपी तप वाले राजाओं के लिये इसके बाद जो कर्तव्य शेष रह जाता है, वह बिना यत्न ही आपको मिल रहा है, अतः आप बड़े पुण्यात्मा हैं ॥१९॥

**नर्मदान्वयजशर्मदतोयां नर्मदां नियमवानवगाह्य ।**
**वीतशङ्कमधुना मधुरास्ताः पश्य पावनभुवो मधुरायाः ॥२०॥**

नर्मद के कुल के लोगों के लिये जिसका जल कल्याणकारक है ऐसी नर्मदा में नियमपूर्वक स्नान करके अब निःशंक होकर आप मथुरा की मधुर और पवित्र भूमि के दर्शन करें ॥२०॥

**ज्योतिरुज्ज्वलतरां यतयो यां शीलयन्ति सततं यतचित्ताः ।**
**अन्तरीक्षनगरीं गणभर्तुस्तां विलोक्य भवितासि कृतार्थः ॥२१॥**

यति लोग यतचित्त होकर जिस अत्यन्त उज्वल ज्योतिर्मयी भगवान् शिव की अन्तरीक्ष नगरी काशी का सदा सेवन किया करते हैं उसके दर्शन करके आप अपने आपको कृतार्थ कीजिये ॥२१॥

**सोपपत्तिकमथाधिकपथ्यं भाषितं चिरममुष्य विचार्य ।**
**पुण्यतीर्थगमनाय मनीषी सोऽन्ववर्तत मनः शकभर्तुः ॥२२॥**

मानसिंह के युक्तियुक्त और अत्यन्त हितकारी वचनों पर बहुत देर तक विचार करके, पुण्य तीर्थों में जाने के इच्छुक राव सुर्जन ने अकबर के मनोनुकूल कार्य कर दिया ॥२२॥

**तं विसृज्य विषयं वशिवर्यस्त्वर्यमाण इव तीर्थविनोदैः ।**
**अन्वितः पुरजनैरनुरागान्निर्जगाम नगरान्नरनाथः ॥२३॥**

संयमी पुरुषों में श्रेष्ठ राव सुर्जन उस प्रदेश को छोड़कर तीर्थों में जाने के लिये जल्दी करते हुये, प्रेम के कारण नागरिकों के साथ, नगर से चल दिये ॥२३॥

**वासरैः कतिपयैः पतिरुर्व्याः सोऽथ वर्त्म विततं प्रविलङ्घ्य ।**
**नर्मदामृदुसमीरसनाथं सन्निवेशमकरोत् पृतनायाः ॥२४॥**

राजा सुर्जन ने कुछ दिनों में उस विस्तृत मार्ग को पार करके नर्मदा के कोमल पवन से युक्त स्थान में अपनी सेना का शिविर बनाया ॥२४॥

**नीत्वा स कत्यपि समा भुवि नर्मदायास्तद्वासिनो जनपदान् वशगान्स कृत्वा ।**
**पुण्यामपूर्णसुकृतैर्मनुजैर्दुरापां प्राप प्रियां मधुपुरीं मधुसूदनस्य ॥२५॥**

नर्मदा की भूमि में कुछ वर्ष रहकर और वहाँ के निवासी नागरिकों को वश में करके राव सुर्जन, अल्प पुण्य वाले पुरुषों के लिये दुष्प्राप्य तथा भगवान् कृष्ण की प्रिय, पुण्यभूमि मथुरा पहुँचे ॥२५॥

**कालिन्दीपुलिनमथो विगाहमानं गोपालः स्वकुलपुरस्कृतं पुरोधाः ।**
**व्यासस्तं वशिनमुदाहरत् प्रमोदादुन्मीलन्मधुपुरमाधुरीनिमग्नम् ॥२६॥**

अपने कुटुम्बियों के साथ यमुना के तट का सेवन करने वाले, मथुरा पुरी के विकसित सौन्दर्य में निमग्न, संयमी राव सुर्जन से उनके पुरोहित गोपाल व्यास ने प्रसन्नतापूर्वक इस प्रकार मथुरा का वर्णन किया ॥२६॥

**रक्तोत्पलैरभिनवैरभितः स्फुरद्भिः स्फीतेन्द्रनीलमणिमेदुरमुग्धवेणिः ।**
**आभाति पातकततिक्षतजाक्तधारा धर्मस्य खड्गलतिकेव कलिन्दकन्या ॥२७॥**

किनारे-किनारे विकसित नवीन लाल कमलों के कारण उज्वल नीलम के समान सुन्दर प्रवाह वाली यमुना, पापों के समूहों को मारने के कारण उनके रुधिर से सनी हुई धार वाली धर्म (यमराज) की तलवार के समान सुशोभित हो रही है ॥२७॥

**स्वच्छात्मानः पावनीमेतदीयां वारां धारां स्वच्छशीतस्वभावाम् ।**
**अम्भोवाहाः साधवोऽपि प्रकामं पीत्वा सद्यः कृष्णभावं भजन्ते ॥२८॥**

इस यमुना के जल की पवित्र, नील और शीतल स्वभाव वाली धारा को पर्याप्त पीकर स्वच्छ शरीर वाले शुभ्र बादल शीघ्र काले बन जाते हैं और स्वच्छ हृदय वाले साधु पुरुष शीघ्र भगवान् श्रीकृष्ण-स्वरूप हो जाते हैं ॥२८॥

**इयञ्च गीर्वाणतरङ्गिणी च कामं जगत्पावनतां दधाते ।**
**परन्तु धौतं पदमेव तस्यामियञ्जगाहे हरिणा विहारे ॥२९॥**

यमुना और गंगा, दोनों ही, जगत् को पवित्र करती हैं; तथापि भगवान् श्रीकृष्ण ने गंगा में तो केवल पैर ही धोया, किन्तु इस यमुना में (गोपियों के साथ) जल-क्रीड़ा की। (जब वामन रूप भगवान् ने अपना एक पैर स्वर्ग में रक्खा तब ब्रह्माजी ने अपने कमण्डलु के जल से उस पैर को धोया, वह जल ही गंगा-रूप से तीनों लोकों को पवित्र कर रहा है) ॥२९॥

**सेयं पुरी प्राणभृतां नमस्या को वेद सम्यङ् महिमानमस्याः ।**
**अजोऽपि यस्यां समजायतासौ जातो न भूयः समुपैति जन्म ॥३०॥**

यह मथुरा पुरी प्राणियों के लिये पूज्य है। इसकी महिमा को ठीक-ठीक कौन जान सकता है ? इसमें भगवान् श्रीकृष्ण ने, 'अज' (जन्म रहित) होते हुये भी, जन्म लिया; और जो इसमें एक बार जन्म ले लेता है वह फिर कभी जन्म नहीं लेता (क्योंकि वह जन्म-मृत्युचक्र से छूटकर मुक्त हो जाता है) ॥३०॥

**जन्माऽमुष्यां जन्मधारां धुनीते मौञ्जीबन्धो हन्ति बन्धानुबन्धान् ।**
**मृत्युर्भिन्ते दारुणां मृत्युभीतिं दाहस्तीव्रांस्त्रासयेत् सर्वदाहान् ॥३१॥**

इस मथुरा में जन्म लेना जन्म-परम्परा को मिटा देता है; इसमें यज्ञोपवीत लेकर मौञ्जी-बन्ध धारण करना सब बन्धनों को काट देता है; इसमें मरने से मृत्यु का भीषण भय नष्ट हो जाता है (क्योंकि जन्ममृत्यु का चक्र छूट जाता है) और इसमें दाह-संस्कार होने से सम्पूर्ण दाह (सांसारिक सन्ताप) छूट जाते हैं ॥३१॥

**उत्तानपादतनयः प्रयतः सदाऽस्याः प्रासादशेखरपरिक्रमणं करोति ।**
**युक्तं यदत्र यदुवीरपदारविन्दमाराध्य स ध्रुवपदं पृथुकः प्रपेदे ॥३२॥**

उत्तानपाद के पुत्र ध्रुव सदा सावधान होकर इसके महलों के शिखरों की परिक्रमा करते हैं, यह ठीक ही है क्योंकि बालक ध्रुव ने भगवान् श्रीकृष्ण के चरणकमलों की आराधना करके यहीं ध्रुवपद प्राप्त किया था ॥३२॥

**चिराय विप्रोषितभर्तृका कथं ध्रियेत वैकुण्ठपुराधिदेवता ।**
**अजस्रमस्याः श्रितपीतवाससो न तां पताकापवनो यदि स्पृशेत् ॥३३॥**

वैकुण्ठपुर की अधिदेवता, बहुत समय के लिये अपने पति से वियुक्त होकर, किस प्रकार धैर्य धारण करती, यदि निरन्तर पीताम्बर भगवान् कृष्ण का आश्रय लेनेवाली इस मथुरा की पताकाओं का पवन उसका स्पर्श नहीं किया करता ? ॥३३॥

**अमुना यमुनापथेन बालं हरिमङ्के विनिधाय धीरचेताः ।**
**अगमत् तमसि प्रकामभीमे वसुदेवः सदनाय गोपभर्तुः ॥३४॥**

वालरूप भगवान् कृष्ण को अपनी गोद में लेकर धीरचित्त वसुदेव उस (भाद्रपद कृष्णाष्टमी के) भयंकर निविड़ अन्धकार में इसी यमुनामार्ग से गोपों के स्वामी नन्द के घर गये थे ॥३४॥

**नामानि यस्य गृणतामिह जन्मभाजां संसारसिन्धुरपि गोष्पदतां प्रयाति ।**
**आश्चर्यमत्र किमिहानकदुन्दुभेस्तत्सङ्गेन मित्रतनयाऽजनि जानुदघ्नी ॥३५॥**

इस संसार में जन्म लेने वाले प्राणियों के लिये जिन भगवान् श्रीकृष्ण के नामस्मरण के कारण यह अपार भवसागर भी गाय के खुर से पड़े हुये छोटे से गड्ढे में भरे हुये जल के समान (सरलता से पार करने योग्य) बन जाता है, उन भगवान् श्रीकृष्ण के संग के कारण (गोद में होने के कारण) वसुदेव के लिये यदि मित्रपुत्री (सूर्य की पुत्री; मित्र की पुत्री) यमुना घुटनों तक आने वाली बन गई (जैसे किसी व्यक्ति की गोद में बच्चे को देखकर उसके मित्र की छोटी बच्ची आकर उसके घुटनों से लिपट जाती है) तो इसमें आश्चर्य की क्या बात है ! ॥३५॥

**संसारजाङ्गलपथश्रमखेदभाजां विश्रामदो मधुरिपुः स्वयमश्रमोऽपि ।**
**आकृष्य कंसमसकृद् रविणं जवेन विश्राम्यति स्म पुलिनेऽत्र कलिन्दजायाः॥३६॥**

इस संसार के बीहड़ जंगली मार्ग में चलने के परिश्रम से दुःखी प्राणियों को विश्राम देने वाले मधुसूदन श्रीकृष्ण ने, स्वयं श्रमरहित होने पर भी, बारबार चिल्लाते हुये कंस को वेग से खींच कर (मार कर), यमुना के इस तट पर विश्राम किया था ॥३६॥

**कंसस्य काराभवनं तदेतन्नारायणोऽजायत यत्र देवः ।**
**यद्दर्शनात् प्राणभृतो न भूयः संसारकाराभवनं विशन्ति ॥३७॥**

यह कंस का कारागार है जिसमें भगवान् श्रीकृष्ण ने जन्म लिया था; इसके दर्शन करने से प्राणी फिर संसार-रूपी कारागार में प्रवेश नहीं करते ॥३७॥

**दाम्ना मणीनां खचितेन हेम्ना शोणः क्वचिच्छोणितकर्दमेन ।**
**करे हरेः कंसगजस्य दन्तः कौमोदकीकान्तिमिहाससाद ॥३८॥**

सोने में जड़ी हुई मणियों की माला से सुशोभित और कहीं-कहीं रुधिर-रूपी कीचड़ के लगने से लाल, कंस के हाथी का उखाड़ा हुआ दाँत, यहाँ भगवान् कृष्ण के हाथ में उनकी कौमोदकी गदा के समान शोभित हुआ ॥३८॥

**प्रतिमन्दिरमिन्दिरासहायो वसतीह स्वयमेव वासुदेवः ।**
**अलिखन्निह कारवः समन्तात् परमेनं निजशिल्पकौशलाय ॥३९॥**

मथुरा के प्रत्येक मन्दिर में भगवान् वासुदेव लक्ष्मी के साथ निवास करते हैं; शिल्पियों ने उनकी प्रतिमायें केवल अपना शिल्पकौशल दिखाने के लिये ही बनाई हैं ॥३९॥

---

(३५) श्रीमद्भागवते (१०-२-३०) 'त्वत्पादपोतेन महत्कृतेन कुर्वन्ति गोवत्सपदं भवाब्धिम्' इति।

**गृहे गृहे माथुरकामिनीनां मुखाम्बुजेभ्यश्चरितं मुरारेः ।**
**आकर्णयन् कंसवधादिवृत्तमस्यां जनो ह्यस्तनमेव वेद ।।४०।।**

घर-घर में मथुरा की स्त्रियों के मुख-कमलों से भगवान् श्रीकृष्ण का कंसवध आदि चरित्र सुन कर लोग उसे कल ही हुआ समझते हैं ।।४०।।

**अश्मन्ततीर्थं स कृती जगाम यत्र स्थितो दानपतिः प्रतीतः ।**
**अज्ञानजान्ध्यं विजहौ जलान्तर्मग्नोऽपि दामोदरवैभवेन ।।४१।।**

पुण्यात्मा राव सुर्जन फिर अश्मन्त तीर्थ पहुँचे जहाँ भगवान् श्रीकृष्ण की कृपा से अक्रूर ने (यमुना के) जल में निमग्न होकर भी (जड़ता अर्थात् मूर्खता में निमग्न होकर भी अथवा जड़ पदार्थों में आसक्त होने पर भी) अज्ञान से उत्पन्न अन्धकार को दूर कर दिया था ।।४१।।

**वसन्तमुख्यैः समयैः स्वभावविरोधमुद्वास्य परस्परेण ।**
**निषेव्यमाणं युगपन्नृपोऽसौ वृन्दावनं पावनमन्वविन्दत् ।।४२।।**

फिर राव सुर्जन उस पवित्र वृन्दावन में पहुँचे जहाँ वसन्त आदि छहों ऋतुयें परस्पर विरोध छोड़ कर एक साथ रहती हैं ।।४२।।

**स्मरस्य सेवावसरप्रदेन विशेषितश्रीर्वयसा नवेन ।**
**यत्कुञ्जभूमीर्भगवान् मुकुन्दः कृतार्थयामास पदार्पणेन ।।४३।।**

कामदेव को सेवा करने का अवसर देने वाले नवयौवन के कारण विशेष शोभा वाले भगवान् श्रीकृष्ण ने इस वृन्दावन की कुञ्जभूमि को अपने चरणारविन्दों के स्पर्श से धन्य बनाया था। (जैसे श्रीकृष्ण-पुत्र कामावतार प्रद्युम्न भगवान् के चरणों की सेवा करते थे, उसी प्रकार स्वयं कामदेव भी महायोगयोगेश्वर के चरणों में ही लोटता रहता था ) ।।४३।।

**अनारतं यत्र सनाथयन्तः शिखण्डिनामुन्मदताण्डवानि ।**
**स्पर्धाभिरूर्ध्वीकृतकण्ठनादा जगुर्मरालाश्च वनप्रियाश्च ।।४४।।**

वृन्दावन में मोरों के मादक नृत्य का निरन्तर साथ देने के लिये कोयल और हंस, परस्पर स्पर्धा से, अपने कंठस्वर को ऊँचा करके गाया करते हैं ।।४४।।

---

(४३) स्मरस्य कामस्य कामावतारप्रद्युम्नस्य च । कामोऽपि श्रीकृष्णस्य पदाम्बुजमेव आश्रयति स्म । तदुक्तं श्रीमद्भागवते (१०–३३–२०) 'रेमे स भगवांस्ताभिरात्मारामोऽपि लीलया' इति, 'यत्पादपंकजपरागनिषेवतृप्ता योगप्रभावविधुताखिलकर्मबन्धाः । स्वैरं चरन्ति मुनयोऽपि न नह्यमानास्तस्येच्छयाऽऽत्तवपुषः कुत एव बन्धः ।।' (१०–३३–३५) इति च ।

**मनोजमौर्वीरवमेदुरेण क्वचिद्द्विरेफावलिहुङ्कृतेन ।**
**क्वचिच्च षड्जस्वरपारगानां केकाभिराकारितमन्मथाभिः ॥४५॥**
**विलासिनीशंसितपेशलाभिः क्वचित् पिकालीमृदुकाकलीभिः ।**
**अन्योन्यरागादनुबन्धिनीभिः क्वचित् कथाभिः शुकसारिकाणाम् ॥४६॥**
**रतप्रवृत्तोन्मदसारसाक्षीसाकूतकण्ठध्वनिकोमलेन ।**
**आकर्षता संयमिनोऽपि चेतः क्वचित् कपोतीघनघूत्कृतेन ॥४७॥**
**नृत्यन्नतभ्रूरशनानिनादहृद्यैः क्वचित् सारसकण्ठघोषैः ।**
**नितम्बिनीनूपुरशिञ्जिताभैर्मरालयूनां निनदैः क्वचिच्च ॥४८॥**
**दात्यूहपारावततित्तिरीणां प्रत्यूहशून्यप्रतिनादभाजाम् ।**
**कोलाहलेन क्वचिदादधानं मनो जनस्य श्रवणैकतानम् ॥४९॥**

कहीं पुष्पधन्वा कामदेव की धनुष-प्रत्यञ्चा की टंकार के समान मनोहर, भ्रमरों की गूँज सुनाई दे रही है। कहीं षड्ज स्वर के पारगामी विद्वान् मोरों की कामदेव को बुलाने वाली केका ध्वनि सुनाई दे रही है। कहीं विलासिनी कामिनियों की प्रणय-कथा के समान चतुर, कोयलों की कूकें श्रवणगोचर हो रही हैं। कहीं परस्पर अनुराग का अनुसरण करने वाली, तोता मैना की प्रणयकथायें हो रही हैं। कहीं सारस के समान लाल नेत्र वाली और संभोग में उन्मत्त रमणी के साभिप्राय रति-कूजित के समान मृदु तथा संयमी पुरुष के चित्त को भी बलात् आकर्षित करने वाले कबूतरियों के गहरे घूत्कार सुनाई दे रहे हैं। कहीं नृत्य में प्रवृत्त ललना की रशना (करधनी) के स्वरों के समान मनोहर सारस पक्षियों के कंठस्वर और कहीं सुन्दरी (नर्तकी) के घुँघरुओं के शब्दों के समान सुन्दर, युवक हंसों के निनाद सुनाई पड़ रहे हैं। कहीं दात्यूहों (नीले कंठ वाली चिड़िया), कबूतरों और तीतरों का निर्विघ्न प्रतिध्वनि से प्रगुणित कोलाहल सुनाई दे रहा है। इन विविध शब्दों के कारण वृन्दावन में जाने वाले पुरुष का मन कान में ही एकाग्र हो जाता है ॥४५–४९॥

**विचित्रकल्पद्रुमवेदिभाजां नानामणीनां खचिता मयूखैः ।**
**यत्रार्कपुत्री वलयिप्रवाहा बलद्विषश्चापरुचिं बभार ॥५०॥**

विचित्र कल्पवृक्षों की वेदी पर स्थित नाना प्रकार के मणियों की किरणों के संयोग से यमुना, अपनी भँवर के कारण, इन्द्रधनुष की शोभा धारण कर रही थी ॥५०॥

**मुरजिन्मुखवीजितस्य वेणोः कलगीतामृतनिम्नगानिमग्नाः ।**
**जगदुत्तरतां जगाहिरे ता हरितो हेलिसुतासमीपभाजः ॥५१॥**

यमुना के पास की दिशायें, भगवान् श्रीकृष्ण के मुख से बजाई गई बाँसुरी के मनोहर गीत रूपी अमृतनदी में डूब कर संसार में अलौकिक लग रहीं थीं ॥५१॥

---

(४७) यथोक्तं—'कान्ते तथा कथमपि प्रथितं मृगाक्ष्या चातुर्यमुद्धतमनोभवया रतेषु। तत्कूजितान्यनुवदद्भिरनेकवारं शिष्यायितं गृहकपोतशतैर्यथास्याः ॥' इति।

(४५–४९) श्रीमद्भागवते (३–१५–१८) उक्तं—"पारावतान्यभृतसारसचक्रवाकदात्यूहहंसशुकतित्तिरिबर्हिणां यः। कोलाहलो विरमतेऽचिरमात्रमुच्चैर्भृङ्गाधिपे हरिकथामिव गायमाने ॥" इति।

**अवलम्ब्य कदम्बशाखिमूलं चिरमुल्लासितचारुचिल्लिवल्लिः ।**
**अहरत् कुतुकेन यत्र गोपीर्मुरलीकूजितकौशलेन कृष्णः ॥५२॥**

इस वृन्दावन में कदम्बवृक्ष के तने का सहारा लेकर 'चिल्लि' नामक लताओं को झुमाते हुये भगवान् श्रीकृष्ण अपनी वंशीध्वनि के कौशल से गोपियों (के हृदयों को यों ही) हर लेते थे ॥५२॥

**यस्य स्मृतावपि सपत्नतिरस्कृताया निःसीमम्बरमभूद् द्रुपदात्मजायाः ।**
**यत्राम्बराणि स लसत्कलसस्तनीनामस्तेनयद् विकचनीपवनीविलासी ॥५३॥**

दुर्योधन दुःशासन आदि शत्रुओं द्वारा अपमानित द्रौपदी का वस्त्र, जिनके स्मरणमात्र से, सीमारहित बन गया, इस वृन्दावन के विकसित कदम्ब -कुञ्जों में विलास करने वाले उन भगवान् श्रीकृष्ण ने भी यहाँ कलशों के समान सुन्दर स्तनों वाली गोपियों के वस्त्र चुराये ॥५३॥

**रासोत्सवे मण्डलिकाविलासमुपेयुषि प्रेयसि वल्लवीनाम् ।**
**भानूद्भवाया भ्रमिभङ्गभाजो विलुप्तमद्यापि न यत्र चिह्नम् ॥५४॥**

जब गोपियों के प्राण भगवान् श्रीकृष्ण स्थल पर मंडल बना कर रासलीला करने के बाद गोपियों के साथ यमुना में वारिविहार के लिये उतरे, तब यमुनाजल में रासलीला का जो मंडल बना उस मंडलाकार चिह्न को आज भी यमुना अपनी भँवरों के रूप धारण कर रही है और वह चिह्न आज तक नहीं मिटा है ॥५४॥

**आकीर्य रम्यैः कुसुमैर्मुरारेर्निकुञ्जकेलीशयनानि सायम् ।**
**गायन्ति यस्मिन्नवदानमस्य द्वन्द्वानि नित्यं वनदेवतानाम् ॥५५॥**

(इस वृन्दावन के कामवन में) सायंकाल कुञ्ज में भगवान् श्रीकृष्ण की रतिशय्या पर मनोहर पुष्प फैला कर वनदेवताओं के मिथुन नित्य भगवान् के प्रशस्त चरितों का गान करते हैं ॥५५॥

**ध्येयैः समाहितधियां शमिनां समन्तादुल्लासितं मुररिपोर्ललितैः पदाङ्कैः ।**
**गोवर्धनं सुकृतकौतुकवर्धनं तं शैलं जगाम स यशोधनसार्वभौमः ॥५६॥**

फिर यशस्वियों के सम्राट् राव सुर्जन उस पुण्य-वर्धन गोवर्धन पर्वत पर गये जो चारों ओर भगवान् श्रीकृष्ण के उन सुन्दर पदारविन्दों के चिह्नों से कृतार्थ हुआ था जिनका ध्यान विशुद्ध बुद्धि वाले योगी सदा किया करते हैं ॥५६॥

**यत्रातपत्रपदमीयुषि तीव्रवृष्टिमूर्च्छत्सवत्ससुरभीकुलजीवनाय ।**
**देवस्य गोपवपुषो बिभराम्बभूव बाहुर्महेन्द्रमणिनिर्मितदण्डलक्ष्मीम् ॥५७॥**

(इन्द्र के कोप से होने वाली) भयंकर वर्षा के कारण व्याकुल बछड़ों, गायों (और गोप-गोपियों) के समूह की जीवनरक्षा के लिये जब गोवर्धन पर्वत छत्र बना, तब गोपवेशधारी भगवान् श्रीकृष्ण के हाथ ने उज्वल नीलम मणियों से निर्मित छत्रदंड की शोभा धारण की ॥ ५७ ॥

---

(५२) चिल्लिः लताविशेषः।

(५४) श्रीमद्भागवते (१०-३३-२४)—'सोऽम्भस्यलं युवतिभिः परिषिच्यमानः प्रेम्णेक्षितः प्रहसतीभिरितस्ततोऽङ्ग। वैमानिकैः कुसुमवर्षिभिरीड्यमानो रेमे स्वयं स्वरतिरत्र गजेन्द्रलीलः ॥' इति।

**तिरोहिते कौतुकतो मुकुन्दे तदङ्गसंसर्गविशेषहृद्यैः ।**
**यद्धातुरागैर्विहिताङ्गरागा दधुः स्वजीवं व्रजनीरजाक्ष्यः ॥५८॥**

(रासलीला के समय) जब भगवान् श्रीकृष्ण कौतुकवश अन्तर्धान हो गये तब उनके अंगों के संसर्ग के कारण विशेष रूप से मनोहर, गोवर्धन पर्वत के गेरु आदि का अपने शरीर पर लेप करके व्रज की कमलनयनी गोपियों ने अपने प्राण धारण किये ॥५८॥

**अथ घनजलधारारुद्धदिक्चक्रवालं तिमिरतिमिगभीरं मग्नसोमार्कबिम्बम् ।**
**हुतवहमनिवार्यं वार्भिरन्तर्दधानं समजनि घनवीथीमण्डलं सिन्धुकल्पम्॥५९॥**

उसके बाद वर्षा ऋतु के कारण बादलों का समूह समुद्र के समान शोभित हुआ—वह घनी जलधाराओं से दिशाओं का मंडल व्याप्त कर रहा था, अन्धकार रूपी मगरमच्छों से गहरा लग रहा था, सूर्य और चन्द्र उसमें डूब जाते थे और वह जल में अनिवार्य अग्नि (बिजली; बड़वानल) छिपाये हुये था ॥५९॥

**सरसीभविष्यति मलीमसाशया नलिनी निमङ्क्ष्यति जलाशयेष्वपि ।**
**इति चिन्तयन्निव विदूनमानसः प्रियमानसः सपदि निर्ययौ खगः ॥६०॥**

जिसे मानसरोवर प्रिय है वह हंस यह सोच कर कि अब वर्षाऋतु में सरोवर का जल मैला हो जायगा और सरोजिनी भी जल में डूब जायगी, दुःखी मन से शीघ्र उड़ गया, जैसे अन्तःकरण के कलुषित होने पर और हृत्कमलिनी के जड़पदार्थों में डूब जाने पर शुद्ध आत्मा प्रकाशित नहीं होता ॥६०॥

**उद्रेकमाप दवथुः प्रथमं पृथिव्या नव्याम्बुदेन विरलं सलिलैर्विकीर्णैः ।**
**द्रागागसा प्रणयगर्वितमानसाया नार्याः प्रियेण रचितैरिव सान्त्ववादैः ॥६१॥**

नवीन मेघ द्वारा विरलतया बरसाये गये जलबिन्दुओं से पहले पृथ्वी का सन्ताप बढ़ गया, जिस प्रकार ताज़ा अपराध करने वाले प्रियतम के सान्त्वनावचनों से प्रणयकुपित मानिनी का सन्ताप बढ़ जाता है ॥६१॥

**मुकुलपुलकितां कदम्बशाखां क्षणमवलम्ब्य समीरणोऽवतीर्णः ।**
**नवघनपृषतप्रसाधिताङ्गीं कुसुममुखे सुमनोलतां चुचुम्ब ॥६२॥**

खिली हुई कलियों से पुलकित कदम्बशाखा को कुछ देर पकड़ कर पवन नीचे उतरा और नवीन मेघ के जलबिन्दुओं से शृङ्गारित अंग वाली पुष्पलता के कुसुम रूपी मुख का चुम्बन किया ॥६२॥

**सुमनाः सुकुमारतरैकभूमिः सुदतीनां तुदति स्म चेन् मनांसि ।**
**घनकण्टकमाविलं रजोभिः सुतरां भेत्स्यति केतकं न चित्रम् ॥६३॥**

जब अत्यन्त सुकुमार सुन्दर पुष्प भी कामिनियों के मन को कष्ट देने लगे तो गहरे काँटों और मैले पराग वाला केतकी का फूल यदि उनके हृदयों को बुरी तरह भेद दे तो इसमें आश्चर्य नहीं ॥६३॥

**पवनेन पुरोभवेन भूयो मधुराभिर्नवनीरधोरणीभिः ।**
**तपतीव्ररविप्रतापदग्धा वनराजीरुदजीवयद् वनश्रीः ॥६४॥**

वनलक्ष्मी ने ग्रीष्म के प्रचंड सूर्य के ताप से जली हुई वन की पंक्तियों को पुरवाई हवा से और नवीन जल की मधुर धाराओं से फिर जिला दिया ॥६४॥

**चिरात् निवृत्तस्य घनागमस्य गाढोपगूढेन हरिद्वधूनाम् ।**
**हारा निपेतुश्छिदुरा विदूरात् पयोधरेभ्यः करकामिषेण ॥६५॥**

बहुत समय बाद प्रवास से लौटे हुये वर्षा-काल द्वारा दिग्वधुओं का गाढ़ आलिंगन करने पर उनके पयोधरों से (बादलों से; स्तनों से) हारों के मोती टूट टूट कर ओलों के बहाने गिरने लगे ॥६५॥

**सुहृदः समुपागतान् पयोदान् स्मृतनन्दात्मजदेहकान्तिपूराः ।**
**ददृशुः स्रवदस्रवः कथञ्चिद् बत वृन्दावनवासिनो मयूराः ॥६६॥**

वृन्दावनवासी मोर, समीप आये हुये मित्र मेघों की ओर, भगवान् श्रीकृष्ण के शरीर की कान्ति के स्मरण में लीन होने के कारण, आँसू बहाते हुये, किसी प्रकार, देख सके ॥६६॥

**बर्हेण येषां विदधेऽवतंसं कंसस्य शत्रुः स्वयमुज्झितेन ।**
**कलापिनः प्रोज्झितताण्डवास्ते विलोकयन्ति स्म घनं सबाष्पाः ॥६७॥**

कंसशत्रु भगवान् श्रीकृष्ण जिन मोरों के स्वयं गिरे हुये पंख को अपने सिर का आभूषण बनाते थे, वे (वृन्दावनवासी) मोर, अपना नृत्य भूल कर, (घनश्याम के समान) मेघ की ओर, आँसू बहाते हुये, देखने लगे ॥६७॥

**विनापि बाणैरवलम्ब्य तावदिन्द्रायुधं निर्गुणमप्यनङ्गः ।**
**अमोहयद् विश्वमनन्यतन्त्राः काङ्क्षन्ति सिद्धौ न तु हेतुमन्यम् ॥६८॥**

अनङ्ग कामदेव ने निर्गुण (ज्यारहित) इन्द्रधनुष से ही, बिना बाण चलाये, सारे संसार को मोह लिया; वास्तव में स्वतन्त्र पुरुष कार्यसिद्धि के लिये अन्य हेतु की अपेक्षा नहीं रखते ॥६८॥

**कादम्बिनी कालभुजङ्गजाया प्राणान् पिपासुः पथिकप्रियाणाम् ।**
**ऊर्ध्वीकृताम्भोदफणा सनादं व्यलोलयद् विद्युतमुग्रजिह्वाम् ॥६९॥**

काल रूपी सर्प की पत्नी मेघमाला, विरहिणियों के प्राणवायु को पीने के लिये (सर्पों को पवनाशन माना है), अपने काले बादल रूपी फण को फैला कर (मेघगर्जन के बहाने) फुँफकारती हुई, बिजली रूपी तेज जीभ हिलाने लगी ॥६९॥

**विलुप्तमर्यादमुदीरितैर्जलैर्भग्नास्तटस्था अपि मेदिनीरुहाः ।**
**किं वा न कुर्वन्त्यसमञ्जसं गताः परां विवृद्धिं तरला हि निम्नगाः ॥७०॥**

चपल नदियों ने बरसाती पानी से अत्यधिक बढ़ कर तथा मर्यादा छोड़ कर, अपन बाढ़ के जल से तट पर स्थित वृक्षों को भी उखाड़ फेंका; वास्तव में नीच पुरुष, जो स्वभाव से ही चंचल हों, यदि भाग्यवश अत्यन्त समृद्ध बन जाँय, तो अपनी मर्यादा खो कर तटस्थ पुरुषों को भी कष्ट देते हैं और क्या क्या उलटी बातें नहीं कर बैठते ? ॥७०॥

**पुर एव नीपपवनोतिदारुणोऽदलयद् वियोगिमिथुनानि मर्मणि ।**
**किमुत प्रफुल्लनवचारुमालतीपरिरम्भसम्भृतविशेषसौरभः ॥७१॥**

कदम्बों से सुगन्धित पवन ने, पहले ही भयंकर बन कर, वियोगी मिथुनों को मर्मान्तिक पीड़ा दी और जब वह नव विकसित मनोहर मालती का आलिंगन करके विशेष सुरभित हो गया, तब तो उसकी बात ही क्या ! ॥७१॥

**घनान्धकारेष्वपि वीतशङ्कं ययुः प्रियं कुङ्कुमगौरगात्र्यः ।**
**अनारतोद्दामवितायमानसौदामिनीदामनि लीनदेहाः ॥७२॥**

अभिसारिकायें, अपने गोरे शरीर पर केसर का लेप करके, निरन्तर वेग से चमकने वाली बिजलियों की आभा में अपने शरीरों को एक करती हुई, गहरे अन्धकार में भी, निःशंक होकर, अपने प्रियतमों के पास चली गईं ॥७२॥

**आस्वाद्य जम्बूरसमन्यपुष्टश्चुकूज यद्गर्जति तोयवाहे ।**
**भेरीमुखे भाङ्कृतिभाजि तन्त्रीनिक्वाणवत् तद्द्वितयं बभूव ॥७३॥**

जामुन का रस पीकर कोयल, मेघ के गरजने पर भी, कूकने लगी ; मेघ की गर्जना के साथ कोयल की कूक ऐसी लगी जैसे नगाड़े की ध्वनि के साथ वीणा का (पंचम) स्वर हो ॥७३॥

**निर्जीवं विरहिगणं करोतु कामं निर्जीवो नमुचिनिषूदनस्य चापः ।**
**आश्चर्यं यदमृतवृष्टिरब्दकीर्णा पान्थानां कवलयति स्म दीर्घमायुः ॥७४॥**

निर्जीव (ज्यारहित) इन्द्रधनुष यदि विरही व्यक्तियों को निर्जीव (जीवनरहित) बनाये तो आश्चर्य नहीं है, किन्तु इसका आश्चर्य अवश्य है कि मेघों से बरसने वाली अमृतवृष्टि (जल-वृष्टि) भी विरही पथिकों की दीर्घ आयु को खा रही है ! ॥७४॥

**नभसि सान्द्रतमःस्पृशि विश्वदृङ्मुषि तमोमणयः स्फुरितत्विषः ।**
**घनघरट्टविकुट्टितचन्द्रमःप्रकटरेणुनिभाः परिबभ्रमुः ॥७५॥**

घने अन्धकार से व्याप्त आकाश के संसार की दृष्टि को हर लेने पर, चमकने वाले खद्योत (जुगनूं) एसे लग रहे थे मानों बादलों की (गरजने वाली) चक्की में पीसे गये चन्द्रमा के कण हों ॥७५॥

**द्युमणिकनकगोले तोयदाङ्गारगर्भे कुलिशकृतहुताशे प्रावृषा धम्यमाने ।**
**प्रबलपवनवेगात् सर्वतः सारितार्चिःप्रततिरचिररोचिर्व्याजतो जृम्भते स्म ॥७६॥**

वर्षाकाल रूपी सुनार चन्द्रमा रूपी सोने के गोले को बादल रूपी कोयलों के बीच में रख कर वज्ररूपी आग में प्रबल पवन के वेग से धौंक रहा है जिससे बिजली रूपी ज्वालायें चारों ओर उठ रही हैं ॥७६॥

---

(७४) निर्जीवो ज्यारहितः । अब्दकीर्णा मेघमुक्ता । अमृतवृष्टिः जलवृष्टिः ।
(७५) तमोमणयः खद्योताः ।

**घनतमसि विलीने सोमसूर्यप्रसङ्गे जगति जलनिमग्ने करवे पङ्कजेऽपि ।**
**विरहमनुभवन्ती सङ्गमं च स्वभर्त्रा रजनिदिवसभेदं चक्रवाकी विवेद ।।७७।।**

चन्द्र और सूर्य के बादलों के घने अन्धकार में छिप जाने पर तथा कुमुद और कमल के जल में डूब जाने पर, अपने पति का वियोग और संयोग अनुभव करने वाली चकवी ही रात और दिन के अन्तर को जानती थी ।।७७।।

**प्रावृड्वल्ली जलधरदलस्यान्तरे द्योतिताशं**
**विद्युद्व्याजात् कुसुमनिकरं यत् करालं बभार ।**
**तस्योद्रिक्तं समजनि फलं हन्त ! तत्कालमेव**
**प्राणत्यागो रमणविरहव्याकुलानां वधूनाम् ।।७८।।**

वर्षा ऋतु रूपी लता ने मेघ रूपी पत्तों में विजली रूपी भीषण और चमकीले पुष्प-समूह को धारण किया जिसमें शीघ्र ही प्रियतमों के विरह से व्याकुल रमणियों का प्राणत्याग रूपी बड़ा फल लगा ।।७८।।

**गुरुध्वानेनैव प्रतिनगरमध्वन्यसुदृशां**
**वितन्वानो मूर्च्छां सपदि कृतकृत्योऽपि कुतुकात् ।**
**व्यपेतज्याबन्धं रतिरमणबन्धुर्बलभिदो**
**धनुः शोभालोभाद् वपुषि विभरामास मुदिरः ।।७९।।**

कामदेव का मित्र मेघ अपनी भयंकर गर्जना से ही प्रत्येक नगर में विरहिणी स्त्रियों को मूर्छित करके यद्यपि कृतकार्य हो गया था, तथापि कुतूहलवश अपनी शोभा बढ़ाने के लिये उसने प्रत्यञ्चारहित इन्द्रधनुष को शरीर पर धारण किया ।।७९।।

**अथ नरपतिवर्यः प्रावृषं यापयित्वा**
**यदुपतिपदलक्ष्म्याऽलङ्कृतासु स्थलीषु ।**
**नभसि मुदिररिक्ते मुक्तनिद्रे मुकुन्दे**
**प्रमथपतिनगर्याः सेवनाय प्रतस्थे ।।८०।।**

इसके बाद राजाओं में श्रेष्ठ सुर्जन, भगवान् श्रीकृष्ण की पद-लक्ष्मी से अलंकृत स्थानों में (वृन्दावन आदि में) वर्षा ऋतु बिता कर आकाश के मेघरहित हो जाने पर और भगवान् विष्णु के जाग जाने पर (देवोत्थापिनी एकादशी के बाद) भगवान् शिव की काशी पुरी का सेवन करने के लिये रवाना हुये ।।८०।।

इति सुर्जनचरितमहाकाव्ये अष्टादशः सर्गः

---

(७९) मुदिरो मेघः।

# एकोनविंशतितमः सर्गः

नीत्वा दिनानि कतिचित् पथि कौतुकेन
तीर्थानि पावनतमानि निषेवमाणः ।
स्ववर्वाहिनीयमुनयोः प्रमना मनोज्ञं
सम्भेदमाप मकरस्पृशि चण्डभानौ ॥ १ ॥

प्रसन्न राव सुर्जन, मार्ग में, कुतूहलवश, पवित्रतम तीर्थों का सेवन करते हुये, कुछ दिन बिता कर, (माघ महीने में ) मकरसंक्रान्ति के समय गंगा और यमुना के सुन्दर संगम पर (प्रयाग) पहुँचे ॥ १ ॥

यस्मिन् बबन्ध सुषुमामरविन्दबन्धोः पुत्री समेत्य सुरलोकतरङ्गवत्या ।
निर्यद्विमुक्तविशदच्छविकञ्चुकार्धा पापावलीकवलने प्रसृतेव सर्पी ॥ २ ॥

संगम में सूर्यपुत्री यमुना भगवती गङ्गा से मिल कर इस प्रकार सुशोभित हो रही है मानों पाप-समूह को निगलने के लिये बढ़ने वाली साँपिन हो जिसकी सफेद चमकती हुई केंचुल आधी उतर चुकी हो और आधी शरीर पर स्थित हो। (यमुनाजल का रंग नीला है और गंगाजल का सफेद) ॥ २ ॥

सत्यं सितासितजुषौ सरितावभूतां मुक्तिश्रियोऽतिरुचिरे किल चामरे द्वे ।
तस्याः समीपतरतामनुपेयिवांसं न ह्येतयोः स्पृशति पावनगन्धवाहः ॥ ३ ॥

सचमुच ये सफेद और नीली नदियाँ मोक्ष-लक्ष्मी के दो अत्यन्त सुन्दर चंवरों के समान हैं, क्योंकि इनका पवित्र पवन उस व्यक्ति का स्पर्श नहीं कर सकता जो मोक्ष-लक्ष्मी के काफी पास न आ गया हो ॥ ३ ॥

स्फारे फणाधरपतेः फणचक्रवाले पूर्णं पुराणपुरुषस्य यथा शरीरम् ।
पक्षान्तपूरितकलस्य शरत्सुधांशोर्बिम्बे यथा पृथुतरं प्रतिबिम्बमुर्व्याः ॥ ४ ॥
गीर्वाणनायकमतङ्गजराजगण्डे माध्वीभुजामविकलं च यथा कदम्बम् ।
आवर्तमध्यपतितः सुरनिम्नगाया रेजे पतङ्गदुहितुर्नितरां तरङ्गः ॥५॥

यमुना की (नीली) लहर गंगा की (सफेद) भँवर से मिल कर इस प्रकार सुशोभित हो रही है जैसे भगवान् विष्णु का (नीला) शरीर शेषनाग के (सफेद) विस्तृत फण-समूह पर शोभित होता है, अथवा जैसे पृथ्वी का बड़ा (नीला) प्रतिबिम्ब शरत्पूर्णिमा के (शुभ्र) चन्द्र-बिम्ब पर शोभित होता है, अथवा जैसे (नीले) भ्रमरों का निरन्तर समूह देवराज इन्द्र के ऐरावत हाथी के (श्वेत) गण्डस्थल पर शोभित होता है ॥ ४–५॥

---

(२–६) रघुवंशे (१३, ५४–५८) कालिदासैरुक्तं––'क्वचित् प्रभालेपिभिरिन्द्रनीलैर्मुक्तामयी यष्टिरिवानुविद्धा। अन्यत्र माला सितपंकजानामिन्दीवरैरुत्खचितान्तरेव ॥ क्वचित् खगानां प्रियमानसानां कादम्बसं-

**वारां भ्रमे कमलवल्लभकन्यकायाः पाथः क्वचिन्मिलितमम्बरशैवलिन्याः ।**
**आभासते स्म शतपत्रमिवावदातं नाभीह्रदान्तरगतं पतगेन्द्रकेतोः ॥ ६ ॥**

और कहीं पर यमुना की भँवर से गंगा की लहर मिल कर इस प्रकार सुशोभित हो रही है जैसे भगवान् विष्णु की नाभि में लगा हुआ श्वेत कमल हो ॥ ६ ॥

**निर्वर्त्य कृत्यमुचितं रुचितं च तत्र दानं स दानवरिपौ विनिवेशितात्मा ।**
**तप्त्वा तपांसि तपसि प्रसितो यशोभिर्विश्वेशदर्शनसमुत्कमनाः प्रतस्थे ॥७॥**

भगवान् विष्णु में मन लगाने वाले राव सुर्जन प्रयाग के त्रिवेणी संगम में उत्तम दान देकर और उचित कार्य समाप्त करके तथा तप करके यश से शुभ्र बने हुये, भगवान् विश्वनाथ के दर्शन की उत्कंठा के कारण काशी की ओर रवाना हुये ॥ ७ ॥

**निःश्रेयसश्रिय उदार विहारभूमिः सौभाग्यसिद्धिरखिलावनिमण्डलस्य ।**
**प्राप्ता प्रिया पुररिपोरथ पार्थिवेन वाराणसी सुकृतसारभृतामुपास्या ॥८॥**

इसके बाद राव सुर्जन भगवान् विश्वनाथ की प्रिय नगरी काशी पहुँचे, जो पुण्यात्मा पुरुषों द्वारा सेव्य है, जो समस्त भूमंडल की सौभाग्यसिद्धि है और जो मोक्ष-लक्ष्मी की उदार विहार-भूमि है ॥ ८ ॥

**आनन्दसान्द्रपुलकावलितुन्दिलाङ्गमन्तःप्रसादविशदाननमीशमुर्व्याः ।**
**गोपाल इत्यभिधया प्रथितस्तदानीं व्यासोऽवदत् विदिततीर्थवरप्रभावः ॥९॥**

तीर्थ श्रेष्ठ वाराणसी की महिमा जानने वाले राजपुरोहित गोपाल व्यास ने आनन्द के कारण होने वाले घने रोमांच से प्रफुल्लित अंग वाले और हृदय की प्रसन्नता के कारण खिले हुये मुख वाले राजा सुर्जन से इस प्रकार निवेदन किया ॥ ९ ॥

**संवर्तवर्तुलितमेघघटाविमुक्तमर्यादसागरजलेऽपि न या निमज्जेत् ।**
**यां न प्रतीपयति कल्पसमीरणोऽपि याऽपेक्षते क्वचन नापि गुणाभियोगम् ॥१०॥**
**उत्तारयत्यखिलमातरमन्तरेण यत्रेश्वरः सपदि दक्षिणकर्णधारः ।**
**दुष्पारसंसृतिमहार्णवलङ्घनाय काऽपीयमायतिमती तरणिर्नराणाम् ॥११॥**

यह वह काशी है जो प्रलय काल में मँडराने वाली घनघोर मेघघटा द्वारा बरसाये गये जल के कारण मर्यादा छोड़ देने वाले समुद्र के जल में भी नहीं डूबती, जिसे प्रलय का भयंकर वायु भी नहीं हिला पाता और जिसे अपने गुणों के लिये अन्य किसी की अपेक्षा नहीं है। यह काशी दुष्पार भवसागर के पार जाने वाले पुरुषों के लिए एक अद्भुत विशाल नौका है जिस पर बैठा कर भगवान् शिव, एक चतुर नाविक के समान, दाहिने कान में तारक मंत्र का उपदेश देकर, सबको, बिना कुछ खेवाई लिये, पार कर देते हैं ॥१०–११॥

---

सर्गवतीव पंक्तिः । अन्यत्र कालागुरुदत्तपत्रा भक्तिर्भुवश्चन्दनकल्पितेव ॥ क्वचित् प्रभा चान्द्रमसी तमोभिश्छायाविलीनैः शबलीकृतेव । अन्यत्र शुभ्रा शरदभ्रलेखा रन्ध्रेष्विवालक्ष्यनभःप्रदेशा ॥ क्वचिच्च कृष्णोरगभूषितेव भस्माङ्गरागा तनुरीश्वरस्य । पश्यानवद्याङ्गि ! बिभाति गङ्गा भिन्नप्रवाहा यमुनातरङ्गैः ॥ समुद्रपत्न्योर्जलसन्निपाते पूतात्मनामत्र किलाभिषेकात् । तत्वावबोधेन विनापि भूयस्तनुत्यजां नास्ति शरीरबन्धः ॥' इति ।

**आरोहतः कुतुकतो रजनीष्वमुष्याः प्रासादशैलशिखरं शशिशेखरस्य ।**
**सद्यस्तिरोहितशिरःस्थितबालचन्द्रः पूर्णः कलानिधिरुपैति किरीटभावम् ॥१२॥**

जब (पूर्णिमा को) रात में कुतूहलवश भगवान् शिव इस काशी के विशाल महल के शिखर पर चढ़ते हैं तब (आकाशस्थित) पूर्ण चन्द्र, भगवान् के मस्तक पर विराजमान बालचन्द्र को ढक कर स्वयं किरीट बन जाता है ॥१२॥

**निर्मथ्य नीरनिधिमुद्धतमादितेयाः पीत्वाऽमृतान्यपि भयं मुमुचुर्न मृत्योः ।**
**मृत्युः स्वयं प्रवितरत्यमृतं यदस्यां कीटोऽपि येन सुतरामकुतोभयः स्यात् ॥१३॥**

देवों ने समुद्र को अत्यन्त वेग से मथ कर अमृत पिया, फिर भी उन्हें मृत्यु के भय से छुटकारा नहीं मिल सका, किन्तु इस काशी में स्वयं मृत्यु अमृत बाँटती है जिस कारण तुच्छ कीड़ा भी अत्यन्त निर्भय हो जाता है। (काशी में मरने वालों की मुक्ति हो जाती है।) ॥१३॥

**आख्याय कर्णपदवीमनुजन्मभाजां मन्त्रं मृगाङ्कमुकुटः किल तारकाख्यम् ।**
**आश्चर्यमत्र भगवान् गुरुरप्यदम्भमात्मानमन्तसदि सादरमर्पयेद् यत् ॥१४॥**

काशी में मरने वालों के दाहिने कान में स्वयं भगवान् शिव तारक मंत्र सुनाते हैं और आश्चर्य है कि भगवान् शिव, गुरु होकर भी, अपने आपको सर्वतोभावेन उस शिष्य को सादर अर्पण कर देते हैं! (लोक में तो जब शिष्य अपने आपको सर्वतोभावेन गुरु को सादर अर्पण कर देता है तब गुरु उसे मंत्रोपदेश देते हैं, किन्तु यहाँ भगवान् शिव मंत्रोपदेश देकर अपने आपको शिष्य को अर्पण कर देते हैं अर्थात् उसका भवबन्धन छुड़ा कर उसे शिव-स्वरूप बना देते हैं) ॥१४॥

**ज्योतिर्मयी जयति पञ्चमुखस्य पञ्चक्रोशात्मिकातनुरियं जगदुज्वलश्रीः ।**
**पञ्चत्वमत्र भजतां नहि पञ्चभूतैर्भूयः परस्परमहो मिलनं कदापि ॥१५॥**

काशी की यह पंचक्रोशी (पंचकोसी) पंचमुख भगवान् शिव का विश्व में अद्वितीय शोभा वाला ज्योतिर्मय पाँच कोस लम्बा शरीर है; इसमें पंचत्व प्राप्त करने वाले (मरने वाले) प्राणियों का फिर कभी पंच महाभूतों से मेल नहीं होता (उन्हें फिर जन्म नहीं लेना पड़ता।) ॥१५॥

**भैक्ष्यव्रतैर्भ्रमणतो भुवनत्रयस्य वैकुण्ठलोकगमनेन न यन् निरस्तम् ।**
**तत् पञ्चमं कमलजस्य कपालमस्याः स्पर्शात् कपालिकरतस्त्वरितं पपात ॥१६॥**

भिक्षा व्रत लेकर तीनों लोकों में घूमने पर भी और वैकुंठ लोक जाने पर भी जो नहीं गिर सका वह ब्रह्मा जी का पाँचवाँ मस्तक, काशी में आते ही, भैरव जी के हाथ से तुरन्त गिर पड़ा। (सती देवी विवाह के समय जब अग्नि की परिक्रमा कर रही थीं तब उनके पैर के अँगूठे को देख कर ब्रह्मा जी कामविह्वल हो गये। यह देख कर भैरव जी ने शिव जी की आज्ञा से ब्रह्मा जी का पाँचवा मस्तक काट दिया। भैरव जी को आज्ञा हुई कि वे ब्रह्मा जी का कटा हुआ मस्तक अपने हाथ में लेकर तीनों लोकों में घूमें और जहाँ कहीं वह मस्तक अपने आप नीचे गिर जाय वहीं भैरव जी अपने आपको पातकमुक्त समझ लें। वह मस्तक काशी के कपालमोचन नामक स्थान पर गिरा था।) ॥१६॥

---

(१४) अन्ते समीपे सीदति तिष्ठतीति अन्तसत् तस्मिन् अन्तसदि अन्तेवासिनि शिष्ये इत्यर्थः।

(१६) कपालिकरतः भैरवहस्तात्। विवाहसमये अग्नि परिक्रमन्त्याः सतीदेव्या अंगुष्ठमात्रदर्शनेन कामविह्वलस्य ब्रह्मणः पञ्चमं शिरः परमेश्वराज्ञया भैरवश्चकर्त। तत्पातकनिवृत्यर्थं हस्ते तत्कपालमादाय ब्रह्माण्डं भ्रमतो भैरवस्य काश्यां यत्र तत् कपालं पपात भैरवश्च पातकविमुक्तो जातस्तत् तीर्थं कपालमोचननाम्ना प्रथितम्।

**ब्रह्माण्डलग्नवपुषो महसां समूहैरस्यास्तिरस्कृतविसृत्वररश्मिजालम् ।**
**मध्ये नभो विहरमाणमशीतभानोर्बिम्बं दिवातनसुधाकरवद् व्यलोकि ॥१७॥**

ब्रह्माण्ड में लग्न शरीरवाली इस काशी के तेज समूह के आगे आकाश में चलने वाले सूर्य का चारों ओर फैलने वाला किरण-समूह भी हतप्रभ हो जाता है और सूर्यबिम्ब दिन में दिखाई देने वाले चन्द्रमा के समान फीका दिखाई पड़ता है ॥१७॥

**रुद्रान् दधद्भिरभितो वरिवस्यमानान् वित्ताधिपैर्विततशृङ्गविलङ्घिताशैः ।**
**अत्युज्वलस्फटिकर्निमितहर्म्यदम्भात् कैलासभूधरशतैरिव शोभतेऽसौ ॥१८॥**

अपने ऊँचे शिखरों से दिशाओं को भी लाँघने वाले और समृद्ध धनपतियों द्वारा पूजित रुद्रों को (रुद्रप्रतिमाओं को) चारों ओर धारण करने वाले अत्यन्त उज्वल संगमरमर के बने हुये मन्दिरों के कारण यह काशी, अपने ऊँचे शिखरों से दिशाओं को भी लाँघने वाले और कुबेर द्वारा पूजित रुद्रों को चारों ओर धारण करनेवाले सैकड़ों शुभ्र कैलास पर्वतों से सेवित प्रतीत होती है ॥१८॥

**अस्यां शिरो नमयतो नितरां शिरांसि चत्वारि तावदितराणि समुद्भवन्ति ।**
**एनां निभालयति यः खलु शुद्धभावो भाले समुल्लसति तस्य च दृक् तृतीया ॥१९॥**

जो इस काशी को शुद्ध भाव से सिर झुका कर प्रणाम करता है उसके चार सिर और हो जाते हैं और जो इसको शुद्ध भाव से देखता है उसके ललाट में तीसरा नेत्र चमकने लगता है अर्थात् वह भगवान् शिव के समान पंचमुख और त्रिनेत्र बन जाता है ॥१९॥

**एनामनङ्गदमनस्य तनुं द्वितीयां सामान्यभूमिमिव मोहभृतो वदन्ति ।**
**पश्यन्ति सन्ततमुपेतसमाधयस्तु ज्योतिर्विभिन्नजगदण्डकटाहकूटाम् ॥२०॥**

यह काशी कामदेव को भस्म करने वाले भगवान् शिव का दूसरा शरीर है। जो इसे साधारण भूमि समझते हैं वे मोहान्धकार में मग्न है। समाधि लगाने वाले योगी इसे ब्रह्माण्डसमूहातीत ज्योति के रूप में निरन्तर देखते हैं ॥२०॥

**कृत्वाप्यनेकदुरितानि दुरुत्तराणि त्यक्त्वा कथञ्चिदिह देहभृतः शरीरम् ।**
**नालोकयन्ति शमनस्य कठोरमास्यमीशस्य मेदुरमदस्य यथा निरीहाः ॥२१॥**

अनेक घोर पाप करने वाले प्राणी भी यदि किसी प्रकार काशी में शरीर छोड़ दें, तो वे यमराज का भयंकर मुख नहीं देखते, जिस प्रकार आप्तकाम मुनि, जिनको कोई इच्छा या स्वार्थ नहीं है, मदान्ध धनाढ्य का मुँह नहीं ताकते ॥२१॥

**मूर्तिः पुरी च करुणा च शरीरिणीयं सिद्धिर्नवा च नवमी नवचन्द्रमौलेः ।**
**स्वप्नेऽपि नाल्पतपसो नयनावकाशमालम्बते किमुत सम्भृतपातकस्य ॥२२॥**

यह काशी पुरी भगवान् चन्द्रचूड़ शिव की मूर्तिमती करुणा है ; यह उनकी (पृथ्वी, अप्, तेज, वायु, आकाश, चन्द्र, सूर्य और होता इन अष्ट मूर्तियों से विलक्षण) नवीन नवीं मूर्ति है ; यह उनकी (अणिमा, महिमा, गरिमा आदि अष्ट सिद्धियों से विलक्षण) नवीन नवीं सिद्धि है। अल्प तप वाले प्राणी स्वप्न में भी इसे नहीं देख पाते, फिर महान् पापियों की तो बात ही क्या ! ॥२२॥

---

(१९) पञ्चमुखस्त्रिनेत्रः शिवस्वरूपो भवतीत्यर्थः ।

**यत्रोद्भवत्युपरमो भ्रमतो जनस्य यत्र प्रबोधजननी किल दीर्घनिद्रा ।**
**अन्तोऽप्यनन्तविभवं वितनोति यत्र यत्रान्धकोऽपि भवति ध्रुवमन्धकारिः ॥२३॥**

इस काशी की महिमा अद्भुत है। संसारचक्र में घूमने वाले पुरुष का यहाँ भ्रम (भ्रान्ति: माया) छूट जाता है; यहाँ मृत्यु भी विशुद्ध ज्ञान को उत्पन्न करती है; यहाँ अन्त होने पर अनन्त वैभव प्राप्त होता है; यहाँ अन्धा भी अन्धक दैत्य के शत्रु शिव के समान बन जाता है ॥२३॥

**कल्पान्तकन्दलितताण्डवविभ्रमेण संवृत्य कृत्यनिपुणो निखिलप्रपञ्चम् ।**
**अस्यां गुणातिगतनौ सगुणं शरीरं देवो निलीनयति दिव्यधुनीवतंसः ॥२४॥**

परमकुशल गंगाधर भगवान् शिव प्रलयकाल में अपना तांडव नृत्य दिखला कर, इस सम्पूर्ण प्रपञ्चात्मक जगत् का संहार करके, अपने सगुण शरीर को गुणातीत शरीर वाली इस काशी में छिपा देते हैं ॥२४॥

**यस्मिन्नचिन्त्यविभवे भुवनैकहेतौ ब्रह्माण्डगोलकशतानि परिप्लवन्ते ।**
**गङ्गेति बिभ्रदतिपावननामधेयं सोयं पुरः प्रवहते पयसां समूहः ॥२५॥**

जिसकी महिमा अनिर्वचनीय है, जो जगत् का एक मात्र कारण है और जिसमें सैकड़ों ब्रह्माण्ड रूपी गोले तैरा करते हैं, वही जलसमूह, अत्यन्त पवित्र 'गंगा' नाम को धारण करके यहाँ बह रहा है। (मनु के अनुसार सबसे पहले ब्रह्मा जी ने जल का निर्माण किया और उसमें जो जगत् का बीज छोड़ा वही ब्रह्माण्ड बना।) ॥२५॥

**दृप्यत्त्रिविक्रमपदाक्रमणेन भिन्नब्रह्माण्डभाण्डविवरेण रयात् पतन्तीम् ।**
**विश्वस्य पावनकरीं विधुमौलिरेनां स्रग्दामवत् सपदि शेखरयाञ्चकार ॥२६॥**

जब वामन भगवान् का बढ़ा हुआ पैर स्वर्ग में पहुँचा तो उसकी ठोकर से वहाँ रक्खे हुये ब्रह्माण्डरूपी भाँडे में छेद हो गया और उसमें से (सृष्टि का आदि कारण तथा) विश्व को पवित्र करने वाला जल-समूह 'गंगा' नाम से वेग से नीचे गिरने लगा, तब भगवान् शिव ने, जिनके मस्तक पर पहले से ही (अमृत बरसाने वाला) चन्द्रमा विराजमान था, इस गंगा को (अमृत वर्षी चन्द्र से भी उत्कृष्ट समझ कर) शीघ्र ही पुष्पमाला के समान अपने मस्तक का आभूषण बनाया। (जब वामन भगवान् ने राजा वलि की दी हुई तीन पैर भूमि नापने के लिये अपना एक पैर स्वर्ग में रक्खा तब ब्रह्मा जी ने अपने कमण्डलु के जल से उस पैर को पूजा और वही जल 'गंगा' बन कर तीनों लोकों में बहने लगा।) ॥२६॥

---

(२३) दीर्घनिद्रा मृत्युः। 'काश्यां मरणान् मुक्ति' रिति।

(२६) वामनो ब्रह्मचारिस्वरूपं धृत्वा यज्ञं कुर्वतो वलेः पदत्रयपरिमाणां भूमिमयाचत। दत्तायां च तस्यां उन्मापनाय एकं पदमूर्ध्वं प्रक्षिपतो वामनस्य ब्रह्मलोकं गतं तत् ब्रह्मा स्वकमण्डलुजलेन प्रक्षालितवान्। तदेव जलं गङ्गास्वरूपेण त्रिभुवनं पवित्रयति। तत्र कविनोत्प्रेक्षितं ऊर्ध्वं प्रेरितेन पदेनोपरिस्थितो ब्रह्माण्डकटाहो भग्नस्तदानीं विभिन्नात् कटाहात् जलमुपरिस्थितं गङ्गारूपेण प्रावहत्। ब्रह्माण्डं च कारणजलराशिमध्ये तिष्ठतीति 'अप एव ससर्जादौ' इति मानवधर्मशास्त्रे स्थितम्।

**तीव्रेण तेन तपसेह भगीरथस्य भाग्येन भूतलजुषामथवाऽवतीर्णा ।**
**सोढुं विभोर्विरहखेदमपारयन्ती सेयं पुरीं पुररिपोः परिरभ्य तस्थौ ॥२७॥**

यह गंगा भगीरथ के तीव्र तप के कारण अथवा मर्त्यलोक के निवासियों के सौभाग्य के कारण यहाँ उतरी है। अपने स्वामी भगवान् शिव का विरह कष्ट न सह सकने के कारण यह गंगा, भगवान् शिव की नगरी काशी का आलिंगन करके एक सी गई हैं (काशी में गंगा बहुत धीरे बहती है। सगर राजा के वंशज भगीरथ अपने पूर्वजों का उद्धार करने के लिये तीव्र तपस्या करके गंगा को स्वर्ग से पृथ्वी पर लाये थे। इसीलिये गंगा का नाम भागीरथी पड़ा। उस समय स्वर्ग से गिरने वाली गंगा को भगवान् शिव ने अपनी जटा में रोका था। ॥२७॥

**प्रागेव पुण्यसलिलाऽथ हरेःपदाब्जं प्राप्ता ततोऽनुपरिपृष्टहरोत्तमाङ्गी ।**
**धर्मद्रवी यदि पुन र्मिलितेह काश्यां कोऽस्या महित्वमभिधातुमहोक्षमःस्यात् ॥२८॥**

यह गंगा (ब्रह्मा जी के कमण्डलु में रहने के कारण) पहले ही अत्यन्त पवित्र जल वाली थी, फिर विष्णु भगवान् के चरणारविन्द को पाकर यह और भी पुनीत हुई, और फिर भगवान् शिव के मस्तक का स्पर्श पाकर तो इसकी पवित्रता अनिर्वचनीय हो गई, और जब यह शिवपुरी काशी से मिल गई तो इसका जल, जल न रह कर, द्रवीभूत धर्म बन गया; ऐसी गंगा की महिमा का वर्णन करने में कौन समर्थ हो सकता है? ॥२८॥

**अम्भोमयी तनुरियं दनुजेन्द्रशत्रोः काशी पुरी पुररिपोः प्रकटेव मूर्तिः ।**
**अन्योन्यसङ्गमवशादुभयी पवित्रा कस्तारतम्यमनयोस्तनुतां मनीषी ॥२९॥**

यह गंगा भगवान् विष्णु का जलमय शरीर है और यह काशी पुरी भगवान् शिव की साक्षात् मूर्ति है; अतः दोनों ने आपस में मिल कर एक दूसरे को पवित्र बना दिया है। कोई भी बुद्धिमान् इनका तारतम्य नहीं बता सकता ॥२९॥

**अस्यां निधाय वसतिं विधिवत् सपर्यां विश्वेशितुर्विशदभक्तिविशुद्धचेताः ।**
**कर्मक्रमोचितमनुज्झितवानकामः शेषं समापय वयः समयैर्मुनीनाम् ॥३०॥**

अतः महाराज! आप इस काशी में रह कर भगवान् विश्वनाथ की विधिपूर्वक सेवा करते हुये पवित्र भक्ति से अपने चित्त को विशुद्ध कीजिये और निष्काम भाव से नित्य नैमित्तिक कर्म करते हुये, मुनियों के समान, अपनी शेष आयु व्यतीत कीजिये ॥३०॥

**इत्थं पुरोहितवचो नृपतिर्निशम्य सम्यक् समाहितमनाः स्वहितानुबन्धि ।**
**विश्राणनादिसुकृतान्यधिकाधिकानि सत्वोर्जितानि विदधे विधिवद् विधिज्ञः॥३१॥**

अपने राजपुरोहित के ये हितकारक वचन सुन कर नियमों को जानने वाले राजा सुर्जन अपने मन को ध्यानावस्थित बना कर, सत्वगुण के आधिक्य के कारण दानादि पुण्य कर्म विधिपूर्वक अधिकाधिक मात्रा में करने लगे ॥३१॥

---

(२८) धर्मद्रवी द्रवीभूतधर्मस्वरूपा।

(२९) रघुवंशे (१३, ७८) 'लंकेश्वरप्रणतिभंगदृढव्रतं तद् वन्द्यं युगं चरणयोर्जनकात्मजायाः। जेष्ठानुवृत्तिजटिलं च शिरोऽस्य साधोरन्योन्यपावनमभूदुभयं समेत्य॥' इति।

**ये येऽत्र सन्ति बधिरान्धकदीननग्ना गृह्णन्तु ते द्रुतमुपेत्य समीहितानि ।**
**एवं वदद्भिरनुगैः प्रतिसंध्यमस्य नित्यं निदेशपटहः परिताड्यते स्म ॥३२॥**

नित्य सन्ध्या समय राजा के अनुचर ढोल पीट पीट कर सुनना दिया करते थे कि जो जो बहरे, अंध, अपाहिज, नंगे और दीन व्यक्ति हों वे सब शीघ्र आकर अपनी इच्छित वस्तुयें ले लें ॥३२॥

**अन्नप्रवाहमनुवेलमनङ्गशत्रोः पुर्यां प्रवर्षति विशालकृपाकुलेऽस्मिन् ।**
**तद्वासिनां तनुभृतां भरणेषु चिन्तासन्तानमुज्झितवती चिरमन्नपूर्णा ॥३३॥**

महान् दयालु राव सुर्जन के शिव पुरी काशी में प्रति दिन अन्न की वर्षा करते रहने के कारण भगवती अन्नपूर्णा ने, बहुत समय तक, वहाँ रहने वाले प्राणियों के भरण पोषण की चिन्ता छोड़ दी थी ॥३३॥

**विश्राणयत्यनुदिनं ननु दीनबन्धौ तस्मिन्नसीमवसनान्यविशेषदृष्ट्या ।**
**आत्मस्वभावपरतन्त्रतया स्वतन्त्रोऽप्येकः परं पुरहरोऽजनि कृत्तिवासाः ॥३४॥**

दीनबन्धु राव सुर्जन के प्रतिदिन, समदृष्टि होकर, असीम वस्त्र वितरण करते रहने के कारण केवल एक स्वतन्त्र भगवान् शिव ही ऐसे बच रहे थे जो अपने स्वभाव से लाचार होकर गजचर्म धारण करते थे ॥३४॥

**म्लानानि हन्त वदनानि वनीयकानामालोकितुं न सहते स्म स भूमिभर्ता ।**
**दैन्यं तु दानविभवेन परोक्षमेव तेषां दयार्द्रहृदयो दवयाञ्चकार ॥३५॥**

दयार्द्रहृदय राव सुर्जन याचकों के मुरझाये हुये मुखों को नहीं देख सकते थे इसलिये उन्होंने पहले ही अपने दान वैभव से लोगों की दीनता जला डाली थी ॥३५॥

**वीक्ष्य द्विजातिगणकर्मपरीक्षणेषु कालातिपातमयमायतमन्तरायम् ।**
**विश्राणनव्यसनवान् विससर्ज वित्तं यज्ञोपवीतमवगत्य स वीतमायः ॥३६॥**

दान देना ही जिनका व्यसन था और जो माया के आवरण को हटा चुके थे वे राजा सुर्जन, ब्राह्मणोचित कर्मों की परीक्षा करने में विलम्ब रूपी बड़े भारी विघ्न को देख कर केवल यज्ञोपवीत देख कर ही (लोगों को ब्राह्मण मान लेते थे और) उन्हें दान दे देते थे ॥३६॥

**कैलासकौशलभृतो रचिता नृपेण देवालया रुरुचिरे दिवमुल्लिखन्तः ।**
**सिक्तस्य दानसलिलैः सततं तदीयैः शङ्के यशोमयतरोस्तरुणाः करीराः ॥३७॥**

राव सुर्जन ने कैलास के समान शुभ्र, सुन्दर और विशाल तथा आकाश को छूने वाले देव मन्दिर बनवाये जो ऐसे सुशोभित हो रहे थे मानों उनके दानसंकल्पों के जल से निरन्तर सींचे गये यश रूपी वृक्ष के नवीन अंकुर हों ॥३७॥

**खाताश्च तेन परितो विपुलास्तडागाः पद्माटवीपटिमरञ्जितराजहंसाः ।**
**येषु प्रविश्य विशदांशुमयूखमाला नक्तं मुहुर्मधुरिमादिगुणानधीते ॥३८॥**

राव सुर्जन ने चारों ओर कई बड़े बड़े तालाब खुदवाये जिनके कमलसमूह में अनुरक्त राजहंस क्रीड़ा किया करते थे और जिनमें रात्रि के समय चन्द्रमा की किरणें प्रवेश करके बार बार माधुर्य आदि गुणों को सीखा करती थीं ॥३८॥

**नो विद्महे नयविदाऽवनिपेन भूयः केनाशयेन विहिताः सलिलाशयास्ते ।**
**कामं तुषारसरसाः शतशः प्रणीतास्तस्य प्रदानपयसैव हि शैवलिन्यः ॥३९॥**

हम नहीं जानते कि विद्वान् राव सुर्जन ने किस आशय से वे तालाब खुदवाये जब कि उनके दान संकल्पों के जल की अत्यन्त शीतल सैकड़ों नदियाँ पहले से ही बह रही थीं ? ॥३९॥

**हैमं यदेव मणिभिर्भृतमुन्मयूखैर्विश्वेश्वराय झटिति प्रवरं किरीटम् ।**
**अह्नाय तद् विनिमयेन नवीनमिन्दुं देवोऽपि शेखरतया भृतवानमुष्मै ॥४०॥**

जब राव सुर्जन ने शीघ्र ही उज्वल किरणों वाले मणियों से जड़ा हुआ सोने का श्रेष्ठ किरीट भगवान् विश्वनाथ पर चढ़ाया तब भगवान् शिव ने भी झट उसके बदले में अपना नवचन्द्र रूपी किरीट राजा के मस्तक पर रख दिया अर्थात् शीघ्र राजा को मुक्त करके उन्हें चन्द्रशेखर अर्थात् शिवस्वरूप बना दिया ॥४०॥

**किं पौरुषं यदिधिकाशि दधीचितुल्यस्तेने तुलामयमुपेष्यति मोक्षकाले ।**
**दानान्यदीनहृदयः कति वा न वारांस्तावन्ति हन्त निरवाहयदेत्य तीर्थम् ॥४१॥**

महर्षि दधीचि के समान दानवीर राव सुर्जन ने यदि अपना मोक्षकाल समीप आने पर काशी में तुलादान किया तो क्या बड़ी बात की ? उच्चहृदय वाले वे राजा ऐसे दान तो तीर्थ स्थानों में जाकर न जाने कितनी बार दे चुके थे ॥४१॥

**यस्यानुवेलममितानि वनीयकेभ्यो जाम्बूनदानि ददतो ववृते न तृप्तिः ।**
**तेनार्पणाय वसु यन्निहितं तुलायां तद्दानधर्मविहितस्थितिपालनाय ॥४२॥**

जिन राव सुर्जन को, याचकों को प्रति दिन अपरिमित सुवर्ण दान देने पर भी, तृप्ति नहीं हुई, उनका तुला पर धन चढ़ाना केवल दानधर्म के विधान की रक्षा करने के लिये था ॥४२॥

**कालेऽथ तस्य चरमे परमात्मरूपं रामाख्यतारकमनुं जपतः स्वबुद्धया ।**
**आगत्य कर्णकुहरान्तिकमन्धकारिः प्रीत्या चकार पुनरुक्ततयोपदेशम् ॥४३॥**

अन्त समय निकट आ जाने पर परमात्मस्वरूप 'राम' इस तारक मन्त्र का अपनी बुद्धि के अनुसार जप करने वाले राव सुर्जन के (दाहिने) कान के पास आकर भगवान् शिव ने प्रसन्न होकर, पुनरुक्ति करते हुये, उस मन्त्र का उपदेश दिया ॥४३॥

**भूरिप्रसादसुमुखोपि सदीश्वरोपि भृत्यं यथाविभवमेव पुरस्करोति ।**
**यद् वाहनं वृषभमम्बरमैभकृत्ति तस्मै ददे प्रमुदितोपि स कृत्तिवासाः ॥४४॥**

स्वामी चाहे कितना ही श्रेष्ठ क्यों न हो और चाहे कितना ही प्रसन्नमुख क्यों न हो जाय, तथापि वह अपने सेवक को पुरस्कार अपने वैभव के अनुरूप ही देता है, यही कारण था कि भगवान् शिव ने अत्यन्त प्रसन्न होकर भी राव सुर्जन को पहनने के लिये गजचर्म और सवारी के लिये बैल ही दिया (अर्थात् उन्हें मुक्त करके शिवस्वरूप बना दिया) ॥४४॥

**कल्पद्रुमः स जगतां सुमनोगणाय दत्वा फलानि कुसुमानि च शर्मदानि ।**
**पत्राणि चञ्चलतराण्यवकीर्य काले स्थाणुत्वमुत्तमयशाः स्थिरमाससाद ॥४५॥**

जिस प्रकार स्वर्ग का कल्पवृक्ष देवताओं को आनन्ददायक फल, फूल और पत्ते देता है, उसी प्रकार मर्त्यलोक के कल्पवृक्ष (कल्पवृक्ष के समान लोगों की इच्छा पूर्ण करने वाले) राव सुर्जन ने देवताओं को आनन्ददायक फल, फूल और बेल पत्र इत्यादि चढ़ाये तथा विद्वानों का आनन्ददायक फल फूल आदि से सत्कार करके उन्हें दानपत्र भेंट किये, और जिस प्रकार फल, फूल तथा पत्तों के न रहने पर वृक्ष स्थाणु (ठूँठ) रह जाता है, उसी प्रकार अस्थिर फल, फूल और पत्र देकर राव सुर्जन भी सदा के लिये स्थिर स्थाणु (शिव) बन गये ॥४५॥

**दिवोदासोप्यासीत् किल कतिपयानेव दिवसान्**
**पुरा यस्याः काश्याः सुकृतनयविद्वानधिपतिः ।**
**अपूर्वं नैपुण्यं किमपि कृतवान् सुर्जननृपो**
**यदैश्वर्यं तस्याः स्थिरतरमुपादत्त स कृती ॥४६॥**

पहले इस काशी के राजा नीतिकुशल और पुण्यात्मा दिवोदास भी हुये थे जिन्होंने कुछ दिन तक इस काशी में सुन्दर शासन किया था, किन्तु कुशल राजा सुर्जन ने न जाने कौन सी अपूर्व निपुणता की कि उन्होंने इस काशी का स्थिर ऐश्वर्य ग्रहण कर लिया (काशी में देहत्याग करके मुक्ति प्राप्त कर ली) ॥४६॥

**मध्येकाशि मधुद्विषा विरचिते चक्रेण शक्रादिभि-**
**र्दुष्प्रापे मणिकर्णिकेति मुनिभिर्गीतेऽथ तीर्थाधिपे ।**
**राजा शूरजनो मनोजरिपुणा दत्तस्वहस्तः कृती**
**त्यक्त्वा प्राकृतदेहमायतसुखे लीनः परे ब्रह्मणि ॥४७॥**

काशी के बीच में भगवान् विष्णु ने अपने सुदर्शन चक्र से जो इन्द्रादि देवों के लिये भी दुष्प्राप्य तीर्थ जिसे मुनि लोग मणिकर्णिका कहते हैं, (सुदर्शन चक्र से बनने के कारण इसे चक्रपुष्करिणी भी कहते हैं) बनाया उसी तीर्थश्रेष्ठ में राव सुर्जन, अपना भौतिक शरीर त्याग कर और भगवान् शिव द्वारा बढ़ाये हाथ को पकड़ कर, अखण्डानन्दरूप परब्रह्म में लीन हो गये ॥४७॥

**तत्पत्न्यः कनकावतीप्रभृतयो मग्नाः समिद्धार्चिषि**
**प्राप्याशु प्रकटोज्वलं कनकवद् रूपं गरिम्णाधिकम् ।**
**कल्पान्तावधि कल्पितेशवपुषा पत्या समं सङ्गताः**
**कायव्यूहभृतो नगेन्द्रदुहितुः संजज्ञिरे मूर्तयः ॥४८॥**

राव सुर्जन की कनकावती आदि पत्नियों ने चिता की अग्नि में जल कर शीघ्र अधिक गौर-

---

(४५) सुमनोगणाय देवसमूहाय विद्वद्वृन्दाय च। पत्राणि पर्णानि विल्वादिपत्राणि दानपत्राणि च। स्थाणुत्वं फलपुष्पपत्ररहितवृक्षत्वं शिवत्वञ्च।

(४६) दिवोदासः कियतो दिवसान् काश्यां सौराज्यं चकारेति काशीखण्डे स्पष्टम्।

(४७) अत एव मणिकर्णिका चक्रपुष्करिणी इत्यपि प्रथिता।

(४८) कल्पितं प्राप्तमीशस्य शिवस्य वपुर्विग्रहो येन तेन। कायव्यूहभृतः विविधदेहधारिण्याः।

वान्वित तथा सुवर्ण के समान उज्वल रूप प्राप्त किया और शिव शरीरधारी पति से सदा के लिये मिल कर वे भगवती पार्वती के विभिन्न रूप बन गईं ॥४८॥

**निरारम्भा रम्भाप्रभृतिसुररामा बवृतिरे**
**वृषा वीतातङ्कः समगत समग्रासनभुवा।**
**विकीर्य स्वाराज्यं तृणमिव परब्रह्मणि नृपे**
**रणस्तम्भोत्तंसे लयमयति शम्भोः करुणया ॥४९॥**

रणस्तम्भपुर के भूषण राव सुर्जन के, भगवान् शिव की कृपा के कारण, स्वर्ग के राज्य को तृणवत् ठुकरा कर परब्रह्म में लीन हो जाने पर, रंभा आदि स्वर्ग की अप्सरायें विफल-प्रयत्न हो गईं और इन्द्र निर्भय होकर अपने सारे सिंहासन पर फैल पसर कर बैठे। (अप्सरायें सोच रही थीं कि राव सुर्जन स्वर्ग में आवेंगे और वे उनके साथ भोग विलास करेंगी और इन्द्र को भय था कि उन्हें आधा सिंहासन देना पड़ेगा, किन्तु राव सुर्जन के परब्रह्म में लीन हो जाने पर अप्सराओं की आशा और इन्द्र का भय, दोनों, विफल हो गये) ॥४९॥

**किं चित्रं यदि नाम चित्रचरितं चारुस्वरैश्चारणा-**
**स्तं गायन्ति सहाङ्गनाभिरनिशं मेरौ निषण्णाः सुखम् ।**
**ब्रह्मीभूतमुपास्यतामुपगतं विश्वेषु यं विश्रुतं**
**ब्रह्माण्डान्तरवासिनोऽपि वशिनो ध्यायन्ति निर्वासनाः ॥५०॥**

विश्वविख्यात और अद्भुत चरित्रवाले राव सुर्जन के यश को यदि गन्धर्व, अपनी स्त्रियों के साथ, सुमेरु पर्वत पर सुख से बैठ कर सदा अपने सुन्दर स्वरों से गाते हैं तो इसमें क्या आश्चर्य है? ब्रह्मीभूत हो जाने के कारण सबके पूज्य बने हुये राव सुर्जन का तो ब्रह्माण्ड में रहने वाले वासनारहित योगी भी ध्यान किया करते हैं ॥५०॥

इति सुर्जनचरितमहाकाव्ये एकोनविंशतितमः सर्गः ।

---

(४९) सुर्जननृपः श्रीविश्वनाथानुग्रहात् काश्यां देहपातेन स्वर्गराज्यं तृणमिव परित्यज्य परब्रह्मणि यदा लीनस्तदा रम्भाप्रभृतयोप्सरसः राज्ञि शृङ्गारभावनाविरहिताः सम्पन्नाः, इन्द्रश्च राजा स्वर्गसिंहासनार्धमधिकुर्यादिति भयविमुक्तः समग्रसिंहासनोपभोगेन पूर्णानन्दमन्वभवत् ।

# विंशतितमः सर्गः

शान्ति गते सुर्जनरायसूर्ये सद्योभिभूतास्तमसा घनेन ।
व्यापारहीनाः परितोऽतिदीना द्विजा निजावासमुपेत्य लीनाः ॥ १ ॥

राव सुर्जन रूपी सूर्य के अस्त हो जाने पर, चारों ओर घने अन्धकार से अभिभूत, व्यापार-हीन, अत्यन्त दीन द्विज (ब्राह्मण ; पक्षी) अपने अपने घरों में (घोंसलों में) जाकर छिप गये ॥१॥

पात्रं निपीताम्बु यथाम्बुराशेरुद्वान्तरत्नं च धरान्तरालम् ।
त्यक्तं तथा तेन तथाविधेन तमोमयं विश्वमिदं बभूव ॥ २ ॥

ऐसे राव सुर्जन द्वारा त्यक्त यह संसार अन्धकारमय हो गया और जल पी लेने पर रिक्त पात्र के समान अथवा रत्न निकाल लिये जाने पर समुद्र के रिक्त धरातल के समान शून्य हो गया ॥२॥

अर्थेन शून्यं सदनं बुधानां शब्देन शून्यं वदनं कवीनाम् ।
वदान्यशून्या ववृते धरित्री तस्यावसाने जगदुत्तमस्य ॥ ३ ॥

जगत् में उत्तम राव सुर्जन के शान्त हो जाने पर विद्वानों का घर अर्थ (धन) से रहित हो गया, कवियों का मुख शब्द से रहित हो गया और पृथ्वी महादानी से रहित हो गई ॥ ३ ॥

निर्वाहके सर्वमनीषितानां निर्वाणमासेदुषि तत्र नाथे ।
चिरान् निवृत्ता नयनाम्बुधारा दरिद्रदाराननमाललम्बे ॥ ४ ॥

सब लोगों की इच्छाओं को पूर्ण करने वाले राव सुर्जन के मोक्ष प्राप्त कर लेने पर, बहुत देर बाद जो आँसुओं की धारा रुकी उसने जाकर दरिद्रों की पत्नियों के मुखों की शरण ली ॥ ४ ॥

आकारणं कारणमन्तरेण कालेप्यकालेऽपि कुतूहलेन ।
पुण्यैरशून्यानतिसूनृतानि स्मितोपगूढानि च भाषितानि ॥ ५ ॥
वयस्यताविष्कृतिपेशलानि राज्ञोऽपि सप्रश्रयचेष्टितानि ।
प्रेम्णोपनीतान्यपि भोज्यवस्तून्यल्पप्रमाणान्यपि मानदानि ॥ ६ ॥
दिने दिने दैन्यविदारणानि दानान्यनेकानि सभूषणानि ।
अनुक्षणं भावयतां द्विजानां सभासदां सीदति न स्म शोकः ॥ ७ ॥

समय पर अथवा असमय पर, सकारण अथवा अकारण, राव सुर्जन के कुतूहलवश कहे गये वे पुण्यशील सत्य वचन , वे मुस्कान युक्त भाषण, राजा होने पर भी उनकी मित्रता को सूचित करने में चतुर वे प्रणययुक्त चेष्टायें, थोड़े होने पर भी सम्मान को व्यक्त करने वाले प्रेमपूर्वक लाये गये वे खाद्य पदार्थ, और प्रतिदिन दीनता को नष्ट करने वाले और आभूषणों से युक्त वे नाना प्रकार के दान—इन सबको प्रति पल याद करने वाले द्विजातीय सभासदों का शोक कम नहीं हुआ ॥५–७॥

**अथाभिषेक्तुं नृपतेस्तनूजं भोजं भुजास्कन्दितवैरिवृन्दम् ।**
**सन्मन्त्रभाजः सचिवाः पुराणाः पुरोधसश्च त्वरिता बभूवुः ॥ ८ ॥**

इसके बाद राव सुर्जन के पुत्र राजकुमार भोज का, जिन्होंने अपने भुजबल से शत्रुसमूह को पराजित कर दिया था, राज्याभिषेक करने के लिये, उत्तम नीति के ज्ञाता प्राचीन मंत्री और पुरोहित शीघ्रता करने लगे ॥ ८ ॥

**जित्वा जगद् गुर्जरराजभूमिं हूमायुँजस्य प्रसभं जिघृक्षोः ।**
**अग्रेसरीभूय रिपून् विनिघ्नंस्ततान तोषं पृथुपौरुषो यः ॥ ९ ॥**

जगत् को जीत कर गुर्जर देश को हठात् अपने आधीन करने की इच्छा रखने वाले हुमायूँ-पुत्र अकबर के आगे आगे चल कर महापराक्रमी राजकुमार भोज ने शत्रुओं को मार कर अकबर को प्रसन्न किया ॥ ९ ॥

**दृगञ्जनं वैरिवधूजनस्य पपौ रिपूणामतनोत् तमांसि ।**
**स्नेहस्य पात्रं समपूरयच्च प्रतापदीपोऽद्भुत एव यस्य ॥१०॥**

राजकुमार भोज का प्रताप रूपी दीपक अद्भुत है। वह शत्रु-स्त्रियों की आँखों के काजल को नष्ट कर देता है (वैधव्य में काजल नहीं लगाया जाता), शत्रुओं के लिये अन्धकार फैला देता है और प्रेम-पात्र मित्रों (की अभिलाषायें) पूर्ण किया करता है। (साधारण दीपक काजल उत्पन्न करता है, अन्धकार नष्ट करता है और तेल के पात्र को रिक्त कर देता है) ॥१०॥

**अभ्यर्णसंस्थाऽप्यनुरागपूर्णाऽप्यलं न साऽऽरोढुमभूत् तदङ्कम् ।**
**प्रतीक्षमाणाऽस्य महाभिषेकं कन्येव पाणिग्रहणं नृपश्रीः ॥११॥**

राज्यलक्ष्मी यद्यपि राजकुमार भोज के पास ही रहती थी और उनमें उसका पूर्ण प्रेम था तथापि वह उनकी गोद में बैठने में संकोच करती थी और इसके लिये उनके राज्याभिषेक की प्रतीक्षा कर रही थी, जिस प्रकार कोई कुमारी किसी व्यक्ति से पूर्ण प्रेम करती हो और उसके पास ही रहती भी हो, तो भी उसकी गोद में बैठने के लिये विवाह की प्रतीक्षा किया करती है ॥११॥

**श्रुत्वा कुमारस्य महाभिषेकतूर्यध्वनिं ताण्डवितं वितेनुः ।**
**जनाः प्रमोदेन यथा मयूरास्तपात्यये तोयदनादमत्ताः ॥१२॥**

राजकुमार भोज के राज्याभिषेक की सूचना देने वाले शहनाई के शब्दों को सुन कर लोग आनन्द से नाच उठे, जैसे ग्रीष्म के बाद वर्षा ऋतु में मेघों की गर्जना सुन कर मस्त मोर आनन्द से नाच उठते हैं ॥१२॥

**स्फुरद्विपञ्चीरणितं मनोज्ञं तिरोदधे दुन्दुभिघोरघोषः ।**
**यथा रतान्तर्मणितं वधूनां मञ्जीरकाञ्चीजनितो निनादः ॥१३॥**

नगाड़ों के गंभीर शब्दों ने बजती हुई वीणा के सुन्दर स्वरों को छिपा दिया, जैसे स्त्रियों के (संभोग के समय होने वाले) नूपुर (घुँघरू) और रशना (करधनी) के शब्द उनके रतिकूजित को छिपा देते हैं ॥१३॥

**नानादिगन्तादथ दन्तिमुख्यमुपायनीकृत्य पदार्थजातम् ।**
**सेवाविशेषं विशदी करिष्यंस्तस्थौ चिरं द्वारि नरेन्द्रलोकः ॥१४॥**

नाना देश विदेशों से आये हुये राजा लोग, उत्तम हाथी और अन्य विशिष्ट वस्तुओं को भेंट देकर, अपनी विशेष सेवा को प्रकट करने के लिये, बहुत देर तक द्वार पर खड़े रहे ॥१४॥

**प्रीत्या नृपस्योपरतस्य केचिद् वयस्यतामस्य विभाव्य केऽपि ।**
**भयेन भूपा मिलितास्तथाऽन्ये परे त्वनौचित्यनिवारणाय ॥१५॥**

कुछ राजा तो दिवंगत राव सुर्जन के प्रेम के कारण आये, कुछ राजा राजकुमार भोज के मित्र होने के कारण आये, कुछ राजा भय के कारण आये और कुछ अनौचित्य का निवारण मात्र करने के लिये एकत्रित हुये ॥१५॥

**सुपर्वसिन्धुप्रभृतीः स्रवन्तीः समुद्रमुख्यांश्च नदानुपेत्य ।**
**सरांसि पुण्यानि च पुष्करादीन्युपानयन् नीरमथाऽप्तभृत्याः ॥१६॥**

योग्य कर्मचारी गंगा आदि नदियों से, मुख्य मुख्य समुद्रों से और पुष्कर आदि पवित्र सरोवरों से (महाभिषेक के लिये) जल लाये ॥१६॥

**तत्रान्तरङ्गैर्गणकैर्गुणाढ्यैर्मुहुर्मुहूर्तं महितं विचार्य ।**
**उपक्रमे मङ्गलकर्मणोऽस्य सच्छ्रोत्रियाः स्वस्त्ययनं वितेनुः ॥१७॥**

घनिष्ठ सम्बन्ध वाले गुणवान् ज्योतिषियों से उत्तम मुहूर्त के विषय में बार बार विचार करके श्रेष्ठ कर्मकांडी विद्वान् राजकुमार के राज्याभिषेक के मंगल कार्य का प्रारंभ करने के लिये, स्वस्तिवाचन करने लगे ॥१७॥

**व्यासात्मजश्चक्रधरो धुरीणो धराभृतः कृत्यविधौ समग्रे ।**
**तातं पुरस्कृत्य पुरोऽवतस्थे जगद्धिते कर्मणि जागरूकः ॥१८॥**

संसार में हित करने वाले कर्मों में जागरूक तथा समस्त राजसंस्कारों में प्रवीण, वे राज-पुरोहित गोपाल व्यास के पुत्र चक्रधर व्यास, अपने पिता को आगे करके, राज्याभिषेक का सारा कार्य अपने तत्त्वावधान में करा रहे थे ॥१८॥

**तथेतरे तत्र रथन्तरज्ञा ब्राह्मं महः प्राज्यतमं दधानाः ।**
**तत्कालयोग्यानि जगुः समेताः सामानि सन्मङ्गलसाधनानि ॥१९॥**

अत्यन्त उत्कृष्ट ब्रह्मतेज को धारण करने वाले रथन्तर साम के विद्वान् एकत्रित होकर उस समय के योग्य, शुभ और मंगलकारी, सामवेद के मंत्रों को गाने लगे ॥१९॥

**उपात्तमाङ्गल्यमहौषधीकैस्तीर्थाम्बुपूर्णैः कलशैरशून्याम् ।**
**भोजोऽथ जाम्बूनदबद्धवेदिं जगाम विद्वानभिषेकभूमिम् ॥२०॥**

फिर विद्वान् भोज अभिषेक भूमि की ओर गये जहाँ सोने से जड़ी हुई वेदी बनाई गई थी और जहाँ सुवर्णकलश रक्खे हुये थे जिनमें विविध तीर्थों से लाये गये पवित्र जल भरे थे और मांग-लिक ओषधियाँ (वनस्पतियाँ आदि) पड़ी हुई थीं ॥२०॥

---

(१९) रथन्तरं सामवेदस्य गीतिभेदः।

**धाराऽथ वारां विशदाऽस्य मूर्ध्नि व्यरोचत स्फाटिककुम्भमुक्ता ।**
**पीयूषधारा मिहिकामयूखबिम्बात् पतन्तीव नगेशशृङ्गे ॥२१॥**

अभिषेक के समय भोज के ऊपर स्वर्णकलश से गिरने वाली पवित्र जलधारा, हिमालय के शिखर पर चन्द्रबिम्ब से गिरने वाली पीयूषधारा (किरणपुञ्ज की, अमृत के समान शीतल और सुखद प्रकाश धारा) के समान सुशोभित हो रही थी ॥२१॥

**तस्याऽभिषेकप्रभवानि तानि तोयानि शीतानि तनौ धृतानि ।**
**व्यसर्जयन् सुर्जनविप्रयोगजन्मानमुग्रं परितापमुर्वीम् ॥२२॥**

अभिषेक के समय भोज के शरीर पर गिरने वाले उन शीतल जलों ने पृथ्वी के, राव सुर्जन के वियोग से उत्पन्न , तीव्र सन्ताप को मिटा दिया ॥२२॥

**मनोनुकूले कुलवर्धनोऽसौ शुद्धे दुकूले विशदे वसानः ।**
**राजश्रियो लोचनलोभनीयमाशिश्रिये मण्डनमुच्छ्रितश्रीः ॥२३॥**

उत्कृष्ट शोभा वाले कुलवर्धन राजकुमार भोज ने मन के अनुकूल शुद्ध और स्वच्छ वस्त्र धारण किये और फिर राज्यलक्ष्मी के नेत्रों को लुभाने वाले आभूषण पहिने ॥२३॥

**यत्तर्जनीसङ्गविशेषिताऽसौ विशेषकश्रीर्नवनायकस्य ।**
**अतो बभूवाऽस्य ललाटसंस्था विपक्षलक्ष्म्याः किल तर्जनी सा ॥२४॥**

नये राजा राव भोज के ललाट पर जो तर्जनी (अंगूठे के पास की उँगली) से राजतिलक किया गया उसकी शोभा शत्रुओं की राज्य-लक्ष्मी के लिये तर्जनी (धमकाने वाली) वन गई ॥२४॥

**गोरोचनाकुङ्कुमपूर्णरागो भाले विशाले तिलकः कृतो यः ।**
**स एव मन्ये मनुजाधिपेऽस्मिन् जनानुरागाङ्कुरतां जगाहे ॥२५॥**

राव भोज के विशाल ललाट पर जो गोरोचन और केसर से रंगीन लम्बा राजतिलक किया गया मानों वही इस राजा में प्रजा के अनुराग का अंकुर वन गया ॥२५॥

**दधार दूर्वाङ्कुरचारुगुच्छं मङ्गल्यमेकं स निजोत्तमाङ्गे ।**
**दुर्वारदूर्वाङ्कुरदन्तुराणि हर्म्याणि हन्त द्विषतामभूवन् ॥२६॥**

राजा ने अपने मस्तक पर दूर्वादिल (कुश) का एक सुन्दर और मांगलिक गुच्छा धारण किया, किन्तु उसके कारण शत्रु राजाओं के महलों में बड़े बड़े दूर्वांकुर (दूब, कुश आदि घास फूस) उग गये अर्थात् शत्रु, भय से, अपने महल छोड़ कर, भाग गये और शून्य महलों में घास फूस उग गये ॥२६॥

**भद्रासनं भद्रकरः प्रजानां पट्टाम्बरस्त्रस्तरमारुरोह ।**
**यथोदयाद्रिं भृतधातुरागं तमोपनोदाय मयूखमाली ॥२७॥**

सुन्दर हाथ वाले और प्रजा से कोमल कर लेने वाले उदीयमान राव भोज रेशमी वस्त्रों से सुसज्जित सिंहासन पर प्रजा के दुःख रूपी अन्धकार को दूर करने के लिये, गेरु आदि धातुओं से सुशोभित उदयाचल पर्वत पर अन्धकार को नष्ट करने के लिये उदीयमान कोमल किरणों वाले सूर्य के समान, आरूढ़ हुये ॥२७॥

---

(२३) मण्डनमाभूषणम् ।

**सिंहासनं हेमकृतं कुमारः पट्टाम्बरस्रस्तरमारुरोह ।**
**स्फुटं यथा मानसजं सरोजं परागसान्द्रच्छवि राजहंसः ॥२८॥**

रेशमी वस्त्रों से सुसज्जित सुवर्ण-सिंहासन पर आरूढ़ भोज, मानसरोवर के पराग से सुशोभित कमल पर आरूढ़ राजहंस के समान सुशोभित हुये ॥२८॥

**छायां धरित्र्याः स्वतनौ विलग्नां विहाय भीतः किमु शीतभानुः ।**
**आगः प्रमार्ष्टुं तदिवातपत्रमिषाद् धरित्रीरमणं सिषेवे ॥२९॥**

भयभीत चन्द्रमा, अपने शरीर पर लगी हुई पृथ्वी की छाया को छोड़ कर, अपने इस अपराध की क्षमा माँगने के लिये, निष्कलंक छत्र के बहाने, क्या पृथ्वी-पति भोज की सेवा कर रहा था ? (किसी के शरीर पर पराई स्त्री की छाया पड़ना भी कलंक की बात है। पृथ्वी राजा की स्त्री है। उसकी छाया चन्द्रमा के शरीर पर पड़ी। इस अपराध की क्षमा माँगने के लिये मानों चन्द्रमा निष्कलंक छत्र बन कर राजा की सेवा कर रहा है। चन्द्रमा का धब्बा वास्तव में पृथ्वी की छाया ही है। छत्र निष्कलंक चन्द्रमा के समान शुभ्र और उज्वल है।) ॥२९॥

**तत्पार्श्वयोरायतमाप्तभृत्यैर्विधूयमानं विधुकान्तिगौरम् ।**
**प्रकीर्णकद्वन्द्वमुवाह शोभां तरङ्गयुग्मं किमु कीर्तिनद्याः ॥३०॥**

राव भोज के दोनों ओर योग्य अनुचरों द्वारा ढुलाये गये चन्द्रमा के समान शुभ्र और उज्वल चँवर कीर्ति रूपी नदी के दो उज्वल तरंगों के समान शोभित हो रहे थे ॥३०॥

**अपि प्रकृत्या विशदं सुवर्णैः संयोजितं तत्र विशेषविद्भिः ।**
**मुमोच तच्चामरयुग्ममस्य बालस्वभावान् न विलोलभावम् ॥३१॥**

यद्यपि वे चँवर स्वभाव से ही स्वच्छ थे और कुशल कारीगरों द्वारा सुवर्ण में कसे गये थे फिर भी बालस्वभाव (बालों से निर्मित; बचपन) होने के कारण उन्होंने चंचलता नहीं छोड़ी॥ ३१ ॥

**प्रणेमुरेनं नमितारिलोकमालोकशब्देन कृतावधानम् ।**
**सामन्तसार्थाः सहमन्त्रिमुख्यैस्तथा परे भूपतयः प्रतीताः ॥३२॥**

शत्रुवर्ग को झुकाने वाले राव भोज को, जिन्हें अनुचर लोग 'महाराज की जय हो; अमुक व्यक्ति आये हैं' इस प्रकार निवेदन कर सावधान कर रहे थे, मुख्य मंत्रियों के साथ सामन्त लोगों ने और अन्य विख्यात राजाओं ने प्रणाम किया ॥३२॥

**तं वन्दिनो नन्दितमित्रवर्गं नामान्वयज्ञा नमदाननेन्दुम् ।**
**गुणानगण्याननिशं गृणन्तः सन्तोषयामासुरसीमसत्वम् ॥३३॥**

कुल के नामों को जानने वाले और रात दिन राव भोज के असंख्येय गुणों को गाने वाले चारण भाटों ने मित्रवर्ग को प्रसन्न करने वाले, झुके हुये मस्तक वाले और महान् पराक्रमी राव भोज को सन्तुष्ट किया ॥३३॥

---

(३२) आलोकशब्देन 'जयतु देवः, आलोकयतु देवः' इति शब्देन।

**तस्मिन् महे सन्महसां द्विजानां समाजमभ्यर्च्य समाप्तकृत्यः ।**
**अव्याजमव्यग्रमनाः समग्रं वितत्य वित्तं विततार वेत्ता ॥३४॥**

राज्यतिलक के उस उत्सव के समय, कार्य समाप्त कर लेने पर शान्तचित्त राव भोज ने निश्छल भाव से महान् तेजस्वी ब्राह्मणों के समाज की पूजा की और फिर विपुल धन बाँटा ॥३४॥

**मान्यान् नरेन्द्राननुजीविनोऽथ मित्राणि बन्धून् गुणिनां गणांश्च ।**
**गजाश्वरत्नाम्बरभूषणाढ्यैः संभावयामास यथोचितं सः ॥३५॥**

राव भोज ने सम्मान्य राजाओं को, अनुचरों को, मित्रों को, बन्धुओं को और गुणी पुरुषों को उत्तम हाथी, घोड़े, रत्न, वस्त्र और आभूषणों द्वारा उचित रूप से सत्कृत किया ॥३५॥

**तं भीमसेनं रिपवो वदन्ति कर्णास्य जेतारमथार्ऽथिनो ये ।**
**धर्मप्रधाना धरणीभुजस्तु जानन्ति राजानमजातशत्रुम् ॥३६॥**

राव भोज को शत्रु लोग 'भीमसेन' (भयानक सेना वाला; भीमसेन के समान पराक्रमी) कहते थे; याचक गण उन्हें 'कर्णविजयी' (अपने दान से दानवीर कर्ण को जीतने वाला; अर्जुन) कहते थे; और धार्मिक राजा उन्हें 'अजातशत्रु' (जिनका कोई शत्रु उत्पन्न नहीं हुआ; युधिष्ठिर) समझते थे ॥३६॥

**विनीतदम्भं विनयेन नम्रोऽप्युच्चैःशिरस्त्वं न जहौ निजं सः ।**
**स्मितेन सिक्तान्यपि तद्वचांसि वज्रोपमानि द्विषतां सदाऽऽसन् ॥३७॥**

विनय से नम्र होने पर भी राव भोज ने दर्परहित स्वाभिमान के कारण अपना मस्तक ऊँचा ही रक्खा। उनके मुस्कान से मधुर वचन भी शत्रुओं के लिये सदा वज्रतुल्य होते थे ॥३७॥

**असावधृष्योऽपि नवाधिकाराज्जगन्मनोरञ्जनजागरूकः ।**
**प्रेमानुबन्धप्रवणैर्वचोभिः संभावयामास समग्रलोकम् ॥३८॥**

राव भोज ने, अधृष्य होने पर भी, नवीन अधिकार के कारण, सदा जनरञ्जन करने में सावधानी बरती और सदा स्नेहसिक्त वचनों से सब लोगों का सत्कार किया ॥३८॥

**अयं जनोद्वेगभयान्न राजा प्रचण्डभावं प्रकटीचकार ।**
**नवप्रभुत्वस्य पुनः स्वभावात् तमुग्ररूपं ददृशुः पुरस्थाः ॥३९॥**

प्रजा के उद्विग्न हो जाने के भय से राव भोज ने कभी प्रचण्ड भाव प्रकट नहीं किया; किन्तु पुरवासी लोग, नवीन प्रभुत्व के स्वभाव के कारण, उन्हें उग्र रूप में देखते थे ॥३९॥

**प्रभुप्रसादातिशयप्रमत्तैरकारि यैर्वाऽविनयोऽपि पूर्वम् ।**
**स तं वतंसो विशदाशयानां सस्मार न प्राक्तनसेवकानाम् ॥४०॥**

राव सुर्जन के उनसे अत्यन्त प्रसन्न रहने के कारण अभिमान में चूर जिन पुराने सेवकों ने पहले, जब भोज राजकुमार ही थे, इनके प्रति जो धृष्टता की थी उसे, उदार हृदयवाले लोगों के भूषण राव भोज ने कभी याद नहीं किया ॥४०॥

**विक्रान्तिराक्रामति न स्म नीतिं न ताञ्च नीतिः क्वचिदत्यशेत ।**
**विभज्य कालं द्वितयेऽपि विद्वान् साधारणीं प्रीतिमसौ दधार ।।४१।।**

राव भोज का पराक्रम न तो राजनीति को दबाता था और न उनकी राजनीति पराक्रम की उपेक्षा करती थी; वे दोनों में बराबर प्रीति रख कर पराक्रम और राजनीति दोनों से काम लेते थे ।।४१।।

**स्तोकप्रदाः केचन मानपूर्वं केचित् पुनस्तद्विपरीतकृत्याः ।**
**वित्तं प्रभूतं बहुमानताञ्च स एव वेदार्थिजनाय दातुम् ।।४२।।**

कुछ लोग दान तो थोड़ा देते हैं, किन्तु देते हैं सम्मानपूर्वक; और कुछ लोग दान बहुत देते हैं, किन्तु सम्मानपूर्वक नहीं देते; एक राव भोज ही थे जो याचकों को अत्यन्त सम्मान के साथ विपुल द्रव्य देते थे ।।४२।।

**उपेक्षिता ये क्षमया विपक्षाः पर्याप्तकृत्येन पुराऽस्य पित्रा ।**
**लीनश्चिरं चेतसि कालयोगात् तेषां ज्वरः प्राणहरो जजृम्भे ।।४३।।**

पहले इनके पिता राव सुर्जन ने अपने आप को कृतकृत्य मान कर क्षमा के कारण जिन शत्रुओं की उपेक्षा कर दी थी उन शत्रुओं के मन में चिर काल से दबा हुआ प्राण हरने वाला ज्वर अब काल के कारण प्रवृद्ध हुआ ।।४३।।

**प्रयात्ययं किन्नु मृगान् निहन्तुं किं वा सपत्नानिति संशयालोः ।**
**यानोन्मुखे कौतुकतोऽपि यस्मिन् पुरं वनं वा न सुखाय शत्रोः ।।४४।।**

जब राव भोज कुतूहलवश चलते थे तब, यह निश्चय न कर पाने के कारण कि भोज शिकार के लिये जा रहे हैं या शत्रुओं पर आक्रमण करने जा रहे हैं, शत्रुओं के लिये न तो नगर में शान्ति थी और न वन में ।।४४।।

**चापं समारोपितशिञ्जिनीकं सनाथयत्यस्य करे कदापि ।**
**स्वावासभूमौ परिवृत्तिमीयुः परस्परं वन्यमृगाः परे च ।।४५।।**

जब राव भोज अपने हाथ में प्रत्यंचा चढ़ा हुआ धनुष ले लेते थे तब वन के प्राणी और शत्रु; परस्पर निवास स्थानों का विनमय कर लेते थे अर्थात् शत्रु वन में भाग जाते थे और वन के जानवर शून्य नगर में चले आते थे ।।४५।।

---

(४१) कालिदासैरप्युक्तं रघुवंशे—'कातर्यं केवला नीतिः शौर्यं श्वापदचेष्टितम्। अतः सिद्धिं समेताभ्यामुभाभ्यामन्वियेष सः।।' इति।

**जिष्णुः स्फुरद्वैरिवरूथिनीनां दुरात्मनां दण्डधरः खलानाम् ।**
**मित्रे प्रचेता धनदोऽर्थिवर्गे चतुर्दिगीशः स बभूव वीरः ॥४६॥**

चारों दिशाओं के स्वामी वीर राव भोज उद्धत शत्रु सेनाओं के लिये 'जिष्णु' (विजयशील; इन्द्र) थे; कुबुद्धि वाले दुष्टों के लिये 'दण्डधर' (दमन करने वाले; यमराज) थे; मित्रों के लिये 'प्रचेता' (प्रसन्न चित्त वाले; वरुण) थे; और याचकों के लिये 'धनद' (धन देने वाले; कुबेर) थे। (इन्द्र पूर्व के, यम दक्षिण के, वरुण पश्चिम के और कुबेर उत्तर के स्वामी हैं) ॥४६॥

**नवप्रभोस्तस्य नवं निदेशं नोष्णीषयामास मदान्नृपो यः ।**
**उष्णीषमायोधनसीम्नि तस्य मस्तिष्कलुब्धो विनिनाय गृध्रः ॥४७॥**

नवीन राजा भोज के नवीन आदेश को जिस किसी राजा ने दुर्मद के कारण अपनी पगड़ी पर नहीं चढ़ाया, उस राजा की पगड़ी को, युद्धस्थल में, मस्तिष्कलोभी गिद्ध हटाता था ॥४७॥

**और्वायितं शरणमम्बुनिधिं गतेषु दावायितं विततकाननमाश्रितेषु ।**
**वज्रायितं शिखरिसानुसनाथितेषु तस्योर्जितेन महसाऽरिमहीश्वरेषु ॥४८॥**

राव भोज के महान् पराक्रम के कारण उनके शत्रु-राजाओं को कहीं भी शान्ति नहीं थी—यदि वे समुद्र की शरण लेते थे तो भोज का प्रताप वहाँ वड़वानल बन जाता था, यदि वे वन की शरण लेते थे तो भोज का प्रताप वहाँ दावानल बन जाता था और यदि वे पर्वतों के शिखरों की शरण लेते थे तो भोज का प्रताप वहाँ वज्र बन जाता था ॥४८॥

**दिक्पालोद्रिक्तदन्तावलबहलचलत्कर्णतालान् विलुम्प-**
**न्नावृण्वन् व्योमनद्या निरतिशयरयं स्फारधाराविरावम् ।**
**रुन्धानोऽरुन्धतीशप्रभृतिसुरमुनिस्तोमसञ्चारधाम**
**प्रोद्दामो यस्य यात्रासमयसमुचितो जृम्भते तूर्यनादः ॥४९॥**

राव भोज की विजययात्रा के समय के उचित जो शहनाइयों का प्रचंड घोष होता था वह दिक्पालों के मदोत्कट दिग्गजों के वेग से फड़फड़ाये गये कानों को फाड़ता था, तथा स्वर्गगंगा के भयंकर शब्द करने वाले विस्तृत धाराप्रवाह के कोलाहल को भी ढक देता था और वसिष्ठ आदि सप्तर्षियों के चलने के मार्ग को (आकाश को) रोक देता था ॥४९॥

**अव्यग्रोदग्रवल्गत्तुरगखरखुरक्षोदितक्षोणिपृष्ठ-**
**स्पष्टप्रोद्धूतधूलीनिवहकवलितव्योमवीथिप्रदीपः ।**
**भेरीभाङ्कारभीमैः पटुपटहरवाडम्बरैरम्बरान्तं**
**यो भिन्दन्नाजिभूमौ रिपुनृपतिचमूचक्रमाक्रामति स्म ॥५०॥**

राव भोज युद्धभूमि में अपने अव्याकुल तथा जोरों से उछलने वाले घोड़ों के तीक्ष्ण खुरों से खोदी गई भूमि से स्पष्ट उठे हुये धूलसमूह के कारण सूर्य को भी ढक कर, और नगाड़ों और ढोलों के भयंकर घोषों से आकाश को भेद कर, शत्रुराजाओं के सेनामंडल पर आक्रमण करते थे ॥ ५० ॥

**आलोकादेव लोकान् कवलयितुमिव प्रोद्यता तीव्रवेगा ।**
**दुष्टक्ष्मापालवक्षःक्षतजरसवसाकर्दमोद्दामरूपा ।**
**कल्पान्तक्रूरकालीविलुलितरसनासन्निभा शत्रुसैन्यै-**
**रुन्नीता यस्य नेतुः समरभुवि करक्रोडगा खड्गवल्ली ॥५१॥**

युद्धभूमि में राव भोज के हाथ में सुशोभित तलवार को शत्रु-सैनिक, अपनी चमक से ही लोगों को खा जाने के लिये उद्यत, तीव्र वेग वाली तथा दुष्ट राजाओं के वक्षःस्थल के रुधिर, मांस और चर्वी रूपी कीचड़ में सनी हुई प्रलय काल में क्रूर काली माई की लपलपाती हुई जीभ के समान मानते थे ॥५१॥

**कांश्चिद् व्यालोलबालव्यजनपवनवत् प्रागनैषील्लघुत्वं**
**कांश्चित् त्रस्तान् कुरङ्गानिव गुरुकृपया पालयामास बालान् ।**
**दृप्तानन्यान् मृगेन्द्रानिव शरनखरैर्भिन्दतः कुम्भिकुम्भा-**
**नद्धा बद्धावधानः प्रशममगमयत् क्रूरशस्त्रेण शास्ता ॥५२॥**

कुशल शासक राव भोज ने कुछ राजाओं को तो पहले ही चंचल बालों वाले चँवरों के वायु के समान लघु बना दिया था; कुछ बालक राजाओं की, जो भयभीत हिरणों के समान शरण में आये, उन्होंने बड़ी कृपा से पालना की; और कुछ अन्य राजाओं को, जो अभिमानी सिंहों के समान अपने बाणरूपी नखों से हाथियों के गण्डस्थलों को छिन्नभिन्न कर रहे थे, उन्होंने सावधान होकर अपने तीक्ष्ण शस्त्र से झट शान्त कर दिया ॥५२॥

**धावन्तो ये मदान्धा वनकरिण इवोत्क्षिप्तहस्ताः प्रहर्तुं**
**तेषामुच्छिद्य सद्यः समरभुवि शिरः कीर्तिमुक्तां जहार ।**
**व्यावल्गद्वल्गुखड्गैरदयमदलयत् तीक्ष्णखड्गान् सवेगान्**
**सैन्यारण्ये रिपूणां मुहुरिति मृगयानैपुणं निर्ममन्थ ॥५३॥**

शत्रुसेना रूपी वन में राव भोज ने फिर अपना शिकार-कौशल प्रकट किया—जो मदान्ध शत्रु मदोत्कट जंगली हाथियों के समान अपने हाथ (सूँडें) उठा कर प्रहार करना चाहते थे उनके मस्तकों को युद्धभूमि में शीघ्र काट कर कीर्ति रूपी गजमोती ले लिये; और गेंडों के समान तीक्ष्ण खड्ग वाले तथा वेग से प्रहार करने वाले शत्रुओं को अपनी उछलती हुई टेढ़ी तलवार से निदयतापूर्वक काट दिया ॥५३॥

---

(५३) तीक्ष्णखड्गान् प्रखरकृपाणयुतान् गण्डकांश्च ।

**सुह्माः सङ्ग्रामजिह्माः सपदि दिशि दिशि प्राप्तभङ्गाश्च बङ्गाः**
**वैदर्भा न्यस्तदर्भा निजदशनमधि त्रस्तदेहा विदेहाः ।**
**त्रैगर्ताः प्राप्तगर्ता ययुरथ विकला मालवाः कालबाधां**
**गान्धारास्तीक्ष्णधाराहतिचकितधियः सिन्धुपारं प्रयाताः ॥५४॥**

राव भोज के पराक्रम को देख कर सुह्म लोग युद्ध से विमुख हो गये और बङ्ग देश के लोग शीघ्र हार कर इधर उधर भाग गये। विदर्भ देश के लोग अपने दाँतों में तिनके ले लेकर शरण में आये। विदेह देश के लोगों के शरीर ढीले पड़ गये। त्रैगर्त लोग (विपद्) गर्त में गिर गये। मालव देश के लोग व्याकुल होकर कालबाधा को प्राप्त हो गये और गन्धार देश के लोग राव भोज की तेज तलवार के प्रहारों स चकित होकर सिन्धु के पार चले गये ॥५४॥

**पण्डा मण्डाख्यदुर्गस्थितधरणिभुजो दत्तसर्वस्वदण्डा**
**वन्ध्याः संध्यानखण्डादपि लघिमधृतः केपि विन्ध्याद्रिसंस्थाः ।**
**अन्ये मन्ये विलीनाः क्वचन विदधतो हन्त वन्येन वृत्ति**
**यस्योदग्रे रणाग्रे स्फुरति जितहरिन्मण्डले मण्डलाग्रे ॥५५॥**

राव भोज की दिशाओं के मंडल को जीतने वाली तीक्ष्ण तलवार के युद्ध में चमकने पर मंड नामक दुर्ग में रहने वाले राजा सर्वस्व दंड देकर निवीर्य हो गये, विन्ध्य पर्वत में रहने वाले कोई कोई राजा हलके (तुच्छ) बन कर जरा भी ध्यान में न रह सके (अत्यन्त व्यग्र हो गये) और अन्य राजा, हमारे विचार से, वन्य वृत्ति धारण करके इधर उधर विलीन हो गये ॥५५॥

**पिण्डीभूततुषारपाण्डरतरे यस्यानुविन्ध्यं यशः-**
**स्तोमे किन्नरकामिनीभिरभितः प्रोद्गीयमाने मुदा ।**
**प्रालेयाचलशङ्कया पितृगृहावासाय बद्धस्पृहा**
**शैलेन्द्रं तमपोहितुं न सहते मन्ये नगेन्द्रात्मजा ॥५६॥**

विन्ध्याचल पर्वत पर चारों ओर किन्नरकामिनियाँ राव भोज के शुभ्र यश को प्रसन्नता से गाती हैं, अतः वह शुभ्र यश बर्फ के समान श्वेत और पिण्डीभूत बन कर विन्ध्याचल पर चारों ओर छा गया है। हमारी समझ में यही कारण है कि नैहर में रहने की इच्छुक भगवती विन्ध्यवासिनी पार्वती इस विन्ध्याचल को हिमालय समझ कर यहाँ से हटना नहीं चाहतीं ॥५६॥

**तीर्त्वा सप्तापि तावद् विततजलनिधीन् सप्तलोकानुपेत्य**
**क्रान्त्वा पातालभूमीरतनुरयवशादक्रमात् सप्तसंख्याः ।**
**गन्तुं ब्रह्माण्डभाण्डाद् बहिरथ विवरं क्वापि नासादयन्ती**
**सङ्कीर्णेप्यस्य कीर्तिस्त्रिभुवनभवने स्थैर्यमालम्बते स्म ॥५७॥**

राव भोज की कीर्ति सातों विस्तृत समुद्रों को तैर गई, सातों लोकों में फैल गई और सातों पातालों को बड़े वेग से पार कर गई; इस प्रकार सारे ब्रह्माण्ड में चक्कर लगाने पर भी जब उसे बाहर जाने का कोई मार्ग नहीं मिला तो वह इस संकीर्ण त्रिभुवन में ही स्थिर हो गई ॥५७॥

---

(५५) पण्डाः निर्वीर्याः। संध्यानखण्डात् स्वल्पध्यानादपि वंध्याः अतीव व्यग्रा इत्यर्थः ।

**न श्यामा न च सञ्चरेन्मृदुपदं क्षामोदरी नाप्यसौ**
**निन्दन्तीव कलाभृतं वितनुते नग्नस्य कण्ठग्रहम् ।**
**प्रागल्भ्यात् कुलभूभृतामपि शिरांस्याश्रित्य नृत्यत्यहो**
**तस्याभूत् तदपीयमद्भुतरुचेः कीर्तिः परा प्रेयसी ।।५८।।**

यद्यपि कीर्ति न तो नवयुवती है, न वह मन्द सविलास चाल से चलती है, न वह पतली कमर वाली है, वह कलाधर (कला वाले पुरुष; चन्द्रमा) की निन्दा करती है (अर्थात् उसने अपनी कान्ति से चन्द्रमा को हीन बना दिया है), वह नंगे (शिव जी) के गले से लिपट रही है और उसका दुःसाहस इतना अधिक है कि वह कुल के राजाओं (कुलाचल पर्वतों) के मस्तक पर चढ़ कर नाच रही है, तथापि आश्चर्य है कि अद्भुत रुचि वाले राव भोज की यह कीर्ति ही सबसे बड़ी प्रेयसी है ! ।।५८।।

**बाले व्यालस्तवाग्रे दलय बलयुते कण्टकान् दृष्टकेशान्**
**मन्दे मन्दप्रयाणं त्यज हतहृदये लग्नमर्चिर्निचोले ।**
**द्रागुद्विग्ना दवाग्नेः प्रथममथ पुरः सञ्चरिष्णोः प्रतापात्**
**कान्तारे मुक्तकान्ता मुहुरिति जगदुर्यस्य विद्वेषिकान्ताः ।।५९।।**

राव भोज के शत्रुओं की स्त्रियाँ अपने पतियों से वियुक्त होकर वनों में भटकती हुई पहले तो राव भोज के आगे चलने वाले प्रताप से और फिर दावानल से व्याकुल होकर एक दूसरे से इस प्रकार कहा करती थीं—बाले ! तेरे आगे साँप है (जरा बच कर चल); अरी तुझमें अभी तो कुछ बल है ! अपने इन बालों में उलझे हुये काँटों को तो हटा ले; मन्द बुद्धि वाली ! जरा जल्दी जल्दी चल; अभागी ! तेरी चोली में आग लग गई है, इसे जल्दी से बुझा ।।५९।।

**भ्राम्यन्ती वनसीम्नि वैरितरुणी जीर्णात् कदाचिद् गुणात्**
**स्रस्तानि स्तनमौक्तिकानि विततान्यादातुकामा द्रुतम् ।**
**चिन्वाना बदराणि यस्य नृपतेः कीर्त्या दधत्यच्छतां**
**वन्याभिर्विनिवार्यते युवतिभिः साक्षेपवाग्डम्बरैः ।।६०।।**

वन में भटकने वाली किसी शत्रु-युवती के स्तनों का हार-सूत्र टूट गया और उसके बड़े बड़े मोती नीचे बिखर गये, तब वह शीघ्र उनको उठाने के लिये झुकी, किन्तु भ्रमवश, बजाय मोतियों के, राव भोज की कीर्ति से श्वेत बने हुये बेरों को उठाने लगी और उस समय वन की स्त्रियों ने आक्षेपपूर्ण वचनों से उसे मना किया ।।६०।।

**आत्मानं त्रिषु विष्टपेषु परितस्त्रेधा विभज्य स्वयं**
**तन्वन् दिक्षु दशस्वपि स्थितिमतीरन्याश्च मूर्तीर्दश ।**
**क्लृप्तद्वादशमूर्तिमुष्णमहसं निर्जेतुमुत्कण्ठितः**
**शङ्के संववृते त्रयोदशतनुर्यस्य प्रतापोच्चयः ।।६१।।**

बारह मूर्तियों वाले सूर्य को (द्वादश आदित्यों को) जीतने की उत्कंठा के कारण ही मानों राव भोज के प्रताप ने अपने आप को तीनों लोकों में और दसों दिशाओं में बाँट कर अपनी तेरह मूर्तियाँ बनाईं ।।६१।।

**गोपायत्वतिमत्सरो निजगणैर्वित्तानि वित्ताधिपो**
**यत्नेनावृणुतामगाधसलिले रत्नानि रत्नाकरः ।**
**दानायोद्यमभाजि भोजनृपतौ को वा भवेद् दुर्विधो**
**धारावाहिकया धरैव हि धनान्यावर्जयत्यर्थिने ॥६२॥**

भले ही कुबेर अत्यन्त ईर्ष्यावश अपने यक्षों से अपने कोश की सुरक्षा करायें और भले ही समुद्र अपने रत्नों को प्रयत्नपूर्वक अपने अगाध जल में छिपा ले, फिर भी राव भोज के दान देने के लिये उद्यत होने पर कोई दरिद्र नहीं रह सकता क्योंकि (राजा की पत्नी) वसुन्धरा ही (अपने पति को दानोद्यत देख कर मानों उनका अनुकरण करने के लिये) स्वयं धाराप्रवाह रूप से याचकों को धन दे रही है ॥६२॥

**इत्थं सोऽवहितो रणे वितरणे सम्यक् प्रजापालने**
**लक्ष्मीमुज्वलयन् कुलस्थितिकरीं कीर्तिञ्च जङ्घालयन् ।**
**दिल्लीशेन पुरस्कृतः परिवृतो रत्नादिभिर्नन्दनै-**
**रध्यास्ते चरणाद्रिमादृतबुधो वृन्दावतीनायकः ॥६३॥**

इस प्रकार युद्ध में, दान देने में और प्रजा का भलीभाँति पालन करने में सावधान, दिल्ली सम्राट् अकबर द्वारा सम्मानित, विद्वानों का आदर करने वाले, सुन्दर रत्नादि समृद्धि से युक्त और अपने राव रतन आदि राजकुमारों से सुशोभित, वृन्दावती (बूंदी) के राजा भोज, अपनी लक्ष्मी को उज्वल बनाते हुये और अपने कुल को स्थित करने वाली कीर्ति को वेग से बढ़ाते हुये, चरणाद्रि (बूंदी के समीप स्थित अरावली पर्वत की शाखा) में रह कर सुशासन कर रहे हैं ॥६३॥

**गौडीयः किल चन्द्रशेखरकविर्यः प्रेमपात्रं सता-**
**मम्बष्ठान्वयमण्डनात् कृतधियो जातो जिताऽमित्रतः ।**
**निर्बन्धान् नृपसुर्जनस्य नितरां धर्मैकतानात्मनो**
**ग्रन्थोऽयं निरमायि तेन वसता विश्वेशितुः पत्तने ॥६४॥**

अम्बष्ठ कुल के भूषण विद्वान् जितामित्र के पुत्र और सज्जनों के प्रेमपात्र गौडीय चन्द्रशेखर कवि ने भगवान् विश्वनाथ की काशी पुरी में रह कर, महान् धर्मात्मा राव सुर्जन के अनुरोध से, इस महाकाव्य का निर्माण किया ॥६४॥

इति सुर्जनचरितमहाकाव्ये विंशतितमः सर्गः ।



समाप्तमिदं सुर्जनचरिताख्यं महाकाव्यम् ।

**शुभं भूयात्**

---

(६२) दुर्विधो दरिद्रः। धरा पृथ्वी नृपजायारूपा पत्यौ दानोद्यते सति स्वयमेव तद्व्रतमनुपालयन्ती धनानि ददौ इत्यर्थः।

(६३) दिल्लीशेन अकबरेण। रत्नादिभिः मणिहीरकादिभिः रावरत्नाख्यादिभिः स्वपुत्रैश्च। चरणाद्रि बूंदीनगरीसमीपस्थं अरावलीपर्वतम्।